शास्त्रकल्पवल्याः प्रथमा मञ्जरी.

श्रीरस्तु.

# न्यायकुसुमाञ्जलिः

न्यायचार्यपदाङ्कितैः श्रीमदुदयनाचार्यैर्विरचितः



चिट्टिगूडूरुनरसिंहसंस्कृतकलाशालायां न्यायालङ्कारप्रधानाध्यापकैः

ब्रह्मश्रीयुत - कोल्लूरु - सोमशेखरशास्त्रिभिर्विरचितया

'आमोद' समाख्यया व्याख्यया समुद्भासितः।



पं- भागवताचार्यशिरोमणिना निबद्धया विषमस्थल

टिप्पण्या समलङ्कृतः।



तिरुपतिनगरसंस्थापितया कुसुमाञ्जलिसमित्या
प्रकाशं नीतः।



श्रीव्यासमुद्रणालये मुद्रितः

ति रु प ति.

१९४०



मूल्यम् ]

# समितेरावेदनम्.



भो भो महाशयाः !

विश्वविख्यातां 'श्रेयांसि बहुविघ्नानी' ति नीतिमनुरुध्य सत्कर्मानुबन्धिनीभिरतिनिष्ठुराभिर्मानुषीभिरमानुषीभिश्चाऽन्तरायपरम्पराभिरतितरामाम्लापिता, नाम्नैवातिसुकुमारा 'कुसुमाञ्जलिसमिति' रियं, श्री श्रीनिवासकरुणार्द्रविमलशीतलवीक्षिकावीचिकाभिः कथञ्चिल्लब्धावबोधा, विद्यार्थिलोकोपयोगिनो गैर्वाणग्रन्थरत्नसमुच्चयस्य प्रकाशने कृतसङ्कल्पाऽऽध्यादौ नाम्नेव शुभाशंसिनो न्यायशास्त्रजीवातोरास्तिक्यसारस्य 'न्यायकुसुमाञ्जले' ग्रन्थरत्नस्य मुद्रणमुचितमिति तन्नाम्नैव कृतसङ्केता सती, ब्रह्मश्रीयुत–को-सोमशेखरशास्त्रिवर्यैः सानुकम्पं विरच्य वितीर्णया 'आमोद' समाख्यया व्याख्यया, तथा पं-श्रीभागवताचार्यशिरोमणिभिः प्रणीतया विषमस्थलटिप्पण्या च संयोज्य बहुजनसाहाय्येन कृतिमिमां कथमपि सफलामकार्षीदीश्वरानुकम्पया । अस्मिन् महत्युद्यमे मनोवाक्कायैरत्यन्तमुपकृतवतां समितिः कृतज्ञतापुरस्सरं नतिततीः समर्पयति.

इत्थं,

पं. श्री. रामनारायणाचार्यस्वामी, अध्यक्षः. | कुप्पा-वेङ्कटप्पशास्त्री, शिरोमणिः कार्यदर्शी.

---

## MEMBERS OF THE KUSUMANJALI SAMITI.

1. Pushkaram - Sridharacharya, Khandal
   Sri Ramavaikunta mutt, Pushkar.
2. Udali - Subbaramaiah,
   Pallapalli ( Nellore Dt. )
3. Killattur - Srinivasacharya,
   Mukkur. ( North Arcot Dt. )
4. W. Venkatanarasiah,
   Dendigunta. ( Nellore Dt. )
5. P. Bhagavatacharya, Sastri and Siromani,
   Narangi, Yogasram, Kulva Dt. (Bombay Py)

॥ श्रीः ॥

## विदुषामभिसन्धयः

निश्चप्रचमेवैतद्विपश्चिदपश्चिमानां यत्किलाऽधुनोपलभ्यमानेषु न्यायग्रन्थेषु श्रीमदुदयनाचार्यप्रणीतोऽयं न्यायकुसुमाञ्जलिरग्रस्थानमलङ्करोतीति । सोऽयमतिनिगूढभावभरिततया व्याख्यानसापेक्ष इत्यतिरोहितमेतत् । यद्यप्यस्य वर्धमानोपाध्यायप्रभृतिभिः प्रकाशादीन्युपनिबद्धान्येव व्याख्यानानि, तथापि तेषामतिविपुलशास्त्रार्थत्वान्मूलापेक्षया दूरूहान्येव सम्पन्नान्याधुनिकानाम्। अतश्च मूलानुसार्येकं टिप्पणमपेक्षितमस्य ग्रन्थस्य । एवं स्थिते श्रीसोमशेखरशास्त्रिभिरामोदसमाख्यमेकं टिप्पणमुपनिबद्ध्य मत्समीपे प्रेषितमवलोकितञ्च । तदिदं टिप्पणमाधुनिकानामन्तेवासिनामत्यन्तोपकारकं भविष्यतीति सप्रश्रयमावेदयति ।

पिठापुरम्
१–७–१९४०

श्रीपाद - लक्ष्मीनृसिंहशास्त्री
श्रीपीठिकापुरसंस्थानन्यायशास्त्रपण्डितः ।

---

सुमहानयमविस्मरणीयः सम्प्रसादः शिरोमणिपरीक्षायाः यत् ततः पूर्वं विस्मृतप्रायाः, अमूल्याश्च बहवो ग्रन्थाः तत्र पाठ्यत्वेन निर्दिष्टाः प्रचारपदवीमधिरोपिताः । तेषामन्यतमो न्यायकुसुमाञ्जलिनामको ग्रन्थः; यः खलु नैयायिकेष्वनन्यगामिनमाचार्यशब्दं प्रकृष्टतमं स्थानविशेषञ्चाप्युपगतेनोदयनार्येण विरचितः । पूर्वकर्तृकाणि तदीयव्याख्यानानि मूलग्रन्थादपि प्रौढतराणि नात्यन्तमुपकुर्वन्ति पङ्क्तिसमन्वयमपेक्षमाणानाम् । एतादृशानामुपकारायैव प्रवृत्तमिदं टिप्पणमस्मदीयकलाशालायां न्यायालङ्कारपण्डितैः श्रीमद्भिः सोमशेखरशास्त्रिभिः प्रणीतम् । आधुनिकेषु प्रथमतया कुसुमाञ्जलिसमन्वयप्रकारमात्मनः प्रदर्शितवन्त इमे नूनमभिनन्दनीयाः । तत्त्वबुभुत्सवः पण्डितवरेण्याः टिप्पणस्यास्य गुणानिव दोषानपि प्रदर्श्य न्यायकुसुमाञ्जलिपाठपरिशुद्ध्यै प्रयतन्तामिति प्रार्थयते ।

श्री नारसिंहसंस्कृतकलाशाला
चिट्टिगूडूरु
१५–७–१९४०

बुधजनविधेयः,
श्री - ति - गु - वरदाचार्यः,
( Principal )

## व्याख्यातुरावेदनम्

विदितचरमेवैतत्सर्वेषामपि विदुषां यत्किल जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुर्भगवानक्षपादोऽष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षकीं प्रणिनायेति । तत्र च प्रमाणप्रमेययोः स्वरूपसंवेदनमन्तरा दुःखपङ्कादुद्धारो दुःशक एवेति मत्वा तदेवादावसूत्रयत् – 'प्रमाणप्रमेये' त्यादिना । तदेतत्सूत्रजातमवलम्ब्य भाष्य, वार्तिक, तात्पर्यटीकापरिशुद्ध्यादयो बहवो न्यायग्रन्थाः प्रवृत्ताः । पश्चात् गते महति काले गङ्गेशोपाध्यायः प्राचीनपद्धतिमनुरुन्धान एव तत्र तत्र नवीनां सरणिमङ्गीकृत्य चिन्तामणिनामकं ग्रन्थराजमुपनिबबन्ध । तमवलम्ब्य दीधितिप्रभृतयो बहवो नव्यन्यायग्रन्थाः प्रादुर्भूताः । एवं स्थिते प्राचीनन्याये नव्यन्याये चाऽनितरसाधारणपाण्डित्यपरिकलितः सर्वैरपि विद्वद्भिः परमप्रामाणिकतयाऽभ्युपगतोऽयमुदयनाचार्यः स्वीयन्यायपाण्डित्यस्येश्वरमननरूपतासम्पादनेन साफल्यमापादयितुकामः – 'न्यायचर्चेयमीशस्य मननव्यपदेशभाक् । उपासैनैव क्रियते श्रवणानन्तरागते' त्यादिना स्वाशयं मुक्तकण्ठमुद्घोषितवान् । अनेन च पण्डितप्रवरेणोपनिबद्धेष्वपि बहुषु प्रबन्धेषु तेषां 'न्यायकुसुमाञ्जलि' रेव प्रकृष्टो ग्रन्थ इति तदीयप्रचुरप्रचारेण निश्चेतुं शक्यते । अयं चोदयनाचार्यः कस्मिन् काले कस्मिन् देशे कस्य राज्ञः सभामलञ्चकारेत्यादिकमन्यत्रान्यैर्विचारितमिति नेह प्रस्तूयते। अयं च कुसुमाञ्जलिग्रन्थः प्रमाणतर्काभ्यामीश्वरप्रतिपादनपरो ग्रन्थकारस्य पाण्डितीप्रकर्षमुद्घुष्यन्नातिसंकुचितगूढाभिसन्धितया व्याख्यानसापेक्ष इति पुरातनैरेवोपनिबद्धानि कतिचन व्याख्यानानि । तथापि 'ह्रासदर्शनतो ह्रासः' इति मूलकारोक्तनयेन तत्साहाय्येनाऽपि मूलार्थनिर्णयः क्लेशेनैव सम्पद्यते आधुनिकानाम् । सर्वमेवेदमाकलय्य, अल्पाऽल्पधिषणेनापि मया विनेयेच्छामनुरुन्धानेनाऽनायासेन मूलग्रन्थस्यार्थनिर्णयो भूयादितीदं टिप्पणमुपनिबद्धम् । यद्यपि ग्रन्थस्य सुमहत्त्वात्, बुद्धेरल्पत्वात्, देहस्य दुर्बलत्वात्, व्यासक्ततया चित्तस्य कार्यान्तरेषु, प्रायेणाऽत्र प्रमादानामस्त्यवकाशः । तथापि यदि सहृदयाः सम्यगाकलय्य तत्तत्प्रमादस्थानानि सदयमुपदिशेयुस्तानुपदेशान् सबहुमानमङ्गीकृत्य मुद्रणान्तरे शोधयामीत्यावेदयति सङ्ग्रहेण ।

नरसिंहसंस्कृतकलाशाला,
चिट्टिगूडूरु.
२८ · ६ - १९४०.

सुजनविधेयः
कोल्लूरु – सोमशेखरशास्त्री.

# शोधनिका.

| पुटे. | पङ्क्तौ. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | **प्रथमस्तबके –** | |
| ३ | १९ | धर्मिण | धर्मिणि |
| ५ | ५ | कार्यत्वदेः | कार्यत्वादेः |
| ,, | ८ | तनिराकरण | तन्निराकरण |
| ,, | १५ | स्वकार्यापेक्षया | स्वकारणापेक्षया |
| ८ | १८ | रिक्तकारणत्वं | रिक्ते कारणत्वं |
| ,, | २० | सिद्धावन्वय | सिद्धान्वय |
| ,, | २२ | मुपादाय | मनुपादाय |
| २० | १५ | नुष्ठानागोचरेण | नुष्ठानगोचरेण |
| ,, | २३ | पदेशन | पदेशेन |
| २२ | २ | स्वकारात् | स्वीकारात् |
| २५ | १० | तत्र किञ्चित्कर | तत्राकिञ्चित्कर |
| २८ | २३ | आधय | आधेय |
| २९ | ५ | यथाभूतैः | तथाभूतैः |
| ३४ | ४ | भेदप्रहात् | भेदाग्रहात् |
| ४० | १६ | शिंशुपान्तर | शिंशुपावान्तर |
| | | **द्वितीयस्तबके –** | |
| ५ | ६ | लिङ्ग | लिङ्गं |
| ८ | १६ | हीनफलो | हीनबलो |
| ९ | १७ | विशेष्यम् | विशेषणम् |
| १५ | २ | गगन | गमन |
| १९ | १५ | इति । सुष्ठु | इति सुष्ठु |
| २० | १ | स्यापोधे | स्योपाधे |
| २४ | ६ | अहारेत्रिस्य | अहोरात्रस्य |
| २७ | २ | स्त्वन्थापीति | स्त्वन्यथापीति |
| ३२ | २ | देशेनैव | देशनैव |
| | | **तृतीयस्तबके –** | |
| १ | १० | दाध्य | दाय |
| ९ | २२ | कत्ममेव | कत्वमेव |
| ,, | २५ | योद्वेदा | योच्छेदा |
| २५ | २२ | पदप्रवृत्ति | पदाप्रवृत्ति |
| ३४ | १ | श्रुत्वत्र | श्रुत्वैव |
| ,, | २४ | षेयत्य | षेयत्व |
| ४४ | १९ | व्याप्यस्य | अव्याप्यस्य |
| ४६ | ४ | व्यधिकरेण | व्यधिकरणेन |
| ,, | २४ | पत्तेरुप | पत्तिरुप |
| ५२ | २६ | भात्रि | भात्र |
| | | **चतुर्थस्तबके –** | |
| १ | ७ | प्रमाणत्र | प्रामाण्य |
| | | **पञ्चमस्तबके –** | |
| ३ | २५ | शरीराज | शरीरज |
| १२ | २३ | हनि | हानि |
| २४ | ७ | युज्यते | प्रयुज्यते |
| २७ | ९ | बुद्धयप | बुद्धयुप |
| ३१ | २१ | मुपेक्ष्य | मपेक्ष्य |
| ३३ | १७ | स्मिन्नैव | स्मिन्सैव |
| ३६ | २२ | युक्तय | युक्तय |
| ४० | १६ | प्रतीत्य | प्रतीत्या |
| ,, | २० | विषयकहेतुः | विषयकयत्नहेतुः |
| ४२ | १५ | वक्तुं नश | वक्तुं श |
| ४४ | १९ | कार्यत्वेन | कार्यत्वेन |
| ५६ | २५ | समाख्या | संख्या |
| ५७ | ८ | तासमा | तत्समा |

श्रीहरिः

# औदयनचरितम् .

'पुराणमितिहासश्च तथाख्यानानि यानि च ।
महात्मनाञ्च चरितं श्रोतव्यं नित्यमेव तत्,' – भगवान् व्यासः ।

अथाऽत्र यथाप्राप्तं तत्रभवतां विश्वगुरूणां न्यायाचार्याणामुदयनाचार्याणां चरितं किञ्चिच्चर्चयामः । एते 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति कर्मयोगशास्त्रे सश्रद्धमुदाहृतेन राजर्षिणाऽऽत्मनिष्ठेन जनकेन मानवं विधानमनुसृत्य प्रशासिते विदेहविषये दशमे उत्तरार्धे समुदपद्यन्त इति – 'तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः । वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीमि'ति तदुक्त्यैवाऽवगच्छामः । न्यायमतप्रतिष्ठापनगौरवमेषामेव । अत एव 'न्यायाचार्या' इत्युच्यन्ते । स्मर्यन्ते चैतन्नाम्नाऽतिगौरवेण नवीनैर्ग्रन्थकारैः । अतिकठिनैषां शैली । **न्यायकुसुमाञ्जलिः, आत्मतत्त्वविवेकः, न्यायवार्तिकतात्पर्यटीकापरिशुद्धिः, किरणावली, लक्षणावली,** इत्येते ग्रन्था एभिः कृताः । तेषु ग्रन्थत्रयं न्यायानुबन्धि । अपरं ग्रन्थद्वयं वैशेषिकानुगतम् ।

**न्यायकुसुमाञ्जलेः प्रतिपाद्यम् –**

श्रीमता न्यायाचार्येण जगद्गुरुणा उदयनाचार्येण प्रणीतेऽनुपमे पञ्चस्तबकात्मके कुसुमाञ्जलिग्रन्थे प्रधानतया प्रतिपाद्यं किमिति जिज्ञासायां –

'स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते' इति तदुक्त्यैवाऽवगन्तुं शक्यम्, अत्र जगतो निमित्तं कारणं परमात्मा प्रतिपाद्यत इति । ईश्वरनिराकरणरसिकानां बुद्धितारतम्येण सम्भवदुत्तरोत्तरप्रकर्षा आचार्वाकादामीमांसकं च वादिनां कुयुक्तयस्तथाऽत्र समूलमुन्मूलिताः, यथा पुनस्तत्त्वं जिज्ञासमानानामाग्रहपिशाचानाक्रान्तानां प्रमाणशरणानां मनस्तदङ्कुरितं न भवेत् । हृद्या च निरसनशैली । इमामनुभवन्तो विद्वांसश्चित्रीयन्ते । न केवलमेतावदेवाऽपित्वश्रद्धामलदिग्धं चेतो युक्तिजलेन प्रक्षाल्येश्वरस्याऽऽस्पदतां नीतम् । कृतकृत्यतां च नीता मानवाः । अहो कारुण्यमाचार्यस्य । एवमाक्षाल्यमानमपि येषां चेतः कर्मणां दुष्प्रधर्षतयाऽश्रद्धामालिन्यं नोज्झति, न च सर्वसुखानां मूलकन्दयोरीश्वरचरणारविन्दयोरास्पदतां गच्छति, शैलसाराशयान् दुर्भगाँस्तानपि संसारावर्तवेगादुद्धर्तुं सुकृतभाजः कर्तीः

इति दयालुः परमाणुकलेवरः परोरजाः परमात्मा प्रार्थितः । अहो परदुःखाऽसहिष्णुत्वमाचार्याणाम् । 'सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु । ............ मा कश्चिद्दुःखभाग् भवेदि' ति मानवधर्मनिष्ठत्वञ्च ।

न्यायदर्शनानुबन्धिषु ग्रन्थान्तरेष्वनुक्तान् कांश्चिद्विषयानिदंप्रथमतयाऽत्र पश्यामः । तेषु प्राथम्यं प्रथमस्तबकस्यान्तिमे श्लोके प्रदर्शितः षण्णां दर्शनानां समन्वयो भजते । समन्वयप्रकारश्चास्माभिरत्रैव निबन्धनान्तरे प्रादर्शि । स चावश्यं तत्त्वबुभुत्सुभिरादौ विद्वद्भिर्द्रष्टव्यः । मते चास्मिन् कैश्चिद्वेदान्तभाष्यकारैराहिता—'भगवद्भिः कपिलगौतमकणादैः प्रणीतानि तन्त्राण्यवैदिकानी'तिमतिः समूलं नाशमियादित्यस्माकं निश्चितं मतम् । वेदान्तसूत्रेषु भगवता व्यासेन यथा—'पत्युरसामञ्जस्यादि' ति सूत्रे – एकदेशावस्थितेश्वरस्य सम्बन्धाधिष्ठानत्वाद्यनुपपत्तेः जगत्कर्तृत्वमनुपपन्नम् , तथैव जडत्वात् स्वतन्त्रपरमाणुकारणवादोऽपि कैश्चिद्बौद्धविशेषैरङ्गीकृतोऽनुपपन्न इत्येव परमाणुकारणवादनिराकरणेऽभिप्रेतं, न तु ईश्वराधिष्ठितपरमाणुवादोऽपि निराकृत । वेदानां पौरुषेयत्ववादो निमित्तकारणवादश्चेश्वरस्योभावप्युपपन्नाविति प्रदर्शयितुं प्रभवामस्तथापि विस्तरभयान्नेह प्रपञ्च्यते । अतो वैदिकेष्वेषु दर्शनेष्ववैदिकत्वमतिर्नाज्ञानमेवाऽपि तु महानपराधः । आस्तां तावत् । प्रकृतमनुसरामः ।

द्वितीयो विषयः – द्वैताऽद्वैतनिर्गुणत्वसगुणत्वादिविरुद्धार्थबोधिकानामौपनिषदीनां श्रुतीनां सर्वासां प्रामाण्यसंरक्षणपुरस्सरं मध्यमं मार्गमाश्रित्य सामञ्जस्यम् ।

तृतीयो विषयः – वेदाद्युपदेशो घटादिसम्प्रदायश्चेश्वरप्रभव इति ।

प्राकृतः कश्चिन्नियमः, 'अस्माकन्त्वि' ति श्लोके प्रतिफलितो दृश्यते । य ईश्वरकृपायाः परिणामः । स च नियमः, तर्कस्य श्रद्धारूपेण ज्ञानस्य च भक्तिरूपेण परिणामः । अस्यामवस्थायां मनुजः कृतकृत्यो भवति । 'अथ शिरोहृदयेन सहैक्यं गच्छति । 'मूर्धानमस्य संसीव्याऽथर्वा हृदयं च यदि' ति अथर्ववेदः ।

ग्रन्थे गृहीता विषयास्तथा निर्णीताः यथा प्रतिवादिभिर्युक्तिसहस्रेणाऽप्यन्यथयितुं न शक्येरन् । तेषु कांश्चिन्नीचैर्निर्दिशामः ।

**प्रथमस्तबके** – १. आकस्मिकत्ववादखण्डनपुरस्सरं कार्यकारणभावस्थापनम् ।

२. कार्यवैचित्र्यात् कारणवैचित्र्यस्थापनम् ।

इत्थं यथामति कुसुमाञ्जलेः प्रधानप्रतिपाद्यमस्माभिः प्रदर्शितम् । 'यत्करोषी' ति भगवद्वाक्यात्तस्मै एव समर्पयामीमं निबन्धम् । प्रार्थयामि च पाठकान् कुसुमाञ्जलि-मकरन्दं भगवन्तमनुभूय शाश्वतिकं श्रेयः प्राप्नुवन्तु, संभूय वेदो विस्तार्यताञ्चेति ।

ॐ तमसो मा ज्योतिर्गमय

ज्येष्ठ. शु. ३ — इति

सं. १९९७ विक्रमस्य — कश्चिदार्यः

श्रीहरिः

# वैदिकषड्दर्शनानां समन्वयः

## ‘ॐ तमसो मा ज्योतिर्गमय’

## ‘न हि विद्यासमं चक्षुः’

वेदमाश्रित्य प्रवृत्तानि मीमांसा, वैशेषिकं, न्यायः, सांख्यं, योगः, वेदान्तश्चेतीमानि षडदर्शनानि संभूय मनुष्यमभ्युदयं, निःश्रेयससिद्धिञ्चाऽवगमयन्तीति स्थितिः। कथमिमानि तदवगमयन्तीदं समन्वयप्रकारश्चैषामत्र संक्षेपतः प्रदर्शयामः। न ह्येषां समन्वयो वेदप्रतिपाद्यमर्थमविविच्य प्रदर्शयितुं शक्यो, ग्रहीतुं वा। अतो वेदपदप्रतिपाद्योऽर्थोऽल्पशः प्रदर्श्यते।

अत्र प्रतिपाद्यमानोऽयं वेदार्थश्चिरन्तनोऽपि बहुतिथात्कालादार्याणां वेदार्थाऽऽलोचने प्रवृत्त्यभावात् प्रत्न इव प्रतीयात्। ‘विद्यते’ इति व्युत्पत्त्या वेदशब्देनोपलभ्यमानं पदार्थजातमुच्यते। पदार्थाश्च ऋक्सामयजुरथर्वमयाः। पदार्थेषु विद्यमाना ऋगादय एवं विविच्य ज्ञातुं शक्यन्ते। पदार्थेषु विद्यमानं मूर्त्यात्मकं पिण्डमेव ऋक्। ऋगनुरूपं तत्त्रिगुणं तत्तेजोमण्डलमेव साम। ऋक्सामान्तःपाति गतिमत् प्राणतत्त्वमेव यजुः। एषामधिष्ठानपदार्थोऽथर्वा।

यथाह भगवान् तित्तिरिः —

‘ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः सर्वा गतिर्याजुषी हैव शश्वत्।

सर्वं तेजः सामरूप्यं ह शश्वत् सर्वं हि ब्रह्मणा (अथर्ववेदेन) हैव सृष्टमि’ति। इमं ऋक्सामयजुरथर्वमयपदार्थात्मकं प्राकृतं नित्यं वेदं तप प्रभावादादिव्यचक्षुषो महर्षयः साक्षाच्चक्रुः। कृतसाक्षात्कारास्ते आविरभावयँस्तत्प्रतिकृतिभूतं शब्दात्मकं वेदम्। स वेदो याभिः शाखाभिः, यैःस्वरैः, यैश्छन्दोभिः, यैश्चाङ्गैरनुगतोऽस्ति, ता एव शाखास्त एव स्वराः, तान्येव च्छन्दांसि, तान्येव चाङ्गान्यत्राप्यपश्यन्। सस्वरे, सच्छन्दसि, सशाखे, साङ्गे च विज्ञातेऽस्मिन् प्रकृतिरिव वेदैर्वयमपि विश्वनिर्माणे प्रभवामो, यज्ञविद्याया ज्ञातत्वात्। पदार्थानामुत्पत्तिरेव यज्ञपदार्थः। न हि यज्ञविदोऽविदितमप्राप्यञ्च किञ्चिदस्ति। तथाहि श्रूयते — ‘ब्रह्मविद्यया ह सर्वं भविष्यन्तो मन्यन्ते’ इति। स्मर्यते च — ‘सेनापत्यञ्च राज्यञ्च

दण्डनेतृत्वमेव च । सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हती' ति । यद्यप्यस्यत्र वक्तव्यं बहु, तथापि विस्तरभयाद्विरमामः ।

**प्रथमं मीमांसादर्शनम्** —

तमिमं वेद (पदार्थ) माश्रित्येमानि षड्दर्शनानि प्रवृत्तानीत्युक्तम् । तेषु प्रथमतो मीमांसा प्रक्रमते । यः कोऽपि पदार्थ उत्पत्तिमारभ्य आ फलं क्रियामय एव । अतः प्राक् क्रियारूपस्यार्थस्य फलेन सह सम्बन्धो ज्ञातव्योऽथ च वक्तव्यः । अयमेव विधिः, प्रेरणा, नियोग इत्यभिधीयते । विधेर्धारणादेव मनुष्यः स्वाभीष्टं प्राप्नोतीत्यतो ध्रियमाणत्वाद्विधिर्धर्मः । अमुमेव भगवान् जैमिनिः – 'चोदनालक्षणोऽर्थो धर्मः' इत्याह । धर्मं जिज्ञासमानानां विधेर्ज्ञानमपेक्षितम् । अतो मीमांसादर्शनं–धर्मं विधिं व्याचष्टे । मीमांसया जिज्ञास्यमाने धर्मे विशेषमनुपदं वदामः ।

**द्वितीयं वैशेषिकदर्शनम्** — मीमांसादर्शनं शब्दमाश्रित्य स्वविषयं धर्मं ज्ञापयति । यतः शब्दार्थावनुविद्धौ, अतोऽर्थगतान् गुणादिधर्मान् वक्तुं, व्यष्टिशः पदार्थस्वरूपज्ञानाय च दर्शनान्तरमावश्यकम् । इमामावश्यकतां निर्वर्तयितुं वैशेषिकं दर्शनं प्रवृत्तम् । अस्मिँश्च दर्शने समष्टिशः पदार्थज्ञानाय सामान्यधर्मस्य, व्यष्टिशः परिचयाय विशेषतायाश्च निरूपणमावश्यकम् । सामान्यधर्मेण तेषां ज्ञानं, विशेषाख्यधर्मेण च परिचयः = अनुभवः । प्रतिपदार्थनिष्ठविशेषाख्यपदार्थस्य परिचायकत्वादस्य वैशेषिकमित्यभिधानम् ।

यथा मीमांसादर्शनम् — 'अथातो धर्मजिज्ञासे' त्यतः प्रारभ्यते, तथैव वैशेषिकदर्शनम् — 'अथातो धर्मं व्याख्यास्याम' इत्यतः प्रारभ्यते । मीमांसायामुच्यते–'चोदनालक्षणोऽर्थो धर्म' इति । वैशेषिके च — 'यतोऽभ्युदयनिःश्रेयससिद्धिरि' ति । तयोर्विशेषस्त्वयम् – मीमांसादर्शनस्य विषयो धर्मो निष्पद्यमानः । वैशेषिकस्य च विषयो धर्मो निष्पन्नः । यथाविधि निष्पन्नो हि पदार्थोऽभ्युदयाय निःश्रेयसाय च कल्पतेऽतो निष्पन्नानां पदार्थानां गुणधर्मान् ज्ञात्वा यथाविध्युपयुज्य च तैलौकिकसमृद्धिः, निःश्रेयसस्य प्राप्तिश्च वैशेषिकदर्शनस्य लक्ष्यम् । येषां पदार्थानां प्रयोजनमस्माभिरनुभूतं तेषामदृष्टे प्रयोगोऽभ्युदयाय कल्पते । तथाहि पश्यति भगवान् कणादः 'दृष्टानां दृष्टप्रयोजनानां दृष्टा-

भावे (अदृष्टे) प्रयोगोऽभ्युदयाये' ति। किं बहुना, वेदानां प्रामाण्यमप्यभ्युदयाय पदार्थानां प्रयोगादेव। 'तद्वचनादाम्नायस्य प्रामाण्यमि' ति हि तद्दर्शनम्। मीमांसायां पुनराम्नायस्य क्रियार्थत्वात् प्रामाण्यमुच्यते। तस्मादिदं निगमयितुं शक्यम्, निष्पद्यमानो धर्मः (पदार्थः) मीमांसाया विषयः, निष्पन्नश्च वैशेषिकस्येति। वैशेषिकं दर्शनं निष्पन्नानां पदार्थानां स्वरूपं स्पष्टं ग्राहयत् तेषामुपयोगमभ्युदयाय निःश्रेयसाय च विदधातीति।

## तृतीयं न्यायदर्शनम्—

मीमांसायां निष्पद्यमानान् पदार्थान् वैशेषिके च निष्पन्नान् पदार्थान् तत्त्वतो ज्ञातुं यावदुपायो न भवेत्, न भवेत्तावत्तयोः किमपि महत्त्वं प्रयोजनञ्च। अतस्तादृशं किञ्चिद्दर्शनान्तरमावश्यकं यत्तत्त्वज्ञानस्य निर्णयाय प्रवर्तेत। तस्मात् यथार्थज्ञानं विषयीकृत्य न्यायदर्शनं प्रवृत्तम्। न्यायदर्शनस्य प्रथमसूत्रे एव तत्त्वज्ञानं यथार्थानुभवो निःश्रेयसप्राप्तेः कारणमित्यभिहितम्। द्वितीयसूत्रे च स्पष्टमिदमुक्तं—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति। संसारान्निवृत्तिरेव निःश्रेयसप्राप्तिरिति मीमांसावैशेषिकाभ्यामुक्तम्। न्यायदर्शनं पुनराभ्यां तत्त्वज्ञाना (स्वरूपज्ञाना) त् निःश्रेयसप्राप्तिः स्यान्नान्यथेत्यतो न्यायदर्शनं तत्त्वज्ञाने=स्वरूपज्ञाने व्याप्रियते।

## चतुर्थं सांख्यदर्शनम्—

न्यायदर्शनेन दुःखनिवृत्तये तत्त्वज्ञानात्मकोपायः प्रादर्शि। सति तत्त्वज्ञाने दुःखं, बन्धनं, संसारः अपवृज्यते इति चाऽवाचि। सांख्यदर्शनेन पुनरिदं प्रदर्श्यते—'दुःखनिवृत्तिरेवाऽत्यन्तपुरुषार्थो मनुजस्ये' ति! दुःखस्याऽपि नैकविधस्य, किन्तु त्रिविधस्य। तन्निवृत्तिरपि न देशकालपरिच्छिन्ना, अपि त्वपरिच्छिन्नाऽऽवश्यकी। इदं किल पश्यति भगवान् कपिलः—'त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ' इति। सर्वेषां दुःखानां समुच्छेदो विवेकादेव। विवेक एव दुःखोच्छेदस्य, तद्रूपायाः कृतकृत्यतायाश्च कारणं, नान्यत्। तथाहीदं दर्शनम्—विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता नेतरान्नेतरादि' ति। सर्वदुःखोच्छेदाय विवेकोत्पादनं सांख्यदर्शनस्य विषयः। अस्मिन् दर्शने

गहनं विविच्य, आत्माऽनात्मानौ दर्शितौ । प्रकृत्यात्मभ्रान्तिश्च समूलमुन्मूलिता । तदिदमुच्यते ऽभियुक्तैः – 'प्रकृत्यात्मभ्रान्तिर्गलति चिदचिल्लक्षणधिये' ति ।

**पञ्चमं योगदर्शनम्** –

सांख्यशास्त्रेण विविक्तात्माऽनात्मनो विवेकिनः संसारो दुःखमयः प्रतीयेत । तथाचाऽनुभूय भगवान् पतञ्जलिराह – 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन' इति । सर्वं दुःखमयं भासते । यतते च दुःखनिर्मोकाय प्रतिक्षणम् । अनन्तत्वात् दुःखानामेकैकशः कथमपसारयितुं शक्यन्ते? नैव । कुत इति चेत्; नैतावान् कालो, न च शक्तिः । तेषामपसारणस्यैक एवोपायः । स च विवेकपुरस्सरमात्मनिष्ठा, यस्यां स्थितो मनुजोऽनासक्ततया पद्मपत्रमिवाऽम्भसा दुःखैर्नैव स्पृश्यते, पृथक्कुरुते चाऽऽत्मानं दुःखेभ्य । दुःखेभ्यः स्वात्मनः पृथक्करणमेव योगमार्ग, ज्ञानमार्गः, निवृत्तिमार्गः इत्याभधीयते । स्वात्मनो दुःखानामपसारणञ्च कर्ममार्गः, प्रवृत्तिमार्गः इत्युच्यते । योगदर्शनं दुःखेभ्यः स्वस्य पृथक्करणमेव श्रेय इति मन्यते, सरलत्वादस्य मार्गस्य । अपरो मार्गो दुर्गः, दुःखानामनन्तत्वात्तेषां कल्पशतेनाऽप्यपसारणस्य दुष्करत्वात् । अतो योगदर्शनं केवलां=निर्दुःखामवस्थां प्राप्तुं ज्ञानमार्ग इति, निवृत्तिमार्गं इति चाभिहितं योगमार्गं दर्शयति–'योगश्चित्तवृत्तिनिरोध' इत्यादिना । संस्कारचितीनामधिकरणं चित्तं, तन्निरोधो योग इति । सति निरोधे द्वन्द्वेषु साम्यं गच्छति, 'समत्वं योग उच्यत' इति च भगवान् कृष्णः । अस्यामवस्थायामात्मा गुणातीतत्वान्निर्दुःखत्वाच्च केवलोऽविक्षुब्धश्च स्वस्वरूपे एव तिष्ठति । तथाहीमामवस्थां चरमां चरमसूत्रेण भगवान् पतञ्जलिः प्रादर्शयत् – 'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिती' ति ।

**षष्ठं वेदान्तदर्शनम्** –

वेदान्तदर्शनमाह– 'इयमात्मनः केवलावस्था आनन्दमयी, नतु सुखोज्झिता । अस्यामवस्थायां संसारावस्थायामिव न किमपि हेयं भवतीति । यथाह भगवान् बादरायणः–'आनन्दमयोऽभ्यासात्, हेयत्वावचनाच्चे' ति । अस्यामेवाऽवस्थायामात्मा स्वनिमित्तकारणब्रह्माणि लीयते, तन्निष्ठो भवतीति यावत् । जीवस्य ब्रह्मनिष्ठतैव मोक्षः । 'तन्निष्ठस्य मोक्षोपदेशादि' ति भगवता सिद्धान्तितत्वात् । यस्मिन्

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ॥
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥

---

स एवाह्लादकत्वात्प्रसूनं । तदेवावान्तरवाक्यघटितत्वादञ्जलिः । मम चेतः रमयतु = दुःखसामग्रीविहीनं करोतु ।

अथवा = ईशस्यपदयुगे रमयतु — तदेकाग्रं करोतु । कीदृशं चेतः ? भृङ्गायमाणम् । मकरन्दे भृङ्ग इव दुःखविगमोपाये सतृष्णम् । अत एव भ्रमत् = दुःखविगमोपायमनुसरत् । कीदृशः कुसुमाञ्जलिः ? सत्पक्षप्रसरः = सति प्रामाणिके पक्षे सिषाधयिषितसाध्यधर्मके धार्मिणि प्रकर्षेण सरः=ज्ञानं यस्मात्तादृशः । प्रामाणिके धर्मिणि साध्यसाधक इतिभावः । सतां=परामर्शकुशलानां, परिमलः = व्याप्तिः । तस्याः, प्रोद्बोधः = साध्यसाधनयोः, साध्याभावसाधनाभावयोर्वाऽबाधितत्वेन सत्तानिश्चयः । तेन, बद्धोत्सवः = आनन्दजनक इत्यर्थः । विमर्दनेऽपि = न्यायविषयीभूतप्रमाणाविरुद्धप्रमाणप्रदर्शनेपि । न विम्लानः = न कार्याक्षमः तदवधूय स्वार्थसाधक एवेत्यर्थः । अमृतं = मोक्षः । तत्र, रसः = इच्छा । तस्याः, प्रस्यन्दः = उत्पत्तिः । तदेव माध्वीकं = मधु । तस्य भूः = उत्पत्तिस्थानं । किञ्च ईशस्य पदयुगे, पद्यते अनेनेति व्युत्पत्त्या प्रत्यायके प्रमाणतर्करूपे, निवेशितः तद्विषये व्युत्पादितः । एष न्यायप्रसूनाञ्जलिरिति सम्बन्धः । एवञ्चात्राभिधेयः= परमेश्वरः । तत्स्वरूपावगतिः प्रयोजनम् । मोक्षेच्छुरधिकारी । प्रतिपाद्यप्रतिपादकभावस्सम्बन्ध इति सूचितम् ।

नन्वीश्वरे प्रमाणव्युत्पादनस्य निष्फलत्वाद्व्यर्थोऽयं प्रयास इत्यत आह— **स्वर्गेति** ॥ ईश्वरमननं मोक्षहेतुः । तच्च न तद्गोचरप्रमाणव्युत्पादनमन्तराशक्योत्पत्तिकमिति तद्बोधकप्रमाणव्युत्पादनमपि भवति मोक्षोपयोगीत्याशयः । एतेन मननं मोक्षोपयोगि, निरूपणञ्च क्रियत इत्यसङ्गतमितिशङ्का निरस्ता ॥

इह – यद्यपि यं कमपि पुरुषार्थमर्थयमानाः, शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय संप्रदायप्रद्योतकोऽनुग्राहकश्चे'ति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, [2] निरावरण[3] इति दिगम्बराः, उपास्यत्वेन देशित[4] इति मीमांसकाः, यावदुक्तोपपन्न इति नैयायिकाः, लोकव्यवहारसिद्ध[5] इति चार्वाकाः, किं बहुना कारवोऽपि यं विश्वकर्मेत्युपासते, तस्मिन्नेवं जातिगोत्रप्रवरचरणकुलधर्मादिवदासंसारं प्रसिद्धानुभावे भगवति भवे सन्देह एव कुतः ? किं निरूपणीयम् । तथापि –

न्यायचर्चेयमीशस्य मनन‌व्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥

श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणेष्विदानीं मन्तव्यो भवति । 'श्रोतव्यो मन्तव्य' इति श्रुतेः ।

"आगमेनानुमानेन ध्यानाभ्यासरसेन च
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममि" ति स्मृतेश्च ॥

---

ईश्वरे वादिनां विप्रतिपत्त्यभावेन न्यायपूर्वाङ्गभूतस्संशय एव नास्तीत्याक्षिपति – इहेति ॥ धर्मिणि भगवति मनने विहिते, तत्प्रकाराकांक्षायां तत्र विप्रतिपत्त्या सन्देहोऽस्तीति तद्विचाररूपो न्याय आवश्यक – इति मनसि कृत्वा मननरूपोपासनैव क्रियत इति समाधत्ते – न्यायचर्चेति ॥ न्यायेन चर्चा न्यायचर्चा, अनुमितिरूपा उपासनैव क्रियत इति सम्बन्धः । यद्यपि संशयस्य न्यायाङ्गत्वं न न्यायकारणतया सम्भवति । तस्य लिङ्गपरामर्शात्मनः संशयं विनापि सम्भवात् ।

---

१. शुद्धः = देहादिशून्यः । बुद्धः = बोधे कर्ता कर्म वा । २. धर्माधर्मरहितः । ३. सर्वज्ञ इति सौगता इति अ०. पा० । ४. नोदित इति पा० । ५. राजादिर्दृश्यमानः । चतुर्भुजादिरूपा प्रतिमावेत्यर्थः ॥

**तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः। अलौकिकस्य परलोकसाधनस्याऽभावात्। अन्यथापि परलोकसाधनानुष्ठानसंभवात्। तदभावावेदकप्रमाणसद्भावात्। सत्त्वेपि तस्याप्रमाणत्वात्।**

---

नापि सहकारितया। शाब्दपरामर्शादौ तस्य कारणत्वासम्भवात्। तथापि न्याये संशयोऽङ्गमिति संशयं विना यो न परितुष्येत् तेनापि 'श्रोतव्यो मन्तव्य' इति श्रुत्या धर्मविषयक एव संशयो धर्मिविषयकन्यायप्रवृत्त्यङ्गमित्यास्थेयमिति विभावयंस्तत्कारणं विशेषविप्रतिपत्तिमुपदर्शयति — **तदिहेति**।

अलौकिकसामान्ये तावत् 'साक्षात्कारकारणेन्द्रियसन्निकर्षाश्रयत्वं प्रमेयत्वव्यापकं नवा? अलौकिसन्निकर्षाजन्यजन्यसाक्षात्कारविषयत्वं प्रमेयत्वव्यापकं नवेतिवा बोध्यम्॥ अलौकिकविशेषेत्वदृष्टे लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाव्द्याप्यजात्यधिकरणत्वमात्मगुणेषु वर्तते नवा? परलोके तु सुखदुःखोभयजनकमच्छरीरातिरिक्तशरीरवानहं नवा? इति। साधनेतु कार्यपूर्ववर्तिनि तन्नियतत्वमस्ति नवा? विशिष्टेतु अलौकिके परलोकसाधनत्वमस्तिनवा? परलोकसाधने अलौकिकत्वमस्ति नवा? इति विप्रतिपत्तिः! अत्र कार्यकरणभावाभावे क्षित्यादिकर्तृतया नेश्वरसिद्धिः। परलोकाभावे तत्साधनयागादिद्रष्टुरभावेन तदुपदेशकतयापि नेश्वरसिद्धिः। अदृष्टाभावे तदधिष्ठातृतयापि नेश्वरसिद्धिरिति चार्वाकाभिप्रायः। **अन्यथेति** — अदृष्टादिसत्त्वेऽपि, अन्यथा — वेदानांनित्यनिर्दोषत्वेन स्वतः प्रामाण्यावधारणात्। परतः प्रामाण्येऽपि कर्मयोगसिद्ध सर्वज्ञपूर्वकत्वात्तेषां परलोकसाधनयागाद्यनुष्ठानसम्भवादित्यर्थः। **तदभावेति**॥

वेदानां पौरुषेयत्वेपि कर्मयोगसिद्धसर्वज्ञपूर्वकत्वाङ्गीकारेणैवोपपत्तौ तत्कर्तृतया प्रत्यक्षादिबाधात् क्षित्यादिकर्तृतया वा नेश्वरसिद्धिरितिभावः।

**सत्त्वेपीति**॥ यथाकथञ्चिदीश्वरस्य सत्त्वेऽपि स न प्रमाणम्। प्रमाणपदं हि भावकरणकर्तृव्युत्पत्त्या प्रमातत्साधनतदाश्रयेषु वर्तते। अनधिगताबाधितार्थावगतिश्च प्रमा। तथाचेश्वरो यदि कर्ता स्यात्तदा प्रमावान्,

**तत्साधकप्रमाणाभावाच्चेति ॥ तत्र न प्रथमः कल्पः । यतः —**

**सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।**

---

तत्साधनेन्द्रियादिमान्, तत्समवायिकारणञ्च स्यात् । नचायं तथेति विपर्ययानुमानादित्यर्थः । अप्रमाणपुरुषवचः कश्श्रद्धधातीतिभावः ॥ **तत्साधकेति** ॥ कार्यत्वदेरुपाधिदुष्टत्वात् क्षित्यादेः कर्तृजन्यत्वमेव नास्तीतिभावः ॥ तत्राद्यस्तबकेन प्रथमां विप्रतिपत्तिं निराकरोति **तत्रेति** । तेषु मध्ये न प्रथमः पक्षः । तथाहि — कार्यकारणभावानभ्युपगमे परप्रतिपत्तिफलकवाक्यप्रयोगानुपपत्तिः । किञ्च यथा यथा तन्निराकरणाय प्रयत्नस्तथातथा तस्यैवापत्तेरिति व्याघात एवेति ॥ तथापि साधकं विना न तत्सिद्धिरितिचेत्तत्राह — **सापेक्षत्वादिति** । विवादपदस्य कार्यजातस्य सापेक्षत्वात् = कादाचित्कत्वादित्यर्थः । तच्च किञ्चित्कालासम्बन्धित्वेसति किञ्चत्कालसम्बन्धरूपं कार्याणां प्रत्यक्षसिद्धम् । एवञ्चास्मादनन्तरमिदंभवति, एतदनन्तरमिदन्नेति प्रत्यक्षमेव कार्यकारणभावे प्रमाणमितिभावः । कार्यं सहेतुकं कादाचित्कत्वादित्यनुमानमपि कार्यकारणभावसद्भावे मानमिति चार्थः ॥ ननु यदि हेतुस्सदातनस्स्यात्, तत्सापेक्षस्य कार्यस्यापि सदातनत्वापत्तिः । अथ हेतुरपि कादाचित्कस्स्वकार्यापेक्षयेतिचेत्तर्ह्यनवस्था । यदिच कादाचित्कोऽपिहेतुर्निर्हेतुकस्तद्वदेव कार्यस्यापि निर्हेतुकस्य कादाचित्कत्वं भवत्वित्यत आह — **अनादित्वादिति** ॥ हेतोरपि कादाचित्कत्वं स्वकारणकादाचित्कत्वादेव । प्रामाणिकीयमनवस्था बीजाङ्कुरवन्नदोषायेत्यर्थः ॥ ननूक्तरीत्या कारणसिद्धावप्येकमेकजातीयं वा कारणमस्तु कार्यजातस्य । तच्चास्माभिरेव शक्यज्ञानमिति न तदर्थमुपदेशापेक्षेत्यत आह — **वैचित्र्यादिति** ॥ एतेन भिन्नजातीयकारणानन्तरतथाभूतकार्यविषयकं प्रत्यक्षमेव विचित्रसाधनसद्भावे मानमुक्तम् । अथवा — कार्यवैचित्र्यमेव कारणवैचित्र्यहेतुरुक्तः । उभयत्रापि यदि कारणमभिन्नमभिन्नजातीयं वा स्यात्तर्हि कार्यवैचित्र्यमाकस्मिकं स्यादिति तर्कस्सहकारी ॥ ननु तथापि दृश्यमानविचित्रहेतुकमेव कार्यमस्तु । न तदर्थमदृष्टापेक्षेत्यत आह — **विश्ववृत्तित इति** ॥ विश्वेषां

**प्रत्यात्मनियमाद्भुक्तेरस्तिहेतुरलौकिकः ॥ ४ ॥**

**नह्ययं संसारोऽनेकविधदुःखमयो निरपेक्षो भवितुमर्हति। तदा-हि, स्यादेव नस्यादेव वा, नतु कदाचित् स्यात् । अकस्मा-देव भवतीति चेन्न**

परलोकार्थितया यागादौ **प्रवृत्तिदर्शनादित्यर्थः** । परलोकसाधनत्वञ्च यागादी-नामपूर्वमन्तरा न सम्भवतीति तज्जन्यादृष्टसिद्धिरितिभावः।

ननु तददृष्टं भोग्यनिष्ठमुत भोक्तृनिष्ठम्? अन्त्येऽपि किं प्रतिभोक्तृ-नियतमुत साधारणमित्यत आह – **प्रत्यात्मेति** । भुक्तेः = सुखदुःखभोगस्य प्रत्यात्मभिन्नत्वात्तदुपपादकं प्रतिभोक्तृनियतमेवादृष्टं कल्प्यत इत्यस्ति हेतुरलौकिक इति **प्रथमस्तबकार्थसंग्रहः** ।

निरुक्तप्रत्यक्षानुमानयोरन्यथासिद्धिनिरासफलकतर्कप्रदर्शनपूर्वकं सापे-क्षत्वादितिकारिकांशं व्याकरोति — **नहीत्यादिना** । **अनेकविधेति** ॥ कार्यवैचित्र्यस्फोरणार्थम् । तच्च विचित्रादृष्टसाधने उपयुज्यते । **निरपेक्ष-इति** । निरपेक्षत्वञ्च किञ्चित्पदार्थावधिकोत्तरत्वव्याप्यकालासम्बन्धित्वम् । असत्ख्यातिवादिनापि सांव्यवहारिकस्य सापेक्षत्वस्य स्वीकारान्न प्रतियोग्य-प्रसिद्धिः । तर्कस्वरूपमाह — **तदाही**त्यादिना । अत्र निरपेक्षत्वेनाऽऽ-पादकेन कादाचित्कत्वाभाव आपाद्यः । यद्ययं संसारो निरपेक्षस्स्यात्तर्हि कादाचित्को नस्यादिति तर्काकारः । सच स्यादेव नस्यादेवेति पक्षद्वये पर्य-वस्यति । एतेन निरपेक्षत्वेनैकेन व्याप्येन स्यादेव नस्यादेवेतिरूपं विरुद्धं व्यापकद्वयं कथमापाद्यत इति शङ्का निरस्ता ।

कार्यकारणग्राहकमाने कादाचित्कभावः – निर्हेतुकः — भावत्वात् व्योमवदिति सत्प्रतिपक्षं शङ्कते **अकस्मादिति** — अकस्मादेव भवतीत्यस्य,

१. संसारः = कार्यवर्गः । २. नैकविध इति पा० । तस्मिन् पक्षे, नैकविधः= सर्वदा नैकरूपः, कादाचित्क इति भावः।

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्नच ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥

हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनमविशेषात् । भवनप्रतिषेधे प्रागिव पश्चादप्यभवनमविशेषात् । उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्यनियमश्च कार्यकारणभावः । न चैकं पूर्वमपरञ्च । तत्त्वस्य भेदाऽधिष्ठानत्वात् । अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः ॥

---

हेत्वभावे भवतीत्येकोऽर्थः । हेतुतो न भवतीत्यपरोऽर्थः । हेतुभिन्नात् स्वस्मान्निरुपाख्याद्वा भवतीत्यन्योऽर्थः । अश्वकर्णादिशब्दवदकस्मात्पदं स्वभावपरम् । तथाच स्वभावादेव भवतीति वाऽर्थः । तान्सर्वानपि पक्षान्निराकरोति – हेतुभूतीत्यादिना । अत्र च हेतुः - अवधेरित्यादि । नियतावधिकत्वं हेतुरितिभावः । कादाचित्कस्य कार्यमात्रस्य नियतावधिसम्बन्धित्वेनैव सतर्केण प्रत्यक्षेण विषयीकरणादित्यर्थः । तर्कमेवाह – हेत्विति । भवनस्य = सत्त्वस्य तथाच हेतुनिषेधे कार्यस्य सदातनत्वे कादाचित्कत्वव्याघातप्रसङ्ग इति भावः । भवनस्येति । भवनस्य सदा प्रतिषेधे प्राक्पश्चादिव मध्येऽप्यभवनप्रसङ्गात्कादाचित्कभवनग्राहिप्रत्यक्षबाध इत्यर्थः ।

स्वस्मादेव कार्यं भवतीति तृतीयविकल्पं निराकरोति उत्पत्तेरिति । चतुर्थं निराकरोति – अनुपाख्यस्येति । यद्यप्यनुपाख्यस्य कार्यजनकत्वं न प्रामाणिकमित्यनेनैवायं पक्षो निराकर्तुं शक्यते । तथापि दूषणान्तरमप्याह – प्रागपीत्यादिना । अनुपाख्यस्य सार्वदिकत्वेन तन्मात्रसापेक्षस्य कार्यस्यापि सार्वदिकत्वापत्तौ न कादाचित्कत्वनिर्वाह इति भावः ।

ननु कारणत्वसाम्येऽपि पटादीनां तन्त्वादिदेशवृत्तित्वमेव, न वेमादिदेशवृत्तित्वमपीति यथा स्वभावादेव नियतदेशवृत्तित्वं तथा कार्यस्याहेतुकत्वेऽपि

स्यादेतत् । नाऽकस्मादिति कारणनिषेधमात्रं वा, भवनप्रतिषेधो वा, स्वात्महेतुकत्वं वा, निरुपाख्यहेतुकत्वं वाऽभिधित्सितमपित्वनपेक्ष एव कश्चिन्नियतदेशवान्नियतकालस्वभाव इति, ब्रूमः । निरवधित्वे अनियतावधिकत्वे वा कादाचित्कत्वव्याघातात् । नह्युत्तरकालसिद्धित्वमात्रं कादाचित्कत्वं, किन्तु प्रागसत्त्वे सति । सावधित्वेतु स एव प्राच्यो हेतुरित्युच्यते । अस्तु प्रागभाव एवावधिरितिचेन्न । अन्येषामपि तत्काले सत्त्वात् । अन्यथा

---

तत्तत्कारणत्वाभिमतनियतोत्तरकालवृत्तित्वमेव, नतु कालान्तरवृत्तित्वमिति स्वभावादेव कादाचित्कत्वं स्यादिति शङ्कते **अपित्विति** ।

निरवधीनां गगनादीनां नियमेन कादाचित्कत्वस्वभावविरहान्निरवधिकत्वकादाचित्कत्वयोर्विरोधान्निरवधित्वे कादाचित्कत्वस्वभाव एव न स्यादिति परिहरति **निरवधित्व** इत्यादिना ॥ ननूत्तरकालसम्बन्धित्वं कादाचित्कत्वं । तच्च निरवधित्वेऽप्याकाशादाविव स्यादित्यतआह **नहीति** । कादाचित्कत्वस्य तावन्मात्ररूपत्वे घटगगनयोः कादाचित्कत्वऽकादाचित्कत्वव्यवहारस्य लौकिकस्य विरोध इति भावः ॥ ननु कार्यस्य सावधित्वमङ्गीक्रियते, न सहेतुकत्वमित्यत आह **सावधित्वेत्विति** । अवधिहेतुपदयोः पर्यायत्वात्सावधित्वाङ्गीकारे सहेतुकत्वमप्यङ्गीकृतमेवेतिभावः । ननु प्राचीनोऽवधिः प्रागभावएव, न भावोऽपि । तथा च न प्रागभावातिरिक्तकारणत्वं वर्तत इति शङ्कते **अस्त्विति** । किं प्रागभावकाले भावान्तराणामसत्त्वादनवधित्वं, उत कार्येणानपेक्षणात् । तत्राद्यं परिहरति **अन्येषामपीति** । भावान्तराणामप्यनन्यथासिद्धावन्वयव्यतिरेकवत्तयाऽवधित्वं निराबाधम् । अन्यथा प्रागभावस्यापि तन्नस्यादिति भावः । **अन्यथेति** । किञ्चिदनिरू-

---

१. न । निरवधित्व इति पा० , तस्मिन् पक्षे न किञ्चिदवधिमुपादाय कादाचित्कत्वं निरूपयितुमशक्यम् । कदाचिदित्यस्यैवाऽभावे कादाचित्कत्वव्याघातात् । तन्नैवं कादाचित्कत्वम् । नहि कस्मिंश्चिदेवदेशे सत्त्वं कारणापेक्षामनिरूप्य निरूपयितुं शक्यते । किन्तु निरूपितं सत्, स्वाभाविकं, सहेतुकं वेति विमृश्यते । अस्तिचात्र सर्वत्र नियामको हेतुः । तथा चोन्मोचिता प्रतिबन्दीति भावः ॥

**तस्यैव निरूपणानुपपत्तेः। तथाच न तदेकावधित्वमविशेषात्। इतर-निरपेक्षस्य प्रागभावस्यावधित्वे प्रागपि तदवधेः कार्यसत्त्वप्रसङ्गात्। सन्तु ये केचिदवधयो, नतु तेऽपेक्ष्यन्त इति स्वभावार्थ इतिचेत्— नाऽपेक्ष्यन्त इति कोऽर्थः। किं न नियताः? आहोस्विन्नियता अप्यनुपकारकाः?। प्रथमे धूमो दहनवद्रर्दभमप्यवशीकुर्यात्। नियामकाऽभावात्। द्वितीये तु किमुपकारान्तरेण, नियमस्यैवाऽपेक्षार्थत्वात्, तस्यैव च कारणात्मत्वात्, ईदृशस्य च[२] स्वभाववादस्येष्टत्वात्। नित्यस्वभावानियमवदेतत्। नह्याकाशस्य तत्त्वमाकस्मिकमिति सर्वस्य किं**

---

पितस्य प्रागभावस्य निरालम्बनत्वेन निरूपयितुमशक्यत्वेन घटादिप्राक्काले कपालादयस्तन्निरूपका अवश्यमङ्गीकर्तव्या इत्यर्थः।

ननु प्रागभावनिरूपकस्याऽपि चक्षुरादेर्यथा न घटकारणत्वं तथा तन्निरूपकभावान्तरस्याऽपीत्यत आह — **इतरेति**। यद्ययं घटः प्रागभावान्यावधिको न स्यात्तर्हि सकलकालिकस्स्यादित्यर्थः। तथाच प्रागुक्तकादाचित्कत्वव्याघातस्तदवस्थ एवेति भावः। द्वितीयमाशंक्य निराकरोति—**सन्त्विति**। प्रागभावादन्येषामवधित्वेऽपि तैर्घटादिसत्ताया अनियमनान्न तानि कारणानीत्यर्थः। **प्रथम इति**। यद्यग्निर्धूमकारणं न स्यात्तदा कथं धूमार्थी नियमतोऽग्निमुपादत्ते, न रासभमिति प्रत्यक्षव्याघात इति भावः। **द्वितीयेत्विति**। नह्युपकारव्याप्ता कारणता, किन्तु स्वरूपविशेषव्याप्तैव सेति भावः। **नियमस्यैवेति**। नियतान्वयव्यतिरेकवज्जातीयस्यैवाऽपेक्षणीयपदार्थतया लोकप्रसिद्धत्वादिति भावः। **नित्यस्वभावेत्यादि**। यथा नित्यस्याऽऽकाशस्य स्वभावश्शब्दाश्रयत्वमाकस्मिकमप्याकाश एव वर्तते नान्यत्र, तथाऽऽकस्मिकत्वाविशेषेऽपि सदातनत्वमाकाशादीनां, कादाचित्कत्वं घटादीनां स्वभावः। नत्वन्यधर्मोऽन्यस्येत्यर्थः। यदाहुः —

"नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन। विचित्राः केचिदित्यत्र तत्स्व-

---

२. चकारश्चेदर्थकः। वह्न्यादीनां सत्त्व एव धूमादयो भवन्तीति ईदृशस्वभाववादश्चेत्तदाऽस्माकमिष्यत एवेति भावः।

**न स्यादिति वक्तुमुचितमिति चेन्न—सर्वस्य भवतस्स्वभावत्वानुपपत्तेः । नह्येकमनेकस्वभावं नाम । व्याघातात् । नन्वेवमिहाऽपि सर्वदा भवतः कादाचित्कत्वस्वभावव्याघात इति तुल्यः परिहारः । न तुल्यः । निरवधित्वेऽनियतावधित्वे वा कादाचित्कत्वव्याघातात् । नियतावधित्वे हेतुवादाभ्युपगमात् ।**

---

भावो नियामकः ॥ वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः । केनेदं रचितं तस्मात्स्वभावात्तद्व्यवस्थिति " रिति ॥

नच नियतदेशवृत्तिवान्नियतकालस्वभाव इत्यनेन पौनरुक्तयमिति वाच्यम् । पूर्वं सापेक्षत्वादित्यत्र यथा परमाणुपरिमाणादीनां निरपेक्षत्वेऽपि नियतदेशवृत्तित्वमेवं घटादीनां नियतकालवृत्तित्वं स्यादित्यप्रयोजकत्वमाशङ्कितम् । अधुना तु कादाचित्कत्वस्वभावः—निर्हेतुकः — स्वभावत्वान्नित्यस्वभाववदिति सत्प्रतिपक्षत्वमाशङ्कितमिति भेदात् । समाधत्ते – **न सर्वस्येति** । एकनियतो धर्मस्स्वभाव इत्युच्यते । तद्यदि सर्वस्य सम्भवेत्तदाऽसाधारणत्वरूपं स्वभावत्वं व्याहन्येत । एकमेकस्यैव स्वभावो नत्वनेकस्येति भावः । **नन्वेवमिति** । आकस्मिकमप्याकाशत्वमाकाशस्यैव धर्मो न सर्वस्य, तत्त्वव्याघातादिति यथा विपरीतमनाशङ्कनीयमेवमिहाऽपि कादाचित्कत्वस्वभावस्य निर्हेतुकत्वेपि सदातनत्वमनाशङ्कनीयम् । कादाचित्कत्वस्वभावव्याघातादिति भावः । **न तुल्य इति** । कादाचित्कत्वस्वभावसिद्धौ, तद्विपरीतकल्पनायां व्याघातस्स्यात् । तत्सिद्धिश्च – निरवधित्वस्वभावत्वे वा ? सावधित्वस्वभावत्वे वा ? द्वितीयेऽप्यनियतावधित्वे, तद्विपर्यये वा ? तत्र प्रथमद्वितीययोराह — **निरवधित्व इति** । ये ये निरवधयोऽनियतावधयश्च भावा दृष्टास्तेषां नियमतः कादाचित्कत्वस्वभावविरहान्निरवधिस्वभावस्याऽनियतावधिस्वभावस्य च कादाचित्कत्वस्वभावविरोधः । **कादाचित्कत्वव्याघात इति** । कादाचित्कत्वस्वभावव्याघात इत्यर्थः । तृतीये सम्प्रतिपत्तिमाह – **नियतावधित्व इति** । वस्तुतस्त्वस्मिन्सतीदं भवति, असति नेति प्रत्यक्षेण नियतपूर्वभावस्य ग्रहात्प्रत्यक्षमेव कारणत्वे मानम् । तस्य चानन्यथासिद्धत्वग्राहकस्तर्कस्स्या-

**स्यादेतत् । उत्तरस्य पूर्वः पूर्वस्योत्तरो मध्यमस्य उभयमवधि-रस्तु । दर्शनस्य दुरपह्नवत्वात् । त्वयाऽप्येतदभ्युपगन्तव्यम् । नहि भाववदभावेऽप्युभयाऽवधित्वमस्ति । तद्वद्भावेष्वप्यनुपलभ्यमानैकैकको-टिषु स्यात् । न स्यात् । अनादित्वात् ।**

**प्रवाहोऽनादिमानेष न विजात्येकशक्तिमान्[1] ।**

---

देवेत्यादिना दर्शित इति रहस्यम् । ननु प्रत्यक्षेण चेत्कारणसिद्धिर्न तवेष्टसिद्धिः । क्षित्यादौ कर्तुरदर्शनात्तत्कर्तृत्वेनेश्वरासिद्धेः । नापि कादाचित्कत्वहेतुकेनानुमानेन तत्सिद्धिः । हेतोरसाधारणत्वात् । तथाहि — कार्यस्य सामग्रीनिरपेक्षत्वे सदा-तनत्वापत्तिः । नापि सामग्रीसापेक्षं कार्यम् । निरपेक्षायास्सामग्रयाः कार्योप-धायकत्वे तस्यास्सदातनतया पुनः कार्यस्य सदातनत्वप्रसङ्गात् । सामग्र्या अपि सामग्र्यन्तरापेक्षायामनवस्थाप्रसङ्गः । तथाच सापेक्षनिरपेक्षाभ्यां व्यावृत्तं कादा-चित्कत्वमसाधारणत्वान्न साध्यसाधकम् । किञ्च प्रागभाववन्निरपेक्षाऽपि सामग्री यथा कादाचित्की तथा भावोऽपि घटादिस्स्यादिति प्रतिकूलतर्कपराहतश्च हेतु-रित्याशयेन शङ्कते—**स्यादेतदि**त्यादिना । उत्तरस्य = ध्वंसस्य, पूर्वः = घटादिः । पूर्वस्य = प्रागभावस्य, उत्तरः = घटादिः । मध्यमस्य = घटस्य, उभयं = ध्वंसः प्रागभावश्चेत्यर्थः । तथाच केचन पूर्वावधिका एव । केचनोत्तरावधिका एव । केचनोभयावधिकाश्च भवन्तीति भावः । एवमनङ्गीकारे दोषमाह — **नहीति** । अन्यथा प्रागभावप्रध्वंसयोरप्यनुपलभ्यमानपूर्वोत्तरावधिकल्पनाप्रसङ्ग इति भावः ।

उपसंहरति—**तद्वदिति** । तथाचावधिसिद्धावपि न तस्य प्राच्यत्वनियमसिद्धि-रिति न तावता कारणसिद्धिरिति भावः । परिहरति—**नस्यादनादित्वादि**त्यादिना । एष कार्यकारणप्रवाहोऽनादिमान् तत्तत्सामग्रीमानित्यर्थः । तत्तत्सामग्र्यपि स्वका-रणपरम्पराधीनेति न तज्जन्यकार्यस्य सदातनत्वप्रसङ्गः । बीजाङ्कुरवत्प्रामाणिकीय-

---

१. विविधा जातिर्यस्य तद्विजाति । एका शक्तिर्यस्य तदेकशक्ति । विजाति चैकशक्ति च कारणं विजात्येकशक्ति । तद्वान् कारणप्रवाहो न भवतीति भावः ।

**तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥६॥**

**प्रागभावो ह्युत्तरकालावधिरनादिः, एवं भावोऽपि घटादिस्स्यात्। अनुपलभ्यमानप्राक्कोटिकघटादिविषयं नेदमनिष्टमिति चेन्न। तावन्मात्रावधिस्वभावत्वे तदहर्वत्पूर्वेद्युरपि तमवधीकृत्य तदुत्तरस्य सत्त्वप्रसङ्गात्। अपेक्षणीयान्तराभावात्। एवं पूर्वपूर्वमपि। भावे तदेव सदातनत्वम्। तदहरेवानेन भवितव्यमित्यस्य स्वभाव इति चेन्न। तस्याप्यह्नः पूर्वन्यायेन पूर्वमपि सत्त्वप्रसङ्गात्। तस्मात्तस्यापि तत्पूर्वकत्वमेवं**

मनवस्था न दूषणमिति भावः। अनादित्वञ्च ध्वंसव्याप्यप्रागभावप्रतियोगित्वम्। तत्तत्प्रागभावपरम्पराप्रतियोगित्वमिति यावत्।

ननु यद्व्यक्तितो यत्कार्यं भवति सैव तत्कारणमस्तु। नतु कार्यजातीये कर्तृजातीयम्। एवमव्यवहितप्राक्कालिकव्यक्तेरेव कारणत्वपर्यवसाने यागादीनामकारणत्वाचालौकिकपरलोकसाधनासिद्धिः। नच नियतजातीयकार्यानुत्पत्तिरिति वाच्यम्। एकजातीयकार्यानुकूलशक्तिमत्त्वेन तदुपपत्तेरित्यत आह — **न विजातीति ॥** विजातीयेष्वेकजातीयकार्यानुकूलशक्तिर्नास्ति। वक्ष्यमाणयुक्तेरिति भावः। कथं तर्हि विजातीये तृणादावग्निकारणत्वं ग्राह्यमित्यत आह — **तत्त्व**इति। सामान्यविशेषाक्रान्तगोचरयोरन्वयव्यतिरेकयोर्निर्णये यत्नवता पुरुषेण भाव्यमित्यर्थः। सामन्ये विशेषे चान्वयव्यतिरेकौ सम्यगाकलय्यैव कार्यकारणभावो विनिश्चेय इति भावः। एवं प्रवाहाऽनादित्वकथनेन हेतोः प्रतिकूलतर्कपराघातो निराकृतः। कादाचित्कत्वस्य सापेक्षव्यावृत्तत्वाभावप्रदर्शनेनाऽसाधारण्यमपि निरस्तमिति तु सारम्।

यदुक्तं परेण 'प्रागभाववन्निरपेक्षापि सामग्री' त्यादिना, तन्निराकरोति— **प्रागभावोहीत्या**दिना **कस्यचिदपूर्वस्य सम्भव** इत्यन्तेन ग्रन्थेन। अनुपलभ्यमानपूर्वोत्तरावधिकयोः प्रागभावध्वंसयोः पूर्वोत्तरावधिकल्पने भावोन्मज्जनापत्तिरेव बाधिका। न तु भावे तथाऽस्ति। किञ्चाऽनुपलभ्यमानप्राक्कोटिकतया भावरूपमपि कार्यं यदि पूर्वावधिशून्यं स्यात्तदा प्रागभाववदेवाऽनादिरपि स्यात्।

१. अनुपलभ्यमानपूर्वावधेरपि कार्यस्येत्यर्थः।

तत्पूर्वस्यापीत्यनादित्वमेव न्याय्यो, नत्वपूर्वानुत्पादे कस्यचिदपूर्वस्य सम्भव इति ! तथापि व्यक्त्यपेक्षया नियमोऽस्तु, न जात्यपेक्षयेति चेन्न । नियतजातीयस्वभावताव्याघातात् । यदि हि यतः कुतश्चिद्भवन्नेव तज्जातीयस्वभावस्स्यात्, सर्वस्य सर्वजातीयत्वमेकजातीयत्वं वा स्यात् । एवं तज्जातीयेन यतः कुतश्चिद्भवितव्यमित्यस्य स्वभावः, तदा-

---

न चेष्टापत्तिः । अनुपलभ्यमानप्राक्कोटिकतयाऽनादिर्योभावस्तावन्मात्रावधिकत्वे कार्यस्य, अवधेरनादित्वेन कार्यस्याप्यनादित्वप्रसङ्गः । नचाऽनादिभावावधिकस्यापि कार्यस्य तदहरेव भवितव्यमिति स्वभाव इति वाच्यम् । भवन्मते कार्यमात्रस्यानुपलभ्यमानप्राक्कोटिकभावावधिकत्वेन तस्याप्यहः, तत्पूर्वस्य तत्पूर्वस्य च सदातनत्वापत्तेर्दुर्वारत्वात् ! तस्मादागन्तुकादेव भावरूपादवधेः कार्यस्य कादाचित्कत्वं निर्वाह्यम् । वस्तुतस्तूत्पत्तिगर्भकादाचित्कत्वनिर्वाहार्थमवधिस्वीकारः । न चोत्तरेणावधिर्नियम्यत इत्यवधेः प्राच्यत्वानियतत्वसिद्धौ कारणत्वसिद्धिर्निराबाधेति हृदयम् । **नत्वपूर्वेति** । अपूर्वानुत्पादे=कार्यस्याऽऽगन्तुककारणघटितसामग्र्यजन्यत्वे, अपूर्वस्य नियतकालोत्पत्तिकस्य कार्यस्य सम्भवो नास्तीत्यर्थः । न विजात्येकेत्यादिकारिकांशं व्याकर्तुमुपक्रमते – **तथापीत्यादिना** । जात्यपेक्षया कारणत्वे निरस्ते व्यक्त्यपेक्षया कारणत्वं व्यभिचारेण सुनिरस्यमिति शङ्कितुरभिप्रायः । परिहरति – **नियतेति** ।। कार्यनियतजातीयत्वे कारणजातिनियमस्य हेतुत्वादिति भावः।

ननु स्वभावादेव कार्यं नियतजातीयमित्यत आह — **यदीति** । किमयं कार्यस्य स्वभावः, यद्भिन्नजातीयेभ्योऽपि जायमानं सजातीयमेव भवति । उत कारणस्य, यद्भिन्नजातीयमपि सजातीयमेव जनयति। आद्ये, कार्यपक्षकं तर्कद्वयमाह — **यदिहीति** । घटो यदि पटजनकयावज्जन्यस्स्यात्तर्हि पटजातीयस्स्यादिति सर्वजातीयत्वापादनम् । यदि घटभिन्नकार्यं यावद्घटजनकजन्यं स्यात्तर्हि घटजातीयं स्यादित्येकजातीयत्वापादनमिति विवेकः । द्वितीये कारणपक्षकं तर्कद्वयमाह – **एवमिति** ।। घटसामग्री यदि पटप्रयोजकयावद्रूपवती स्यात्तर्हि पटजातीयजननी स्यात् । एवं घटान्यकार्यसामग्री यदि घटप्रयोजकयावद्रूपवती स्यात्तर्हि घटजातीयजनिका स्यादिति क्रमेणाऽऽपादनीयमिति भावः ।

**ऽपि सर्वस्मात् सर्वजातीयमेकजातीयं वा स्यात् । कथं तर्हि तृणारणिमणिभ्यो भवन्नाशुशुक्षणिरेकजातीयः? एकशक्तिमत्त्वादिति चेन्न। यदि हि विजातीयेष्वप्येकजातीयकार्यकारणशक्तिस्समवेयान्न कार्यात्कारणविशेषः क्वाप्यनुमीयेत । कारणव्यावृत्त्या च न तज्जातीयस्यैव कार्यस्य व्यावृत्तिरवसीयेत । तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसंभवात् । यावद्दर्शनं व्यवस्था भविष्यतीति चेन्न । निमित्तस्याऽदर्शनात्, दृष्टस्य चानिमित्तत्वात्। एतेन सूक्ष्मजातीयादिति निरस्तम् । अवह्नेरपि तत्सौक्ष्म्याद्धूमोत्पत्त्यापत्तेः। कार्यजातिभेदाभेदयोस्समवायिभेदाभेदावेव तन्त्रं, न निमित्तासमवायिनी इति चेन्न । तयोरकारणत्वप्रसङ्गात् । नहि सति भावमात्रं तत्, किन्तु सत्येव भावः । न च**

---

ननु यद्येकजातीयकारणनियमादेव कार्यनियमस्तर्हि भिन्नजातीयेभ्यः कारणेभ्योऽभिन्नजातीयं कार्यं न स्यादिति शङ्कते — **कथमिति** । अत्र मीमांसकस्समाधत्ते — **एकेति** । कार्यानुपलब्धिलिङ्गकाऽनुमानद्वयभङ्गप्रसङ्गेन तन्निराकरोति — **यदिहीति** । यत्र भिन्नजातीयेभ्योऽभिन्नजातीयं कार्यं दृश्यते, तत्रैव विजातीयेष्वेकजातीयकार्यानुकूला शक्तिस्स्वीक्रियते न तु सर्वत्र । एवं च न दोष इति शङ्कते – **यावदिति** । परिहरति — **निमित्तेत्यादिना** । निमित्तस्य — कारणतावच्छेदकरूपस्य, तृणादिष्वदर्शनात् । दृष्टस्य तृणत्वादेरनिमित्तत्वात्, कारणतानवच्छेदकत्वादित्यर्थः । न च शक्तिरेव तथेति वाच्यम् । कारणत्वग्रहे निश्चिते तत्कल्पनम् । अन्यथा रासभादेरपि तदापत्तेः । तत्कल्पने च कारणत्वग्रह इत्यन्योन्याश्रयप्रसङ्गात् ।

प्राक्छंकितं व्यभिचारं तृणादिष्वग्निकुर्वद्रूपत्वाख्याऽतीन्द्रियजातिविशेषाङ्गीकारेण ये परिहरन्ति तेऽपि निरस्ता इत्याह — **एतेनेति** । ननु तृणादयोऽग्नौ निमित्तकारणम् । न खलु निमित्तकारणसाजात्यवैजात्याभ्यां कार्यसाजात्यवैजात्ये। किन्तु समवायिकारणादेवेति शङ्कते — **कार्येति** । तथापि तृणादावेकैकाभावेऽप्यग्नेर्भावाद्व्यभिचारेण तयोः कारणत्वमेव न स्यादित्याशयेन परिहरति — **तयोरिति** । **नहीति** । व्यभिचारिणोऽपि कारणत्वापातादिति भावः । समवायिका-

जातिनियमे समवायिकारणमात्रं निबन्धनम्। अपितु सामग्री। अन्यथा द्रव्यगुणकर्मणामेकोपादानकत्वे विजातीयत्वं न स्यात्। नच कार्यद्रव्यस्यैषा रीतिरिति युक्तम्। आरब्धदुग्धैरेवाऽवयवैर्दध्यारम्भदर्शनात्।

एतेनाऽपोहवादे नियमो निरस्तः। कार्यकारणभावाद्वेत्यादि विप्लवप्रसङ्गात्। तस्मान्नियतजातीयतास्वभावभङ्गेन व्यक्त्यपेक्षयैव नियम इति [2] फूत्कारेण तृणादेरेवं[3], निर्मन्थनेनारणेरेव, प्रतिफलिततरणिकिरणैर्मणेरेवेति प्रकारनियमवत्त्वेनैव व्यज्यमानस्य कार्यजातिभेदस्य भावात्। दृश्यते च पावकत्वाविशेषेऽपि प्रदीपः प्रासादोदरव्या

---

रणसाजात्यादिकमपि न कार्यसाजात्यादौ तन्त्रमित्याह—नचेति। अपित्विति। सामग्री च तृणादिघटिता भिन्नभिन्नैवेति भावः। नच कार्यमात्रेऽयं नियमः। किन्तु द्रव्य एवेति शङ्कते—नचेति। तत्रापि नियमभङ्गं दर्शयति—आरब्धेति। अग्निं प्रति तृणादीनां तृणाद्यन्यान्यत्वेन कारणत्वमिति वदतो व्यावृत्तिपदार्थवादिनोऽपि मते कार्येण कारणानुमानभङ्गमतिदिशति — एतेनेति। नियमः = अविनाभावः। वह्निं विनापि तदन्यस्मादपि धूमसम्भवेन ततो वह्न्यनुमानासम्भवः। तत्रापि वह्नाविवाऽतद्व्यावृत्तिसत्त्वेन कारणत्वग्रहसम्भवादित्यर्थः।

कार्यकारणभावासिद्धौ स्वभावनियमोऽपि दुरवगम इत्याह — कार्येति। कार्यानुपलब्धिप्रसङ्गरूपविपक्षबाधकतर्कसाध्यत्वात्तस्येति भावः। गत्यन्तराभावाद्व्यक्तीनामेव कारणत्वमित्युपसंहरति—तस्मादिति। वह्न्यवान्तरजातीये तृणादीनां प्रत्येकं कारणत्वस्वीकारादेव सर्वं समञ्जसमिति समाधत्ते—फूत्कारेणेत्यादिना। प्रकारनियमः = सहकारिनियमः। तथाच तत्तद्वह्निषु तत्तत्सहकारिविशेषसम्बन्धनियतवैजात्याङ्गीकारेण 'कथं भिन्नजातीयेभ्योऽभिन्नजातीयं कार्यमि'त्यादिशङ्काया नावकाश इति भावः। वैजात्यसिद्धिं द्रढयति — दृश्यते चेत्यादिना॥

---

१. एकजातीयकार्यस्य विजातीयेभ्योऽपि दर्शनादपोहवादेऽपि कार्यकारणभावानियमो निराकृत इति वाऽर्थः। २. न इति अ०. पा०.। ३. एवकारो भिन्नक्रमः। तृणादेः—

पकमालोकमारभते, न तथा ज्वालाजालजटिलोऽपि दारुदहनो, न तराञ्च कारीषः ॥

यस्तु तं नाऽऽकलयेत्, स कार्यसामान्येन कारणमात्रमनुमिनुयादिति किमनुपपन्नम्? एवं तर्हि धूमादावपि कश्चिदनुपलक्षणीयो विशेषः स्याद्यस्य दहनापेक्षेति न धूमादिसामान्याद्वह्निसामान्यादिसिद्धिः। एतेन व्यतिरेको व्याख्यातः। तथाच कार्यानुपलब्धिलिङ्गभङ्गे स्वभावस्याप्यसिद्धेर्गतमनुमानेनेति चेत्, प्रत्यक्षानुपलम्भगोचरो जातिभेदो न कार्यप्रयोजक इति वदतो बौद्धस्य शिरस्येष प्रहारः। अस्माकन्तु यत्सामान्याक्रान्तयोर्ययोरन्वयव्यतिरेकवत्ता तयोस्तथैव हेतुहेतुमद्भावनिश्चयः। तथाचाऽवान्तरविशेषसद्भावेऽपि न नो विरोधः। [1]किं पुन-

विशेषस्यास्य दुरूहत्वेन सामान्यबुद्ध्यगोचरत्वेऽपि न क्षतिरित्याह—**यस्त्विति**। ननु तृणस्य वह्निविशेष इव वह्नेरपि धूमविशेष एव कारणत्वं, न तु धूममात्र इति शङ्कया न कार्यात्कारणमात्रं क्वाप्यनुमीयेतेति शङ्कते—**एवं तर्हीति**। वह्नेर्धूमविशेष एव प्रयोजकत्वाद्वह्निव्यतिरेकाद्धूमव्यतिरेकोऽपि नानुमीयेतेत्याह—**एतेनेति**। पूर्वपक्षमुपसंहरति—**तथाचेति**। बौद्धानां स्वभावनियमो विपक्षबाधकमानवेदनीयः। बाधकमानञ्च कार्यमनुपलब्धिश्च। पूर्वोक्तदिशा तयोर्भङ्गे स्वभावनियमोऽपि न स्यात्। एवञ्चानुमानमात्रोच्छेदः। कार्यानुपलब्धिस्वभावैस्त्रिधैवानुमानाभ्युपगमादिति भावः। तदेतद्दूषणं प्रत्यक्षसिद्धं बजित्वसामान्यमङ्कुरस्य न प्रयोजकं, किन्त्वतीन्द्रियं कुर्वद्रूपत्वमिति वदतो बौद्धस्य, नास्माकमिति परिहरति—**प्रत्यक्षेति**।

फूत्कारेणैवेत्यादिरीत्या योजनीयः। फूत्कारादेस्तृणादीनां नियमान्नियतसामग्रीव्यङ्ग्याया जातेर्भेदो वर्तते। सामग्री भिद्यते कार्यं च न भिद्यत इति हि न सम्भवति। तथाचात्रानुमानप्रयोग इत्थम्—तार्णादिवह्नयः—वाह्नित्वावान्तरजातिभेदवन्तः—विलक्षणसामग्रीजन्यत्वात्। तैलवर्त्यादिविलक्षणसामग्रीकप्रदीपवदिति। १. आक्षेपार्थे किं शब्दः।

स्तार्णादौ दहनसामान्यस्य प्रयोजकम्? तृणादीनां विशेषं एव नियतत्वादिति चेत्। तेजोमात्रोत्पत्तौ पवनो निमित्तम्, अवयवसंयोगोऽसमवायी, तेजोऽवयवाः समवायिनः। इयमेव सामग्री गुरुत्ववद्द्रव्यसहिता पिण्डितस्य। इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनं, तत्राऽपि जलं प्राप्य दिव्यं, पार्थिवं प्राप्य भौमम्, उभयं प्राप्यौदर्यमारभत इति स्वयमूहनीयम्। तथाप्येकमेकजातीयमेव वा किञ्चित्कारणमस्तु, कृतं विचित्रेण। दृश्यते ह्यविलक्षणमपि विलक्षणाऽनेककार्यकारि। यथा प्रदीप एक एव तिमिरापहारी, वर्तिविकारकारी, रूपान्तरव्यवहारकारीति चेन्न—वैचित्र्यात्कार्यस्य॥

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।
शक्तिभेदो नचाभिन्नः स्वभावो दुरतिक्रमः॥७॥

---

**तृणादीनां विशेष एवेति**। तथाच सामान्यमाकस्मिकं स्यादिति भावः। पिण्डितस्य, सुवर्णस्येत्यर्थः। नन्वेतावता कारणमात्रे सिद्धेऽपि तस्यैकव्यक्तित्वेनैकजातीयत्वेन वाऽस्मदादिभिरेव ज्ञातुं शक्यमिति नेश्वरसिद्धिरिति सापेक्षत्वादित्यत्र सिद्धसाधनं शङ्कते—**तथापीति**। नचाविचित्रात्कारणाद्विचित्रं कार्यमदृष्टचरमित्याह—**दृश्यते हीति**। तथाच तद्दृष्टान्तेनान्येषामपि विचित्रकार्याणामविचित्रकारणजन्यत्वमनुमेयमिति भावः। परिहरति—**न वैचित्र्यादित्यादिना**। दृष्टान्तेप्यविचित्रकारणजन्यत्वमसिद्धमिति भावः। कार्याणां क्रमः एकस्य कारणस्य सम्बन्धी नेत्यर्थः। कार्याणां वैचित्र्यं समस्य = एकजातीयस्य कारणस्य सम्बन्धि न। शक्तिविशेषोऽपि न कार्यवैचित्र्यहेतुः। यतो धर्म्यभिन्नस्सः। नच स्वभावविशेषादपि कार्यवैचित्र्यमुपपादयितुं शक्यम्। एकत्र कार्यजनने हेतुर्यस्स्वभावस्तदितरकार्यजननेऽपि तत्स्वभावो वाच्यः। अन्यथा एकस्य स्वभावभेदादनेकत्वप्रसङ्ग इति कार्यमात्रस्यैकस्वभावजन्यत्वादैकजात्यं स्यादिति कारिकार्थः।

---

१. स्वे स्वे कार्यविशेषे नियततयाऽङ्गीकारादिति भावः। एवञ्च अनुवृत्तं किमपि नास्तीत्याशयः।

न तावदेकस्मादनपेक्षादनेकम्[1] । अक्रमात् क्रमवत्कार्यानुपपत्तेः । क्रमवत्तावत्कार्यकारणस्वभावत्वात्तस्य तत्तथा यौगपद्यवदिति चेत् । अयमपि क्षणभङ्गे परिहारो, न तु सहकारिवादे[2] । पूर्वपूर्वानपेक्षायां क्रमस्यैव व्याहतेः । क्रमनियमेत्वनपेक्षानुपपत्तेः । नाप्यनेकमविचित्रम् । यदि ह्यन्यूनमनतिरिक्तं वा दहनकारणमदहनस्यापि हेतुर्नासावदहनो दहनो वा स्यादुभयात्मको वा स्यात् । नचैवम् । शक्तिभेदादयमदोष इति चेन्न । धर्मिभेदाऽभेदाभ्यां तस्यानुपपत्तेः । असङ्कीर्णोभयजननस्वभावत्वादयमदोष इति चेन्न । नहि स्वाधीनमस्यादहनत्वम्, अपितु तज्जनकस्वभावाधीनम् । तथाच तदायत्तत्वाद्दहनस्यापि तत्त्वं केन वारणीयम् ?

---

अक्रमादिति । क्रमप्रयोजकसहकारिविधुरादित्यर्थः । क्रमवदिति । यथा दीपः स्वभावविशेषादेव कार्ययौगपद्ये कारणम्, एवमक्रमोऽपि हेतुः क्रमिककार्योत्पादक इत्यर्थः । तत् = कार्यं, तथा = क्रमवदित्यर्थः । अयमपीति । क्षणभङ्गपक्षे कार्ययौगपद्यं कुतो नेति शङ्कायां, क्रमिककार्योत्पादनक्षमस्यैव क्षणस्योत्पादादिति परिहारो वक्तुं शक्यते । स्थैर्यपक्षे तु क्रमिकसहकार्यपेक्षां विना तादृशस्वभाव एवासिद्ध इति भावः । कारणवैचित्र्यानङ्गीकारे कार्यवैजात्यं न स्यादित्याह – नाप्यनेकमिति । दहनजनकस्यैव धर्मभेदमादायाऽदहनजनकत्वान्नैष दोष इति शङ्कते – शक्तिभेदादिति । धर्मभेदस्य धर्म्यभिन्नत्वे कार्यवैजात्यानुपपत्तिः । धर्मिभिन्नत्वे तस्यैव कारणान्तरत्वेनैककारणत्ववादानुपपत्तिरिति परिहरति – धर्मिभेदाभेदाभ्यामिति । ननु परस्परविलक्षणानेकस्वभावस्य कारणत्वमङ्गीक्रियत इति न दोष इति शङ्कते – असङ्कीर्णेति । कारणे दहने जनयितव्येऽदहनजनकत्वस्वभावोऽनुवर्तते न वा ? अनुवर्तते चेद्वैजात्यासिद्धिः । नानुवर्तते चेददहनजनकस्वभावमतिक्रम्य स्वभावान्तरमाश्रित्य दहनजनकत्वाङ्गीकारे कारणस्यैकजातीयत्वव्याघात इति परिहरति – नहीत्यादिना ॥

---

१. कार्यमित्यधिकः पा० । २. सहकारिसान्निधिक्रमेणैकमेव तत्तत्कार्यं करोतीति सहकारिवादः । न तत्रायं बाध इति भावः ।

नहि तस्मिञ्जनयितव्ये नासौ तत्स्वभावः । तस्माद्विचित्रत्वात्कार्यस्य, कारणेनापि विचित्रेण भवितव्यम् । नच तत्स्वभावतस्तथा । ततस्सहकारिवैचित्र्यानुप्रवेशः । न तु क्षणोऽपि तदनपेक्षस्तथा भवितुमर्हतीति । अस्तु दृष्टमेव सहकारिचक्रं, किमपूर्वकल्पनयेति चेन्न । विश्ववृत्तितः ।

विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा ।

दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥८॥

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनं, न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत । नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत् । लाभपूजाख्यात्यर्थमिति चेत्—लाभादय एव किन्निबन्धनाः ? । न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः । यतो वाऽनेन लब्धव्यं, यो वैनं पूजयिष्यति । स किमर्थम् ? ख्यात्यर्थमनुरागार्थञ्च । जनो दातरि मानयितरि च रज्यते । 'जनानुरागप्रभवा हि सम्पद'इति चेन्न । नीतिनर्मसचिवेष्वेव तदर्थं दानादिव्यवस्थापनात् । त्रैविद्यतपस्विनो धूर्तबका एवेति चेन्न । तेषां दृष्टसम्पदं प्रत्यनुपयोगात् । सुखार्थं तथा करोतीति चेन्न । नास्तिकैरपि

---

उपसंहरति — **तस्मादिति** । बौद्धमतेऽपि सहोत्पन्नविचित्रसहकारिसहितस्यैव विचित्रकार्यजनकत्वमित्याह — **न तु क्षणोपीति** । ननु दृष्टकारणमेलनात्मिकैव सामग्री विचित्रकार्यजननी, सा चास्माभिरेव शक्यज्ञानेति प्रकारान्तरेण सिद्धसाधनमाशङ्कते — **अस्त्विति** । परिहरति — **विश्वेति** । प्रागेव, सुतरामेवेत्यर्थः । निष्फलेऽपि नित्ये वैदिककर्मणि प्रवृत्तिरस्तीत्याशङ्क्य सोपहासं

---

१. यागादिषु विश्वस्य = जगतः प्रवृत्तिर्दृश्यते । न सा निष्फला । नापि दुःखैकफला । विश्ववृत्तित्वादेव । दृष्टपूजादिफलाऽपि सा न भवति, स्वरूपतोऽहेतुत्वात् ।

२. भूतानां परिणतिः कार्यं, तत्परम्परा । उप्तं बीजमङ्कुरं जनयति । तत् सस्यं, तद् व्रीह्यादिकमिति दृष्टमेव पूर्वपूर्वमुत्तरोत्तरं प्रति कारणमिति यदुच्यतेत्यर्थः । अथवा भूतानां सहकारिणां परिणतिः = साकल्यम् ।

तथा करणप्रसङ्गात् । सम्भोगवत् । लोकव्यवहारसिद्धत्वादफलमपि क्रियते, वेदव्यवहारसिद्धत्वात् सन्ध्योपासनवदिति चेद्—गुरुमतमेतन्न तु गुरोर्मतम् । ततो नेदमनवसर एव वक्तुमुचितम् । वृद्धैर्विप्रलब्धत्वाद्बालानामिति चेन्न । वृद्धानामपि प्रवृत्तेः । नच विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते । तेऽपि वृद्धतरैरित्येवमनादिरिति चेत् । न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात् । इदं प्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत्—किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति । कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः । केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः ? । नह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः । यतः पाखण्डाभिमतेष्वप्येवं दृश्यत इति चेन्न । हेतुदर्शनाऽदर्शनाभ्यां विशेषात् । अनादौ चैवम्भूतेऽनुष्ठाने प्रतार्यमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, नत्वनुष्ठानागोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात् ॥

अस्तु दानाध्ययनादिरेव विचित्रो हेतुर्जगद्वैचित्र्यस्येति चेन्न । क्षणिकत्वादपेक्षितस्य कालान्तरभावित्वात् ॥

---

परिहरति—**गुरुमतमिति** । प्रभाकरमतमित्यर्थः । गुरोः, नैय्यायिकवृद्धस्येत्यर्थः । निष्फले विधिशतेनाऽपि प्रवर्तयितुमशक्यत्वान्नित्येऽपि फलमङ्गीकर्तव्यम् । तथाच गुरुमतमनुचितमेवेति भावः । ननु दृष्टफलनिरपेक्षा पाषण्डप्रवृत्तिरपि परलोकफला स्यादिति शङ्कते—**यत इति** । पाषण्डप्रवृत्तिः कर्मलाघवेन सुखावस्थानरूपदृष्टफलैवेति परिहरति — **हेत्विति** । अवैदिकैरेव बहुवित्तव्ययाऽयासोपदेशन प्रतारणा क्रियते नत्वास्तिकैरित्याह — **अनादाविति** । **अन्यथेति** । अन्यथा = वैदिकमतस्याप्रामाणिकत्व इत्यर्थः । प्रकारान्तरेण सिद्धसाधनं शङ्कते—**अस्त्विति** । परिहरति — **क्षणिकत्वादित्यादिना** । अतिशयं अदृष्टरूपव्यापारमन्तरा, चिर-

चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥

तस्मादस्त्यतिशयः कश्चित् । ईदृशान्येवैतानि स्वहेतुबलायातानि । येन नियतभोगसाधनानीति चेत् । तदिदममीषामतीन्द्रियं रूपं सहकारिभेदो वा ? । नतावदैन्द्रियकस्यातीन्द्रियं रूपम् । व्याघातात् । द्वितीयेत्वपूर्वसिद्धिः । सिद्ध्यतु भूतधर्म एव गुरुत्वादिवदतीन्द्रियः । अवश्यं त्वयाप्येतदङ्गीकरणीयम् । कथमन्यथा मन्त्रादिभिः प्रतिबन्धः । तथाहि—करतलानलसंयोगाद्यादृशादेव दाहो दृष्टस्तादृशादेव मन्त्रादिप्रतिबन्धे सति दाहो न जायते । असति तु जायते । तत्र न दृष्टवैगुण्यमुपलभामहे । नापि दृष्टसाद्गुण्येऽदृष्टवैगुण्यं सम्भावनीयम् । तस्यैतावन्मात्रार्थत्वात् । अन्यथा, कर्मण्यपि विभागः कदाचिन्न जायेत । नच प्रतिबन्धकाभावविशिष्टा सामग्री कारणम् । अभावस्याकारणत्वात् । तुच्छोह्यसौ । प्रतिबन्धकोत्तम्भकप्रयोगकाले च तेन विनापि कार्योत्पत्तेः । प्राक्प्रध्वंसादिविकल्पेन चाऽनियतहेतुकत्वापातात् । अकि-

---

ध्वस्तं कर्म फलाय नालमित्यर्थः । नन्वदृष्टासिद्धावपि भूतधर्म एव तदस्त्वित्यत्र प्रत्यात्मनियमाद्भुक्तेरिति हेतुं व्याचष्टे — **सम्भोग इति** । संस्कृतैरपि शरीरेन्द्रियादिभूतैर्निर्विशेषाणामात्मनां, सम्भोगः — सम्यग्भोगः, विचित्रसुखदुःखभाक्त्वं न स्यात् । भूतानां साधारणत्वादिति भावः ।

ननु स्वहेतुबलोत्पन्नस्वरूपविशेषवन्ति शरीरादीन्येव नियतात्मभोगसाधनानीति शङ्कते — **ईदृशानीति** । अत्र द्विधा विकल्प्य, आद्ये व्याघातः, द्वितीये स्वाभिमतसिद्धिरिति परिहरति — **तदिदमिति** । अदृष्टस्य भूतधर्मत्वं शङ्कते — **सिद्ध्यत्विति** । गुरुत्वादिवदित्यत्रादिपदेन मीमांसकमतसिद्धशक्तिपरिग्रहः । शक्तावर्थापत्तिं प्रमाणयति — **तथाहीत्यादिना** । प्रतिबन्धकाभावस्य कारणत्वं निराकरोति — **नचेति** । **तुच्छ इति** । तुच्छत्वं विध्यगोचरत्वं । मणिमन्त्रादीनां प्रतिबन्धकत्वान्यथानुपपत्तिरपि शक्तिसाधिकेति द्वितीयामर्थापत्तिमाह — **अकि-**

श्चित्करस्य प्रतिबन्धकत्वायोगात्। किञ्चित्करत्वे चाऽतीन्द्रियशक्तेः स्वीकारात्। मन्त्रादिप्रयोगे चेतरेतराभावस्य सत्त्वेऽपि कार्यानुदयात्। अतोऽतीन्द्रियं किञ्चिद्दाहानुगुणमनुग्राहकमग्नेरुन्नीयते यस्यापकुर्वतां प्रतिबन्धकत्वमुपपद्यते। यस्मिन्नविकले कार्यं जायते। यस्यैकजातीयत्वादनियतहेतुकत्वं निरस्यत इति॥ अत्रोच्यते।

भावो यथा तथाऽभावः कारणं कार्यवन्मतः।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः॥ १०॥

नह्यभावस्याकारणत्वे प्रमाणमस्ति। नहि विधिरूपेणासौ तुच्छ इति स्वरूपेणापि तथा, निषेधरूपाऽभावे विधेरपि तुच्छत्वप्रसङ्गात्। कारणत्वस्य भावत्वेन व्याप्तत्वात्तन्निवृत्तौ तदपि निवर्तत इति चेन्न। परिवर्त्तप्रसङ्गात्। अन्वयव्यतिरेकानुविधानस्य च कारणत्वनिश्चयहेतोर्भाववदभावेऽपि तुल्यत्वात्। अभावस्यावर्जनीयतया सन्निधिर्न तु-

---

श्चित्करस्येत्यादिना। शक्त्यङ्गीकारे प्रयोजनान्तरमाह — **यस्येति**। व्यभिचारेण तृणादीनां कारणत्वमनुपपद्यमानमनुगतसामर्थ्यरूपां शक्तिं साधयतीति भावः। प्रतिबन्धकाभावस्य कारणत्वाङ्गीकारेणैवोपपत्तौ नातिरिक्ता शक्तिरिसिद्ध्यतीत्याशयेनाभावस्य कारणत्वमादौ व्यवस्थापयति—**अत्रोच्यत** इत्यादिना। भावो यथाऽन्वयव्यतिरेकशालित्वेन कारणमेवमभावोऽपि कारणमित्यर्थः। कार्यवदिति दृष्टान्तोपन्यासः। अयं भावः — कारणत्वं यदि भावत्वनियतमेवस्यात्तर्हि कार्यत्वमपि तन्नियतमेवेत्यभावस्य कार्यत्वमपि न स्यादिति। द्वितीयामर्थापत्तिं निराकरोति — **प्रतिबन्ध** इति। सामग्र्यन्तर्गतस्य मन्त्राद्यभावस्य, विगमो मन्त्रादिरूपः, सैव विसामग्री प्रतिबन्धः। तद्धेतुः = तत्प्रयोक्ता पुरुषः प्रतिबन्धकः। तथाच शक्त्यनङ्गीकारेऽपि प्रतिबन्धकस्य किञ्चित्करत्वं नानुपपन्नमिति भावः। अभावस्य कारणत्वमेव द्रढयति—**नहीत्यादिना**। वस्तुतस्त्वनुपलब्धेरभावज्ञाने, विहिताकरणस्य प्रत्यवाये, निर्दोषत्वस्य वेद-

हेतुत्वेनेति चेत्, तुल्यम्। प्रतियोगिनमुत्सारयतस्तस्यान्यप्रयुक्तस्सन्निधिरिति चेत्, तुल्यम्। भावस्याभावोत्सारणं स्वरूपमेवेति चेद्भावस्यापि भावोत्सारणं स्वरूपान्नातिरिच्यते। तस्माद्यथा भावस्यैव भावो जनक इति नियमोऽनुपपन्नस्तथा भाव एव जनक इत्यपि। को ह्यनयोर्विशेषः। प्रतिबन्धकोत्तम्भकप्रयोगकाले तु व्यभिचारस्तदा स्यात्, यदि यादृशे सति कार्यानुदयस्तादृश एव सत्युत्पादः स्यात्! नत्वेवं तदापि प्रतिपक्षस्याभावात्। असत्प्रतिपक्षो हि प्रतिबन्धकाभिमतो मन्त्रः प्रतिपक्षः। स च तादृशो नास्त्येव। यस्त्वस्ति, नासौ प्रतिपक्षः। तथापि विशेष्ये सत्येव विशेषणमात्राभावस्तत्र, स चोत्तम्भकमन्त्र एवेत्यन्यैव सामग्रीति चेन्न। विशिष्टस्याप्यभावात्। नहि दण्डिनि सत्यऽदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैव केवलस्येति युक्तम्। यथाहि केवलदण्डसद्भावे उभयसद्भावे द्वयाभावे वा केवलपुरुषाभावस्सर्वत्राविशिष्टस्तथा केवलोत्तम्भकसद्भावे प्रतिबन्धकोत्तम्भकसद्भावे द्वयाभावे वा केवलप्रतिबन्धकाभावोऽविशिष्ट इत्यवधार्यताम्। अथैवम्भूतसामग्रीत्रयमेव किं नेष्यते? कार्यस्य तद्व्यभिचारात्। जातिभेदकल्पनायाश्च प्रमाणाभावात्। यथोक्तेनैवोपपत्तेः। भावे वा काममसावस्तु। का नो हानिः। प्राक्प्रध्वंसविकल्पोऽपि नानियतहेतुकत्वापादकः। यस्मिन् सति कार्यं न जायते तस्मिन्नसत्येव जायते इत्यत्र संसर्गाभावमात्रस्यैव प्रयोजकत्वात्।

---

प्रामाण्यज्ञाने, कारणत्वस्य मीमांसकैरप्यङ्गीकृतत्वेन, अभावस्य कारणत्वानभ्युपगमः सिद्धान्तविरुद्ध इति हृदयम्। उत्तेजकाभावविशिष्टमण्यादीनां प्रतिबन्धकत्वं, तदभावस्य कारणत्वम्। तथाचोत्तम्भकप्रतिबन्धकसद्भावे कार्योत्पत्तावपि न व्यभिचारः, विशिष्टाभावस्यानपायादित्याह — **प्रतिबन्धके**त्यादि। ननु विशेषणाभावविशेष्याभावोभयाभावघटितसामग्रीत्रयं हेतुरस्तु। किं विशिष्टाभावकल्पनयेत्याशङ्क्य व्यभिचारेण निराकरोति — **अथेति**। प्राक्प्रध्वंसाभावविकल्पेन प्रतिबन्धकाभावस्य कारणत्वं नास्तीति शङ्कां निराकरोति — **प्राक्प्रध्वंसे**-

यस्तु संसर्गाभावतादात्म्यनिषेधयोर्विशेषमनाकलयन्नितरेतराभावेन प्रत्यवतिष्ठते, स प्रतिबोधनीयः। तथाप्यभावेषु जातेरभावात् कथं त्रयाणामुपग्रहः स्यात्, अनुपगृहीतानाञ्च कथं कारणत्वावधारणमिति चेत्। माभूज्जातिः। नहि तदुपगृहीतानामेव व्यवहाराङ्गत्वम्। सर्वत्रोपाधिमद्व्यवहारविलोपप्रसङ्गात्। एतेन 'प्रतिबन्धके सत्यपि तज्जातीयस्यान्यस्याऽभावसम्भवात् कार्योत्पादप्रसङ्गः, अनुत्पादे वा ततोऽप्यधिकं किञ्चिदपेक्षणीयमस्ती' ति निरस्तम्। यथाहि 'तज्जातीये सति कार्यं जायते, अर्थादसति न जायते' इति स्थिते तद्भावेऽपि तज्जातीयान्तराभावान्न भवितव्यं कार्येणेति न, तथैतदपि, अनुकूलवत् प्रतिकूलेऽपि सति तज्जातीयान्तराभावानामकिञ्चित्करत्वादिति। यत्त्वकिञ्चित्करस्येति, तदप्यसत्। सामग्रीवैकल्यं प्रतिबन्धपदार्थो मुख्यः। स चात्र मन्त्रादिरेव[2]। न त्वसौ प्रतिबन्धकः। ततः किं? तस्याकिञ्चित्करत्वेन। तत्प्रयोक्तारस्तु प्रतिबन्धारः। तेच किञ्चित्करा एवेति किमसमञ्जसम्?

ये तु व्युत्पादयन्ति, 'कार्यानुत्पाद एव प्रतिबन्ध' इति। तैः

---

त्यादि। प्रतिबन्धकसत्वे प्रतिबन्धकस्यान्योन्याभावसत्वेऽपि कार्यानुदयादिति प्रदर्शितम्, प्रतिबन्धकाभावकारणत्वे व्यभिचारं निराकरोति — **यस्त्विति**। **प्रतिबोधनीय** इति। प्रतिबन्द्या बोधनीय इत्यर्थः। प्रतिबन्दी च प्रतिबन्धकसत्त्वेऽपि तदन्योन्याभावमादाय यदि कार्योत्पत्तिप्रसङ्ग इत्युच्यते, तदा सामग्रीसत्त्वेऽपि तदन्योन्याभावमादाय कार्यानुत्पादः किं न स्यादिति। प्रतिबन्धकसामान्याभावस्य कारणत्वाङ्गीकारेण विशेषाभावमादाय व्यभिचारशङ्का निरस्तेत्याह — **एतेनेति**। कार्यानुत्पादहेतुतया मन्त्रादीनामेव प्रतिबन्धकत्वम्, न तु पुरुषस्येत्याशङ्क्य निराकरोति — **येत्विति**। कारणाभावात्कार्याभाव इति

---

१. अयमाशयः — प्रतिबन्धके सति कार्यानुत्पत्तिः। प्रतिबन्धकाभावे सति कार्योत्पत्तिरित्यत्रापि एकस्मिन् प्रतिबन्धके सति सजातीयान्तराणामभावात् कार्येण भवितव्यमित्येतदपि न प्राप्नोतीति। २. मन्त्रादिरेवेति पा०।

प्रतिबन्धमकुर्वन्त एव प्रतिबन्धका इत्युक्तं भवति। तथाहि – कार्यस्यानुत्पादः, प्रागभावो वा स्यात्? तस्य कालान्तरप्राप्तिर्वा? न पूर्वः। तस्यानुत्पाद्यत्वात्। न द्वितीयः, कालस्य स्वरूपतोऽभेदात्। तदुपाधेस्तु मन्त्रमन्तरेणापि स्वकारणाधीनत्वात्। प्रागभावावच्छेदककालोपाधिस्तदपेक्ष इति चेन्न — मन्त्रात्पूर्वमपि तस्य भावात्। तस्मात् सामग्रीतत्कार्ययोः पौर्वापर्यनियमात्तदभावयोरपि पूर्वापरभाव उपचर्यते। वस्तुतस्तु तुल्यकालत्वमेवेति नायं पन्थाः। न चेदेवं शक्तिस्वीकारेऽपि कः प्रतीकारः? । तथाहि – प्रतिबन्धकेन शक्तिर्वा विनाश्यते, तद्धर्मो वा, धर्मान्तरं वा जन्यते, न जन्यते वा किमपि? इति पक्षाः। तत्र किञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तेः, विपरीतधर्मान्तरजनने, तदभावे सत्येव कार्यमित्यभावस्य कारणत्वस्वीकारः, प्रागभावादिविकल्पावकाशश्च। तद्विनाशे तद्धर्मविनाशे वा पुनरुत्तम्भकेन तज्जननेऽनियतहेतुकत्वं, पूर्वं स्वरूपोत्पादकादिदानीमुत्तम्भकादुत्पत्तेः। न च समानशक्तिकतया तुल्यजातीयत्वान्नैवमिति साम्प्रतम्। विजातीयेषु समानशक्तिनिषेधात्। न च प्रतिबन्धकशक्तिमेवोत्तम्भको विरुणद्धि, न तु भावशक्तिमुत्पादयतीति साम्प्रतम्। तदनुत्पादप्रसङ्गात्[1]। कालविशेषात्तदुत्पादे तदेवानियतहेतुकत्वमिति।

स्यादेतत्। माभूत्सहजशक्तिः। आधेयशक्तिस्तु स्यात्। दृश्यते

---

व्यवहारस्यौपचारिकत्वं दर्शयति - **तस्मादित्यादिना**। प्रतिबन्धकाभावस्य कारणत्वानङ्गीकारे शक्त्यङ्गीकारेऽपि न निस्तारः। तदङ्गीकारे तु शक्तिकल्पनमफलमेवेत्याशयेनाह – **नचेदेवमिति**॥ एवं सहजशक्तिवादं निराकृत्य, आधेयशक्तिमपि निराकर्तुं पूर्वपक्षमुद्भावयति – **स्यादेतदित्यादिना**।

---

१. पूर्वं प्रतिबन्धकविनष्टयोः शक्तिधर्मयोः पुनरुत्तम्भकेनाजनने तयोरनुत्पत्तिरेव स्यात्, ततश्च कार्यस्याप्यनुत्पत्तिप्रसङ्ग इति भावः।

हि प्रोक्षणादिना व्रीह्यादेरभिसंस्कारः। कथमन्यथा कालान्तरे तादृशानामेव कार्यविशेषोपयोगः। न च मन्त्रादीनेव सहकारिणः प्राप्य ते कार्यकारिण इति साम्प्रतम्। तेषु चिरध्वस्तेष्वपि कार्योत्पादात्। नापि प्रध्वंससहायास्ते तथा। एवं हि यागादिप्रध्वंसा एव स्वर्गादीनुत्पादयन्तु, कृतमपूर्वकल्पनया। तेषामनन्तत्वादनन्तफलप्रवाहः प्रसज्यते इति चेत्, अपूर्वेऽपि कल्पिते तावानेव फलप्रवाह इति कुतः? अपूर्वस्वाभाव्यादिति चेत्, तुल्यमिदमिहाऽपि। तावतापि तत्प्रध्वंसो न विनश्यतीति विशेषः॥

स्यादेतत्। उपलक्षणं प्रोक्षणादयो, न तु विशेषणम्। तथा चाविद्यमानैरपि तैरुपलक्षिता व्रीह्यादयस्तत्रतत्रोपयोक्ष्यन्ते। यथा गुरुणा टीका, कुरुणा क्षेत्रमिति चेत्। तदसत्। न हि स्वरूपव्यापारयोरभावेऽप्युपलक्षणस्य कारणत्वं कश्चिदिच्छति, अतिप्रसङ्गात्। व्यवहारमात्रं तु तज्ज्ञानसाध्यं, न तु तत्साध्यम्। तज्ज्ञानमपि स्वकारणाधीनं, न तु तेन निरन्वयध्वस्तेन जन्यते। अस्तु वा तत्राप्यतिशयकल्पना, किन्नाश्छिन्नम्! यद्वा, यागादेरप्युपलक्षणत्वमस्तु। तदुपलक्षितः कालो यज्वा वा स्वर्गादि साधयिष्यति, कृतमपूर्वेण। नच देवदत्तस्य स्वगुणाकृष्टाः शरीरादयो भोगाय, तद्भोगसाधनत्वात्, स्रगादिवदित्यन्वयिबलादपूर्वसिद्धेर्नाविशेष इति साम्प्रतम्। इच्छाप्रयत्नज्ञानैर्यथायोगं सिद्धसाधनात्। न च तद्रहितानामपि भोग इति युक्तिमत्, येन ततोप्यधिकं सिद्ध्येत्। नापि स्वगुणोत्पादिता इति साध्यार्थः। मनसाऽनैकान्तिकत्वात्। नापि कार्यत्वे सतीति विशेषणीयो हेतुः। तथा-

---

कालान्तरे = अवहननावसरे। निरन्वयध्वस्तेन, अनुत्पादितव्यापारं ध्वस्तेनेत्यर्थः। तत्रापि = उपलक्षणतयाऽभ्युपगतेऽपि। प्रतिबन्द्या प्रोक्षणस्योपलक्षणत्वं निरस्यति — यद्वेति। अनुमानेन यज्ञस्यापूर्वसिद्धया प्रोक्षणादिवैलक्षण्यमाशङ्क्य, अनुमानमेव सिद्धसाधनेन निराकरोति — न च देवदत्तस्येत्यादिना।

ष्युपलक्षणैरेव सिद्धसाधनात् । असतां तेषां कथमुत्पादकत्वमिति चेत्, तदेतदभिमन्त्रणादिष्वपि तुल्यम् । तस्माद्भावभूतमतिशयं जनयन्त एव प्रोक्षणादयः कालान्तरभाविने फलाय कल्पन्ते । प्रमाणतस्तदर्थमुपादीयमानत्वात्[1] । यागकृषिचिकित्सावदिति । अन्यथा कृष्यादयो दुर्घटाः प्रसज्येरन् । बीजादीनामापरमाण्वन्तभङ्गात्, तेषु चावान्तरजातेरभावान्नियतजातीयकार्यारम्भाऽनुपपत्तेः ॥ अत्रोच्यते ।

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥

यथा हि देवताविशेषोद्देशेन हुताशने हविराहुतयः समन्त्राःप्रयुक्ताः पुरुषमभिसंस्कुर्वते, न वह्निं, नापि देवताः, तथा व्रीह्याद्युद्देशेन प्रयुज्यमानः प्रोक्षणादिः पुरुषमेव संस्कुरुते, न तम् । यथा च कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचां सञ्चरणजलक्षरणरूपा क्रिया, तथा व्रीह्यादीनां तत्तदुत्तरक्रियाविशेषाः । यथा चैकत्र कर्तृकर्मसाधनवैगुण्यात् फलाभावस्तथा परत्रापि । आगमिकत्वस्योभयत्रापि तुल्यत्वात् । न तर्हि बर्हिष इव व्रीह्यादेः पुनरुपयोगान्तरं स्यात् ।

---

उपलक्षणैरेवेति । जन्मान्तरीयज्ञानेच्छादिभिरित्यर्थः । दृष्टान्ते साध्यवैकल्यं निराकरोति – अन्यथेति । प्रोक्षणादिना पुरुषस्यैवातिशयः, न व्रीह्यादेरित्याशयेन समाधत्ते — अत्रोच्यत इति । प्रोक्षणाभ्युक्षणादिभिः पुरुषस्यैव संस्कारो भवति, न व्रीह्यादेरित्यर्थः । परमाणूनामेकजातीयत्वेऽपि पाकजगुणविशेषाङ्गीकारेण नियतजातीयकार्योत्पत्तिसम्भवान्न कृष्यादिदृष्टान्तेन व्रीह्यादावाधेयशक्तिसिद्धिरित्याह— स्वगुणा इति । ननूत्पादिताङ्गापूर्वस्य बर्हियागस्य यथा न पुनर्विनियोगः, एवं पुरुषे संस्कारमुत्पाद्य चरितार्थानां व्रीह्यादीनामन्यत्र विनियोगो न स्यात् । 'व्रीहिभिर्यजेते'ति विधिबलादुपयोगेऽपि विशेषाभावेन प्रोक्षितानामप्रोक्षितानामपि विनियोगः किं न स्यादित्याशङ्क्य परिहरति– न तर्हीत्यादिना । यन्निष्ठव्यापारेण

---

१. भ्रमादिकृतेन उपादानेन अनैकान्तिकं माभूदित्याह–प्रमाणत इति । श्रुतिप्रमाणादित्यर्थः ।

उपयोगे वा तज्जातीयान्तरमप्युपादीयेत, अविशेषात् । न । विचित्रा ह्यभिसंस्काराः केचिद्भ्रियमाणोद्देश्यसहकारिण एव कार्ये उपयुज्यन्ते । किमत्र क्रियतां, विधेर्दुर्लङ्घ्यत्वात् । यथा चाभिचारसंस्कारो यं देहमुद्दिश्य प्रयुक्तस्तदपेक्ष एव तत्सम्बद्धस्यैव दुःखमुपजनयति,नान्यस्य । न वा तदनपेक्षः । एवमभिमन्त्रणादिसंस्कारा अपि भवन्तो न मनागपि नोपयुज्यन्ते । कथं तर्हि व्रीह्यादीनां संस्कार्यकर्मतेति चेत् , प्रोक्षणादिफलसंबन्धादेव । ननु यदुद्देशेन यत् क्रियते तत्तत्र किञ्चित्करम् । यथा पुत्रेष्टिपितृयज्ञौ । तथा चाभिमन्त्रणादयो व्रीह्याद्युद्देशेन प्रवृत्ता इत्यनुमानमिति चेत् , तन्न । हविस्त्यागादिभिरनैकान्तिकत्वात् । न हि ते कालान्तरभाविफलानुगुणं किञ्चिद्धुताशनादौ जनयन्ति । किं वा न दृष्टमिन्द्रियलिङ्गशब्दव्यापाराः प्रमेयोद्देशेन प्रवृत्ताः प्रमातर्येव किञ्चिज्जनयन्ति, न प्रमेये इति । कृषिचिकित्से अप्येवमेव स्यातामिति चेन्न । दृष्टेनैव पाकजरूपादिभेदेनोपपत्तावदृष्टकल्पनायां प्रमाणाभावात् । तथा च लाक्षारसावसेको व्याख्यातः । अत एव बीजविशेषस्याऽऽपरमाण्वन्तभङ्गेऽपि परमाणूनामवान्तरजात्यभावेऽपि प्राचीनपाकजविशेषा-

---

पुरुषसंस्कारो जनितस्तद्व्रीह्यादेरेव पुरुषसंस्कारस्सहकारी नान्यस्य,संस्कारमाहात्म्यादिति समाधत्ते—विचित्रा हीति । विधेरिति । अवहननविधेः प्रोक्षितव्रीहिष्वेव तात्पर्यादित्यर्थः । फलसम्बन्धादिति । प्रोक्षणक्रियाजन्यफलेन जलसंयोगेन साक्षात्सम्बन्धादित्यर्थः । नन्वनुमानेनाधेयशक्तिरसिद्ध्यतीत्याशङ्कते — नन्विति । व्यभिचारप्रदर्शनेन निराकरोति—तन्नेति । ननु कृषिचिकित्से अप्यपूर्वद्वारैव भाविकार्यहेतू स्यातामिति शङ्कते—कृषीति । तत्र पाकजदृष्टफलसम्भवान्न प्रोक्षणादिसाम्यमिति निराकरोति—दृष्टेनैवेति । ननु बीजपूरलाक्षारसावसेकस्याऽऽशुतरविनाशिनः कालान्तरभाव्यरुणकुसुमजनकत्वमाधेयशक्त्यनङ्गीकारे न स्यादित्याशङ्क्य तत्रापि पाकजविशेषाङ्गीकारेणैव निर्वाह इत्याह — तथाचेति । एवं परमाणुष्वपि पाकजविशेषाङ्गीकारेणैव नियतजातीयकार्योत्पत्तिर्विचित्रकार्योत्पत्तिश्च सूपपादेति तत्रापि नाऽऽधेयशक्तिसिद्धिरित्याह — अत एवेति ॥

देव विशिष्टाः परमाणवस्तं तं कार्यविशेषमारभन्ते। यथा हि कलमबीजं यवादेः, नरबीजं वानरादेः, गोक्षीरं माहिषादेर्जात्या व्यावर्तते, तथा तत्परमाणवोऽपि मूलभूताः पाकजैरेव व्यावर्तन्ते। न ह्यस्ति सम्भवो गोक्षीरं सुरभि मधुरं शीतं, तत्परमाणवश्च विपरीताः। तस्मात्तथाभूताः पाकजा एव परमाणवो यथाभूतैरेव आद्यातिशयोऽन्त्यातिशयोऽङ्कुरादिर्वेति किमत्र शक्तिकल्पनया? । कल्पादावप्येवमेव। इदानीं बीजादिसन्निविष्टानामस्मदादिभिरुपसम्पादनं, तदानीं तु विभक्तानामदृष्टादेव केवलान्मिथः संसर्ग इति विशेषः। न च वाच्यमिदानीमपि तथैव किं न स्यात्? यतः कृष्यादिकर्मोच्छेदे तत्साध्यानां भोगानामुच्छेदप्रसङ्गात्। अव्यवस्थाभयाच्चादृष्टानि कर्माणि दृष्टकर्मव्यवस्थयैव भोगसाधनानीत्युन्नीयते। तस्मात्, पाकजविशेषैः संस्थानविशेषैश्च विशिष्टाः परमाणवः कार्यविशेषमारभन्ते। ते च तेजोऽनिलतोयसंसर्गैर्विशेषैः, ते च क्रियया, सा च नोदनाभिघातगुरुत्ववेगद्रवत्वादृष्टवदात्मसंयोगेभ्यो यथायथमिति न किञ्चिदनुपपन्नम्। निमित्तभेदाश्च पाके भवन्ति। तद्यथा—हारीतमांसं हरिद्राजलावसिक्तं हरिद्राग्निप्लुष्टं उपयोगात्सद्यो व्यापादयति। दशरात्रोपितं कांस्ये घृतञ्चापि विषायते। ताम्रपात्रे पर्युषितं क्षीरमपि तिक्तायते इत्यादि। यत्र तर्हि तोये तेजसि वायौ वा न पाकजो विशेषस्तत्र कथमुद्भवानुद्भवद्रवत्वकाठिनत्वादयो विशेषाः? कथं वा पार्थिवे प्रतिमादौ प्रतिष्ठादिना संस्कृतेऽपि विशे-

---

ननु हरिद्राजलावसिक्तं, हरिद्रानलप्लुष्टं, हारीतमांसं सद्यो व्यापादयति। तत्र पाकजविशेषः कल्पयितुं न शक्यः। अनलान्तरप्लुष्टस्य तस्य तथात्वाभावादित्याधेयशक्तिरवश्यमङ्गीकर्तव्येत्याशङ्क्य तत्रापीन्धनादिरूपनिमित्तभेदसहकृतपाकजविशेषस्य हेतुत्वेनैवोपपत्तौ न शक्तिसिद्धिरिति समाधत्ते—**निमित्तभेदेति**। उद्भवानुद्भवौ = उद्भूतत्वानुद्भूतत्वे। आधेयशक्त्यनङ्गीकारे प्रतिष्ठितप्रतिमादि-

---

१. पृथिव्यामुत्पन्नस्य बीजस्य अङ्कुरजननानुगुणं अवान्तरकार्यमतिशयः, तत्रोच्छूनत्वमाद्योऽतिशयः, उच्छूनतमत्वमन्त्योऽतिशयः, यतोऽङ्कुरो जायते। उच्छूनतरत्वलक्षणस्तु मध्यमः संपातगृहीत इति॥ २. सहकारिसमवधानोत्पादनम्। उपसन्धानमिति पा०।

षाभावात्पूजादिना धर्मो, व्यतिक्रमे त्वधर्मो, अप्रतिष्ठिते तु न किञ्चित्? न च तत्र यजमानधर्मेणान्यस्य साहायकमाचरणीयम्[1]। अन्यधर्मस्यान्यं प्रत्यनुपयोगात्। उपयोगे वा साधारण्यप्रसङ्गात्। अत्रोच्यते —

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः।

देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥१२॥

उपनायकादृष्टविशेषसहाया हि परमाणवो द्रव्यविशेषमारभन्ते। तेषां विशेषादुद्भवविशेषाः प्रादुर्भवन्ति। तथा स्वभावद्रवा अप्यापो निमित्तभेदप्रतिबद्धद्रवत्वाः कठिनं करकाद्यमारभन्ते, इत्यादि स्वयमूहनीयम्। प्रतिमादयस्तु तेन तेन विधिना सन्निधापितरुद्रोपेन्द्रमहेन्द्राद्यभिमानिदेवताभेदास्तत्र तत्राऽऽराधनीयतामासादयन्ति, दष्टमूर्छितं राजशरीरमिव विषापनयनविधिनाऽऽपादितचैतन्यम्। सन्निधानञ्च तत्र तेषामहङ्कारममकारौ[2], चित्रादाविव स्वसादृश्यदर्शिनो राज्ञ इति नो दर्शनम्। अन्येषां तु पूर्वपूर्वपूजितप्रत्यभिज्ञानविषयस्य प्रतिष्ठितप्रत्यभिज्ञानविषयस्य च तथात्वमवसेयम्। एतेनाभिमन्त्रितपयःपल्लवा-

---

पूजने धर्मः, तद्व्यतिक्रमेण चाधर्म इति व्यवस्था न स्यादित्याशङ्क्य परिहरति— **निमित्तभेदेति**। परमाणुषु क्रियाजनकस्यादृष्टरूपस्य निमित्तस्य संसर्गात्परमाणुभिः क्वचिदुद्भूतं क्वचिदनुद्भूतमित्येवं विचित्रकार्योत्पत्तिरुपपद्यते। प्रतिष्ठाविधिना प्रतिष्ठितप्रतिमादौ देवतानामहङ्कारममकारावुत्पद्येते। अप्रतिष्ठिते तु सा नास्ति। अचेतनदेवतापक्षेऽपि ‘ प्रतिष्ठितं पूजयेदि ’ ति विधिबलात्प्रतिष्ठितदेवताराधनस्यैव सफलत्वं नान्यस्येति भावः। एवमेवाभिमन्त्रितपयःपल्लवादिष्वपि देवतासान्निध्यमवसेयमित्याह — **एतेनेति**। ननु धर्मशास्त्रेऽभिशस्तत्वेनाभिमतपुरुषविषये अयं शुद्धो नवेति परीक्षार्थं तुलामानादयः केचन विधयः प्रदर्शिताः। तत्राधेयशक्त्यनङ्गीकारे न निस्तारः। तथाहि — तत्र सामग्र्याः ज्ञापकत्वेन न दृष्टादृष्टविघटकत्वमुपपद्यते। किन्तु तत्र परीक्षाविधिविहितसामग्रीबलात् तुलायां

---

१. साहायकम् = सहायकारित्वम् ॥ २. अत्र, अहङ्कारममकारावाहार्यनिश्चयरूपौ।

दयो व्याख्याताः। घटादिषु का वार्ता ? । कुशलैवेति चेन्न । न हि सामग्री दृष्टं विघटयति, नाप्यदृष्टं, ज्ञापकत्वात् । नाप्यदृष्टमुत्पादयति, धर्मजनने सर्वदा विजयप्रसङ्गात्। विपर्यये सर्वदा भङ्गप्रसङ्गात्। अत्रोच्यते– जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।

परीक्ष्य समवेतस्य परीक्षाविधयो मताः ॥१३॥

यद्यपि धर्माद्यभिमानिदेवतासन्निधिरत्रापि क्रियते । ताश्च कर्मविभवाऽनुरूपं लिङ्गमभिव्यञ्जयन्तीत्यस्माकं सिद्धान्तः। तथापि परविप्रतिपत्तेरन्यथोच्यते । तेनापि हि विधिना तदेव जयस्य पराजयस्य वा निमित्तमभिव्यक्तं कार्यमुन्मीलयति। कर्मणश्चाऽभिव्यक्तिस्सहकारिलाभ एव । तच्च सहकारि, 'सोऽहमनेन विधिना तुलामधिरूढो योऽहं पापकारी, निष्पापो वे' ति प्रत्यभिज्ञानम् । यदाहुः–'तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः' । अथवा – प्रतिज्ञाऽनुरूपां विशुद्धिमपेक्ष्य तेन धर्मो जन्यते । निमित्ततो विधानाद्विजयफलश्रुतेश्च । अविशुद्धिश्चापे-

---

काचन शक्तिराधीयते। यथा धार्मिकस्याऽऽरोहे तुलाया अधोगमनम्, अधार्मिकस्यारोहे ऊर्ध्वगमनमित्युपपद्यत इत्याशङ्क्य तत्र परीक्षाविधयः परीक्ष्यतयाऽभिमते पुंसि समवेतस्य जयापजयनिमित्तस्यादृष्टस्याऽऽभिमुख्यसम्पादनायैव केवलं भवन्तीत्याह– अत्रोच्यत इत्यादिना । अत्र कुशलैवेति पदं गूढाभिसन्धेस्सिद्धान्तिनस्सावहेलोक्तेरनुकरणमात्रम् । विधिविहितघटासमारोहणरूपसहकारिसध्रीचीनं पुरुषसमवेतमदृष्टमेव जयादिरूपं कार्यमुत्पादयतीति न तदर्थं घटायामाधेयशक्तिकल्पनमितिभावः। नैय्यायिकमते कारणत्वरूपशक्तिरङ्गीक्रियते। तद्भिन्ना अतीन्द्रिया आधेया सहजा वा शक्तिर्नाङ्गीक्रियते, प्रमाणाभावात् । नापि निषिध्यते, कुत्राप्यसिद्धत्वात् । एकत्र सिद्धस्यैवान्यत्र निषेधात् । साधकबाधकप्रमाणाभावेऽपि धर्मिणोऽनुपलब्धेर्न संशयोऽपि । सामान्यतो ज्ञाते धर्मिणि तत्प्रकारविशेष एव विवादप्रवृत्तेरत्र धर्मिज्ञानाभावाद्विवादोऽपि नास्ति । यदि चास्मदभिमतसहकारिविशेषस्यैव भवदभिमतशक्तिसाम्याच्छक्तिरिति व्यवहारो युष्माभिः क्रियते, यदि च दहनादेरनुग्राहकस्सह-

क्ष्योऽधर्मः। पराजयलक्षणानपेक्षितफलोपदर्शनेन फलतो निषेधात्।

अथ शक्तिनिषेधे किं प्रमाणम्? । न किञ्चित्। तत् किमस्त्येव? बाढम्। न हि नो दर्शने शक्तिपदार्थ एव नास्ति। कोऽसौ तर्हि? कारणत्वम्। किं तत्? पूर्वकालनियतजातीयत्वं, सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वेति। ततोऽधिकनिषेधे का वार्ता?। न काचित्। तत्किं विधिरेव? एतदपि नास्ति, प्रमाणाभावात्। सन्देहस्तर्हि?। कथमेवं भविष्यति, अनुपलब्धचरत्वात्। विवादस्तर्हि?। कुत्र? अनुग्राहकत्वसाम्यात् सहकारिष्वपि शक्तिपदप्रयोगात्। सहकारिभेदे, तत्रापि दहनादेरनुग्राहकोऽधिकोऽस्त्येव। यः प्रतिबन्धकैरपनीयते इति यदि, तदा न विवदामहे। अस्मदभिप्रेतस्य चाभावादेरनुग्राहकत्वमङ्गीकृत्य निस्साधना मीमांसका अपि न विप्रतिपत्तुमर्हन्ति। ततोऽभावादिरनुग्राहक इत्येके, नेत्यपरे, इति विवादकाष्ठायां व्युत्पादितञ्चैतस्यानुग्राहकत्वम्। किमपरमवशिष्यते यत्र प्रमाणमभिधानीयमित्यलमतिविस्तरेण। तथापि चेतन एवायं संस्क्रियते, न भूतानीति कुतो निर्णय इति चेत्। उच्यते। भोक्तॄणां नित्यविभूनां सर्वदेहप्राप्तावविशिष्टायां विशिष्टैरपि भूतैर्नियामकाभावात् प्रतिनियतभोगासिद्धेः। न हि तच्छरीरं तन्मनस्तानीन्द्रियाणि विशिष्टान्यपि तस्यैवेति नियमः, नियामकाभावात्। तथाच साधारणविग्रहवत्त्वप्रसङ्गः। न च भूतधर्म एव कश्चिच्चेतनं प्रत्यसाधारणः, विपर्ययदर्शनात्, द्वित्वादिवदिति चेन्न। तस्यापि शरीरादितुल्यतया पक्षत्वात्। नियतचेतनगुणोपग्रहेणैव तस्यापि नियमो, न तु तज्जन्यतामात्रेण। स्वयमविशेषात्॥

---

कारिविशेषान्तर्गत एव कश्चनास्ति स एव प्रतिबन्धकैरपनीयत इति चोच्यते, तदा नाऽऽवयोर्विरोधः। अस्माभिरप्यभावस्य तादृशास्याङ्गीकारादित्याशयेन सुनिपुणं मीमांसकं निराकरोति – **अथ शक्तिनिषेध** इत्यादिना, **अलमित्यन्तेन** ग्रन्थेन। नन्वपूर्वस्य भूतधर्मत्वाभावेऽपि चेतनधर्मत्वं कथं?‍ विनिगमकाभावादित्याशङ्क्य समाधत्ते – **तथापीत्यादिना**।

तथापि तज्जन्यतयैव नियमोपपत्तौ विपक्षे बाधकं किमिति चेत्, कार्यकारणभावभङ्गप्रसङ्गः। शरीरादीनां चेतनधर्मोपग्रहेणैव तद्धर्मजननोपलब्धेः। तद्यथा – इच्छोपग्रहेण प्रयत्नो, ज्ञानोपग्रहेणेच्छादयः, तदुपग्रहेण सुखादय इत्यादि। प्रकृतेऽपि चेतनगता एव बुद्धयादयो नियामकाः स्युरिति चेन्न। शरीरादेः प्राक् तेषामसत्त्वात्। तथाच निरतिशयाश्चेतनाः, साधारणानि भूतानीति न भुक्तिनियम उपपद्यते। एतेन साङ्ख्यमतमपास्तम्। एवं हि तत् – अकारणमकार्यः कूटस्थचैतन्यस्वरूपः पुरुषः। आदिकारणं प्रकृतिरचेतना परिणामिनी। ततो महदादिसर्गः। न हि चितिरेव विषयबन्धनस्वभावा, अनिर्मोक्षप्रसङ्गात्। नापि प्रकृतिरेव तदीयस्वभावा, तथापि नित्यत्वेनानिर्मोक्षप्रसङ्गात्। नापि घटादिरेवाऽऽहत्य तदीयः, दृष्टादृष्टत्वानुपपत्तेः। नापीन्द्रियमात्रप्रणाडिकया, व्यासङ्गायोगात्। नापीन्द्रियमनोद्वारा, स्वप्नदशायां वराहव्याघ्राद्यभिमानिनो नरस्यापि नरत्वेनात्मोपधानायोगात्। नाप्यह-

---

ननु द्वित्वादीनां नियतचेतनगुणोपग्रहेण नियमानङ्गीकारे किं बाधकमित्याशङ्क्य, अपेक्षाबुद्धेर्द्वित्वादीनाञ्च कार्यकारणभावभङ्गप्रसङ्गमाह – **तथापि तज्जन्यतयैवेत्यादिना**। निरुक्तदिशाऽऽत्मन्यपूर्वसिद्धौ साङ्ख्यमतं निरस्तमित्याह– **एतेनेति**। सुखप्रतिपत्त्यर्थं तन्मतं दर्शयति – **एवं हीत्यादिना**। मूलप्रकृतिः, महत्तत्त्वं, अहङ्कारः, पञ्चतन्मात्राणि, पञ्चेन्द्रियाणि, पञ्चप्राणाः, मनः, पुरुष इति पञ्चविंशतिस्तत्त्वानाम्। प्रकृतिः पुरुषस्य भोगापवर्गावातनोति। पुरुषस्तु सच्चिद्रूपः। प्रकृतिपुरुषयोरविवेकाद्बन्धः, विवेकादपवर्ग इति। ननु शब्दादिविषयैरेव पुरुषस्य भोगोऽस्तु, किं महत्तत्त्वादिकल्पनया? इत्याशङ्क्य निराकरोति – **नहीत्यादिना**। **दृष्टादृष्टत्वेति**। केषाञ्चिद् दृष्टत्वं, केषाञ्चिददृष्टत्वञ्चेत्यर्थः। व्यासङ्गः = विलम्बः। अयं भावः – विषयेन्द्रियसम्बन्धे सत्यपि कदाचित् कस्यचिज्झटिति ज्ञानमुत्पद्यते, कदाचिन्नेति ज्ञानोत्पत्तिविलम्बाविलम्बयोरसिद्ध्यर्थं मन अङ्गीकर्तव्यम्। एवं स्वप्नदशायां मनसि सत्यपि नरत्वाभिमानं

ङ्कारपर्यन्तव्यापारेण, सुषुप्त्यवस्थायां तद्व्यापारविरमेऽपि श्वासप्रयत्न-सन्तानावस्थानात् । तद् , यदेतास्ववस्थासु सव्यापारमेकमनुवर्तते, यदाश्रया चानुभववासना, तदन्तःकरणमुपारूढोऽर्थः पुरुषस्योपधानी-भवति । भेदग्रहाच्च निष्क्रियेऽपि तस्मिन्पुरुषे कर्तृत्वाभिमानः, तस्मिन्नचेतनेऽपि चेतनाभिमानः, तत्रैव कर्मवासना । पुरुषस्तु पुष्करपलाशवन्निर्लेपः । आलोचनं व्यापार इन्द्रियाणां, विकल्पस्तु मनसः, अभिमानोऽहङ्कारस्य, कृत्यध्यवसायो बुद्धेः । सा हि बुद्धिरंशत्रयवती । पुरुषोपरागो, विषयोपरागो, व्यापारावेशश्चेत्यंशाः । भवति हि 'मयेदं कर्तव्यमि' ति । तत्र मयेति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः । इदमिति विषयोपराग इन्द्रियप्रणाडिकया परिणतिभेदो दर्पणस्येव निःश्वासाभिहतस्य मलिनिमा पारमार्थिकः । एतदुभयायत्तो व्यापारावेशोऽपि । तत्र एवंरूपव्यापारलक्षणाया बुद्धेर्विषयोपरागलक्षणं ज्ञानम् । तेन सह यः पुरुषोपरागस्यातात्त्विकस्य सम्बन्धो दर्पणप्रतिबिम्बितस्य मुखस्येव मलिनिमा, सोपलब्धिरिति । तदेवमष्टावपि धर्मादयो भावा बुद्धेरेव, तत्सामानाधिकरण्येनाध्यवसीयमानत्वात् । न च बुद्धिरेव स्वभावतश्चेतनेति युक्तं, परिणामित्वात् । पुरुषस्य तु कूटस्थनित्यत्वादिति । तदेतदपि प्रागेव निरस्तम् । तथाहि—

कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादसंसारोऽथवा ध्रुवः ॥ १४ ॥

कृतिसामानाधिकरण्यव्यवस्थितास्तावद्धर्मादयो नियामका इति व्यवस्थितम् । चेतनोऽपि कर्तैव । कृतिचैतन्ययोः सामानाधिकरण्ये-

---

हित्वा वराहव्याघ्राभिमानदशायां नरत्वाभिमानाभावो यदभावप्रयोज्यस्तादृशोऽहङ्कारोऽप्यङ्गीकर्तव्यः । सुषुप्तौ मनसः बाह्येन्द्रियाणाञ्चोपरतावपि शरीरधारणनिमित्तस्योच्छ्वासनिश्वासप्रयोजकस्य प्रयत्नविशेषस्य सत्त्वात्तदर्थं महत्तत्त्वमप्यङ्गीकर्तव्यमिति। तदेतन्मतं निराकरोति - **कर्तृधर्मा** इति । कर्तृधर्माः, धर्मादयः भोगस्य नियन्तारः ।

नानुभवात्। नायं भ्रमो, बाधकाभावात्। परिणामित्वाद्घटवदिति बाधकमिति चेन्न। कर्तृत्वेऽपि समानत्वात्। तथाच कृतिरपि भाविकी महतो न स्यात्। दृष्टत्वादयमदोष इति चेत्, तुल्यम्। अचेतनकार्यत्वं बाधकं, कार्यकारणयोस्तादात्म्यादिति चेन्न। असिद्धेः। न हि कर्तुः कार्यत्वे प्रमाणमस्ति। प्रत्युत 'वीतरागजन्मादर्शनात्' (न्या०.३-१-२५) इति न्यायादनादितैव सिद्ध्यति। यद्यच्च कार्ये रूपं दृश्यते तस्य तस्य कारणात्मकत्वे रागादयोऽपि प्रकृतौ स्वीकर्तव्याः स्युः। तथा च सैव बुद्धिर्न प्रकृतिः, भावाष्टकसंपन्नत्वात्। स्थूलतामपहाय सूक्ष्मतया ते तत्र सन्तीति चेत्, चैतन्यमपि तथा भविष्यति। तथाप्यसिद्धो हेतुः। तथा सति घटादीनामपि चैतन्यप्रसङ्गस्तादात्म्यादिति चेत्, रागादिमत्त्वप्रसङ्गोऽपि दुर्वारः। सौक्ष्म्यञ्च समानमिति। तस्मात्, यज्जातीयात्कारणाद्यज्जातीयं कार्यं दृश्यते तथाभूतात्तथाभूतमात्रमनुमातव्यं, न तु यावद्धर्मकं कारणं तावद्धर्मकं कार्यं, व्यभिचारादिति किमनेनाप्रस्तुतेन। यदि च बुद्धिर्नित्या, अनिर्मोक्षप्रसङ्गः। पुंसः सर्वदा सोपाधित्वे स्वरूपेणानवस्थानात्। अथ विलीयते, ततो नाऽनादेर्विलय इत्यादिमत्त्वे तदनुत्पत्तिदशायां को नियन्ता? प्रकृतेः साधारण्यात्। तथाचाऽसंसारः। पूर्वपूर्वबुद्धिवासनानुवृत्तेः साधारण्येऽप्यसाधारणीति चेत्, बुद्धिनिवृत्तावपि तद्धर्मवासनानुवृत्तिरित्यपदर्शनम्। सौक्ष्म्यान्न दोष इति चेत्, मुक्तावपि पुनः प्रवृत्तिप्रसङ्गः। निरधिकारत्वान्नैवमिति चेत्, तर्हि साधिकारा प्रसुप्तस्वभावा बुद्धिरेव प्रकृतिरस्तु, कृतमन्तरा प्रकृत्यहङ्कारमनःशब्दानामर्थान्तरकल्पनया? । सैव हि तत्तद्व्यवहारगोचरा तेन तेन शब्देन व्यपदिश्यते, शारीरवायुवदित्यागमोऽपि सङ्गच्छते इत्य-

---

तथाच 'चेतनोऽहं करोमी' त्यबाधितविश्वजनीनप्रतीत्या कर्तैव चेतनः। किञ्च भवदभिमतबुद्धेर्नित्यत्वेऽनपवर्गप्रसङ्गः, अनित्यत्वे पूर्वमसंसारः, इदानीमेव संसार इत्यप्रामाणिककल्पनाप्रसङ्गः। ननु बुद्धेश्चैतन्ये कूटस्थत्वप्रतिपादक-

तोऽपि हेतुरसिद्धः । अधिकारनिवृत्त्या बुद्धेरप्रवृत्तिरपवर्गः, वासनायोगश्चाधिकारः, ततः संसारः । धर्मधर्मिणोरत्यन्तभेदे च कौटस्थ्याविरोधः । भेदश्च विरुद्धधर्माध्यासलक्षणो घटपटादिवत् प्रत्यक्षसिद्धः । न च सामानाधिकरण्यादभेदोऽपि, तद्धि समानशब्दवाच्यत्वं, एकज्ञानगोचरत्वं, एकाधिकरणत्वं, आधाराधेयभावः, विशेष्यत्वं, सम्बन्धमात्रं वा, भेद एव भेदेऽपि चोपपद्यमानं नाभेदं स्पृशतीति सर्वमवदातम् । स्यादेतत् । नित्यविभुभोक्तृसद्भावे सर्वमेतदेवं स्यात् । स एव कुतः ?। भूतानामेव चेतनत्वात् । कायाकारपरिणतानि भूतानि तथा, अन्वयव्यतिरेकाभ्यां तथोपलब्धेः । कर्मज्ञानवासने तु सर्वत्र प्रतिभूतनियते अनुवर्तिष्येते, यतो भोगप्रतिसन्धाननियम इति चेत्; उच्यते — नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।

वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥१५॥

न हि भूतानां समुदायपर्यवसितं चैतन्यम् । प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात् । नापि प्रत्येकपर्यवसितं, करचरणाद्यवयवापाये तदनुभूतस्य स्मरणायोगात् । नापि मृगमदवासनेव वस्त्रादिषु संसर्गादन्यवासनाऽन्यत्र सङ्क्रामति । मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात् । न चोपादानोपादेयभावनियमो गतिः । स्थिरपक्षे परमाणूनां तदभावात् । खण्डावयविनं प्रति च विच्छिन्नानामनुपादानत्वात् । पूर्वसिद्धस्य चावयविनो विनाशात् ॥

---

श्रुतिविरोध इत्याशङ्क्य परिहरति - **धर्मेति** । अयं भावः - कौटस्थ्यं नाम नित्यत्वं । तच्च धर्मधर्मिणोर्भेदाद्धर्मस्यानित्यत्वेऽपि धर्मिणो नित्यत्वादुपपद्यत एवेति । ननु सामानाधिकरण्यादभेदोऽप्यस्तीत्याशङ्क्य परिहरति - **न च सामानाधिकरण्यादि**त्यादिना । ननु भोक्ता नित्यो विभुर्यदि स्यात्तदा तस्य सर्वशरीरसाधारणस्य प्रतिनियतभोगोपपत्त्यर्थमात्मसमवेतमदृष्टं सिद्ध्येत् । स एव नास्ति, भूतानामेव चेतनत्वात् । पूर्वानुभूतस्य संस्काररूपाया वासनायाः संक्रमाङ्गीकारात्स्मरणोपपत्तिरिति चार्वाकमतमाशङ्क्य निराकरोति — **नान्यदृष्टमिति** । कायस्यावयवोपचया-

अस्तु तर्हि क्षणभङ्गः। न चातिशयोऽप्यतिरिच्यते, किन्तु सादृश्यतिरस्कृतत्वात् द्रागेव न विकल्प्यते, कार्यदर्शनादध्यवसीयते, अन्त्यातिशयवत्। तथाच भूतान्येव तथा तथोत्पाद्यन्ते, यथा यथा प्रतिसन्धाननियमादयोऽप्युपपद्यन्ते। क्षणिकत्वासिद्धावेवमेतत्, तदेवत्वन्यत्र विस्तरेण प्रतिषिद्धम्। अपि च –

न वैजात्यं विना तत्स्यान्न तस्मिन्ननुमा भवेत्।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥१६॥

न हि करणाऽकरणयोस्तज्जातीयस्य सतः सहकारिलाभालाभौ तन्त्रमित्यभ्युपगमे क्षणिकत्वसिद्धिः। तथैकव्यक्तावप्यविरोधात्, 'तद्वा तादृग्वे' ति न कश्चिद्विशेष इति न्यायात्। ततस्तावनादृत्य वैजात्यमप्रामाणिकमेवाभ्युपेयम्। एवञ्च कारणवत् कार्येऽपि किञ्चिद्वैजात्यं स्याद्यस्य कारणापेक्षा, न तु दृष्टजातीयस्येति शङ्कया न तदुत्पत्ति-

---

पत्त्यैरन्यत्वेन, बाल्येऽनुभूतस्य यौवने स्मरणं न स्यात्। मात्रानुभूतस्य पुत्रादिना स्मरणप्रसङ्गाद्वासनासङ्क्रमोऽपि नास्ति। भवन्मते परमाणुपुञ्जातिरिक्तस्यावयविनोऽभावादुपादानोपादेयभावोऽपि नियामक इति वक्तुं न शक्यत इति भावः।

ननु स्थिरपक्षे यद्युपादानोपादेयभावो न संभवति, अस्तु तर्हि क्षणिकत्वमिति बौद्धमतमाश्रित्य चार्वाकः शङ्कते — **अस्तु तर्हीति**। ननु भावानां क्षणिकत्वे तेषां भेदेन भवितव्यमित्यत आह – **नचेति**। अतिशयः=भेदः। अतिरिच्यते = नास्तीति न, भेदोऽस्त्येवेत्यर्थः। अन्त्यातिशयः = सामग्री। निराकरोति — **क्षणिकत्व** इति। अन्यत्र = आत्मतत्त्वविवेके।

**न वैजात्यमिति**। वैजात्यं विना न क्षणिकत्वसिद्धिः। तस्मिन्सत्यनुमानासिद्धिः। तदसिद्धौ वैजात्यमप्रामाणिकम्। सविकल्पकं विना तदुन्नेयं, निर्विकल्पकमपि न तत्र प्रमाणमित्यर्थः। अयं भावः–कारणे कार्यानुकूलोऽतिशयः कुर्वद्रूपत्वापरपर्यायोऽतीन्द्रियः कश्चन धर्मोऽङ्गीकर्तव्यः। अन्यथा सहकारिसमवधानासमवधानाभ्यां स्थिरेणैव कार्यजननाजननयोरुपपत्तौ क्षणिकत्वासिद्धेः। तद-

**सिद्धिः । दृष्टजातीयमाकस्मिकं स्यादिति चेन्न । तत्रापि किञ्चिदन्यदेव प्रयोजकं भविष्यतीत्यविरोधात् । न कार्यस्य विशेषस्तत्प्रयुक्ततयोपलभ्यते । नापि कार्यसामान्यस्यान्यत्प्रयोजकं दृश्यते इति चेत्; तत्किं कारणस्य विशेषः स्वगतस्तत्प्रयोजकतयोपलब्धः, कारणसामान्यस्य वाऽन्यत् प्रयोज्यान्तरं दृश्यते, यतो विवक्षितसिद्धिः स्यात् । शङ्कातूभयत्रापि सुलभेति । कार्यजन्माजन्मभ्यामुन्नीयत इति चेन्न । सहकारिलाभालाभाभ्यामेवोपपत्तेः । उन्नीयतां वा, कार्येषु शङ्किष्यते, निषेधकाभावात् । न हि धूमस्य विशेषं दहनप्रयोज्यं प्रतिषेद्धुं स्वभावानुपलब्धिः प्रभवति । कार्यैकनिश्चेयस्य तदनुपलब्धेरेवानिश्चयोपपत्तेः । कार्यस्य चातीन्द्रियस्यापि संभवात् । अत एवानुपलब्ध्य-**

---

ङ्गीकारे तु कारणे गृह्यमाणं रूपं परित्यज्य, अतीन्द्रियरूपान्तरेण कारणत्वाङ्गीकारे, दृश्यमानधर्मपरित्यागेनादृश्यमानधर्मपुरस्कारेण कारणत्वशङ्कया लोकसिद्धकार्यकारणभावभङ्गप्रसङ्गेनानुमानोच्छेद इति । किञ्च कारणे कार्योत्पादानुत्पादाभ्यां विशेषनिश्चयेऽपि कार्ये साधकबाधकयोरभावेन तत्र विशेषस्य शङ्का भवति । तावतापि न कार्यकारणभावनिश्चय इति कार्यलिङ्गकानुमानोच्छेद इत्याह—**कार्य इति।**

अनुपलब्धेर्बाधकत्वमाशङ्क्य निराकरोति —**नहीति** । स्वभावानुपलब्धिः योग्यानुपलब्धिः । कार्ये शङ्किष्यमाणस्य विशेषस्यातीन्द्रियत्वेन योग्यानुपलब्धिर्न तद्बाधिकेति भावः । धूमे शङ्क्यमानस्य विशेषस्यातीन्द्रियत्वेन कार्यैकनिश्चेयस्य तस्य स्वरूपानुपलब्धिर्न प्रतिषेधिकेति भावः । ननु सन्ति द्वादशानुपलब्धयः । १. स्वभावानुपलब्धिः २. स्वभावविरुद्धोपलब्धिः ३. विरुद्धकार्योपलब्धिः ४. विरुद्धव्याप्योपलब्धिः ५. कार्यानुपलब्धिः ६. कार्यविरुद्धोपलब्धिः ७. कार्यविरुद्धकार्योपलब्धिः ८. कार्यविरुद्धव्याप्योपलब्धिः ९. व्यापकानुपलब्धिः १०. व्यापकविरुद्धोपलब्धिः ११. तद्विरुद्धकार्योपलब्धिः १२. तद्विरुद्धव्याप्योपलब्धिरिति । अत्रोपलब्धेरप्यनुपलब्धिकार्यकारित्वेनानुपलब्धित्वव्यवहारः । तत्रानुपलब्ध्यन्तरस्यापि न बाधकत्वमित्याह—**अत एवेति** । एवं कार्यलिङ्गकानुमानोच्छेदमुक्त्वाऽनुपलब्धिलिङ्गकं स्वभावलिङ्गकञ्चानुमानमुच्छिन्नं भवतीति वक्तुमभि-

न्तरमपि निरवकाशमिति । एवं विधिरूपयोर्व्यावृत्तिरूपयोर्वा जात्योर्विरोधे सति न समावेशः । समाविष्टयोश्च परापरभावनियमः । अन्यूनानतिरिक्तवृत्तिजातिद्वयकल्पनायां प्रमाणाभावात् । व्यावर्त्यभेदाभावेन विरोधानवकाशे भेदानुपपत्तेः । परस्परपरिहारवत्योश्च समावेशे गोत्वाश्वत्वयोरपि तथाभावप्रसङ्गात् । सामग्रीविरोधान्नैवमिति चेत्, एतत्कुतः ? । परस्परपरिहारेण सर्वदाऽव्यवस्थितेरिति चेत्, नेदमप्यध्यक्षम् । एकदेशसमावेशेन तु सामग्रीसमावेशोऽप्युन्नीयते । यावत्कार्ययोः परस्परपरिहृतिस्वभावत्वादिति चेत्; तर्हि कम्पशिंशुपयोः परस्परपरिहारवत्योर्न समावेशः स्यात् । दृश्यते तावदिदमिति चेत्; गोत्वाश्वत्वयोरपि न द्रक्ष्यते इति का प्रत्याशा ? । तथा च गतमनुपलब्धिलिङ्गे-

कामारचयन्, वैजात्याङ्गीकारे जातिबाधकप्रसङ्गरूपं बाधकमप्याह—एवमिति । अत्र विरोधशब्दार्थः परस्परव्यभिचारित्वं । तथाभूतयोरेकत्र समवेशो नास्ति । यदि तथाभूतयोरपि समावेशस्तदा जातिसङ्करप्रसङ्गः । तथाहि – शालित्वाभाववति यवबीजे कुर्वद्रूपत्वम्, कुर्वद्रूपत्वाभाववति कुसूलस्थशालिबीजे शालित्वम् । द्वयोस्सामानाधिकरण्यं क्षेत्रगतशालिबीज इति शालित्वादिना साङ्कर्यात्कुर्वद्रूपत्वापरपर्यायं वैजात्यं न सिद्ध्यतीति भावः । उक्तदिशा कुर्वद्रूपत्वशालित्वयोः परापरभावनियमाभावाच्च नैकत्र समावेश इत्याह — **समाविष्टयोरिति** । परस्परव्यभिचारिणोरेकत्र समावेशे बाधकान्तरमाह — **परस्परेति** । सामग्रीविरोधाद्गोत्वाश्वत्वयोरसमावेश इत्यपि न शक्यते वक्तुम् । तस्यैवाऽसिद्धेरित्याह – **एतत्कुत इति** । कार्यविरोधेन सामग्रीविरोधः कल्प्यत इत्याशङ्क्य निराकरोति – **तर्हीति** । चलपिप्पले निश्चलाशिंशुपायाश्च परस्परपरिहारेण स्थितेरित्यर्थः । उपसंहरति – **तथाचेति** । गोत्वाश्वत्वयोरपि समावेशसंशयाद्विरोधासिद्धौ, अश्वत्वविरुद्धस्य गोत्वस्योपलब्ध्याऽश्वत्वाभावानुमानं न स्यात् । एवं शिंशुपात्वं वृक्षत्वमपि व्यभिचरेदिति शङ्कासम्भवेन वृक्षं विना शिंशुपाया अनुपलब्ध्या शिंशुपायाः वृक्षस्वभावत्वमपि न सिद्ध्येदिति भावः । विपक्षे बाधकोप-

नापि, क्वचिदपि विरोधासिद्धेः। ततो विपक्षे बाधकाभावात् स्वभाव-हेतुरप्यपास्तः। नन्वस्ति तत्। तथाहि – वृक्षजनकपत्रकाण्डाद्यन्त-र्भूता शिंशुपासामग्री। सा वृक्षमतिपत्य भवन्ती स्वकारणमेवातिपतेत्। एवं, शाखादिमन्मात्रानुबन्धी वृक्षव्यवहारः, तद्विशेषानुबन्धी च शिंशुपा-व्यवहारः। स कथं तमतिपत्यात्मानमासादयेदिति चेत्; एवं तर्हि शिंशुपासामग्र्यन्तर्भूता चलनसामग्री, ततस्तामतिपत्य चलनादिरूपता भवन्ती स्वकारणमेवातिपतेत्, तथा शाखादिमद्विशेषानुबन्धी शिंशुपा-व्यवहारः, तद्विशेषानुबन्धी च चलनव्यवहारः। स कथं तमतिपत्या-त्मानमासादयेदिति तुल्यम्। नोदनाद्यागन्तुकनिबन्धनं चलनत्वं, न तु तद्विशेषमात्राधीनमिति चेत्; यदि नोदनादयः स्वभावभूतास्ततस्त-द्विशेषा एव। अथाऽस्वभावभूतास्ततः सहकारिण एव, ततस्तानासाद्य निर्विशेषैव शिंशुपा चलनस्वभावत्वमारभते इति। तथाच कुतः क्षणि-कत्वसिद्धिः?। स्वभावभूता एवागन्तुकसहकार्यनुप्रवेशाद्भवन्तीति चेत्;

---

न्यासेन स्वभावहेतुकानुमानमुद्धरति पूर्वपक्षी – नन्विति। शिंशुपा यदि वृक्ष-मतिपतेत्तर्हि स्वकारणमतिपतेदिति विपक्षबाधकमिति भावः। परिहरति – एवं तर्हीति। एवंविधविपक्षबाधकस्य तुल्यत्वाच्छिंशुपान्तरजातिविशेषेण कम्पका-रित्वेन शिंशुपाऽनुमानमपि स्यात्। न च तच्छक्यम्, शिंशुपानन्तर्गतस्य पला-शादेरपि तज्जनकत्वादिति भावः। ननु यथा वृक्षसामग्रीविशेषः शिंशुपासा-मग्री, नैवं शिंशुपासामग्र्यन्तर्भूता कम्पसामग्री। किन्त्वागन्तुकनोदनाभिघाता-दिभिरेव कम्प इत्याशङ्कते – नोदनेति। किं नोदनादयः शिंशुपायाः स्वभाव-भूताः, उत सहकारिणः? आद्ये पूर्वोक्त एव दोषः। द्वितीये क्षणिकत्वभङ्ग इत्याह — यदीत्यादिना। निर्विशेषैव = जातिभेदव्यक्तिभेदरहितैवेत्यर्थः। ननु शिंशुपायाः स्वभावभूता अपि नोदनादय आगन्तुकनोदकादिसहकारिसमवधानात् चलस्वभावं शिंशुपान्तरमारभन्ते। एवमशिंशुपाया अपि पलाशस्यागन्तुकनोदका-दिसहकारिसमवधानात्कम्पजनकत्वमुपपद्यते। एवं कम्पस्य शिंशुपातिपात इत्या-

एवं तर्हि वृक्षसामग्र्यामागन्तुकसहकार्यनुप्रवेशादेव शिंशुपाऽपि जायते इति न कश्चिद्विशेषः। एवमेतत्। किन्तु शिंशुपाजनकास्तरुसामग्रीमुपादायैव, चलनजनकास्तु न तामेव, किन्तु मूर्तमात्रं, तथा दर्शनादिति चेत्; मैवम्। कम्पजनकाः शिंशुपाजनकविशेषा अपि सन्तस्तानतिपतन्ति, न तु वृक्षजनकविशेषाः शिंशुपाजनकास्तानिति, नियामकाभावात्। शिंशुपाजनकास्तद्विशेषा एव, कम्पकारिणस्तु न तथा, किन्त्वागन्तवः सहकारिण इति चेत्; एवं तर्हि तानासाद्य सदृशरूपा अपि केचित्कम्पकारिणोऽनासादितसहकारिणस्तु न तथा। तथा च तद्वा तादृग्वेति न कश्चिद्विशेषः स्यात्। तस्माद्विरुद्धयोरसमावेश एव। समाविष्टयोश्च परापरभाव एव। अनेवम्भूतानां द्रव्यगुणकर्मादिभावेनोपाधित्वमात्रम्। तेषान्तु विरुद्धानां न समावेशो व्यक्तिभेदात्। जातीनाञ्च भिन्नाश्रयत्वात्। तथाच कुतः क्षणिकत्वम्?। वैजात्याभ्युपगमे च कुतोऽनुमानवार्ता?। माभूदनुमानमिति चेन्न। तेन हि विना न तत्सिद्ध्येत्। न हि क्षणिकत्वे प्रत्यक्षमस्ति। तथा निश्चयाभावात्। गृहीतनिश्चित एवार्थे तस्य प्रामाण्यात्, अन्यथाऽतिप्रसङ्गात्।

ननु वर्तमानः क्षणोऽध्यक्षगोचरः। न चासौ पूर्वापरवर्तमानक्षणात्मा। ततो वर्तमानत्वनिश्चय एव भेदनिश्चय इति चेत्; किमत्र तदभिमतमायुष्मतः?। यदि धर्म्येव नीलादिर्न किञ्चिदनुपपन्नम्। तस्य स्थैर्यास्थैर्यसाधारण्यात्। अथ धर्मः, तद्भेदनिश्चयेऽपि धर्मिणः किमायातम्?। तस्य ततोऽन्यत्वात्। वर्तमानावर्तमानत्वमेकस्य विरुद्धमिति चेत्; यदि सदसत्त्वं तत्; तन्न। अनभ्युपगमात्। तादूप्येणैव प्रत्यभि-

---

शङ्क्य, एवमेव शिंशुपाया अपि वृक्षातिपातापत्तिरित्याह – **एवं तर्हीति**। एवं प्रमाणाभावेन क्षणिकत्वे निरस्ते तत्र प्रत्यक्षमेव प्रमाणमस्त्विति शङ्कते – **ननु वर्तमान** इत्यादिना। 'अयं घट' इति प्रत्यक्षे पूर्वोत्तरकालयोरभानेन वर्तमानत्वस्यैव भानेन घटादीनां क्षणिकत्वे प्रत्यक्षमेव प्रमाणमिति भावः। वर्तमानत्वं धर्मिणो भिन्नमभिन्नं वा? नोभयथाऽपि क्षणिकत्वसिद्धिरिति परिहरति–**किमत्रेति**।

ज्ञानात् । सदसत्सम्बन्धश्चेत्; किमसङ्गतम्?। ज्ञानवत्तदुपपत्तेः। क्रमेणानेकसम्बन्ध एकस्यानुपपन्न इति चेन्न । उपसर्पणप्रत्ययक्रमेणैव तस्याप्युपपत्तेः। प्रत्यभिज्ञानमप्रमाणमिति चेत्; अस्ति तावदतो निरूपणीयं, क्षणप्रत्ययस्तु भ्रान्तोऽपि नास्तीति विशेषः। स्यादेतत्। माभूदध्यक्षमनुमानं वा क्षणिकत्वे, तथापि सन्देहोऽस्तु। एतावताऽपि सिद्धं समीहितं चार्वाकस्येति चेत्; उच्यते —

स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः।

एकतानिश्चयो येन क्षणे तेन स्थिरे मतः॥ १७॥

न हि स्थिरे तद्दर्शने वा स्वरसवाही सन्देहः। प्रत्यभिज्ञानस्य दुरपह्नवत्वात्। नापि तत्प्रामाण्ये । स हि न तावत्सार्वत्रिको, व्याघातात्। तथाहि — प्रामाण्यासिद्धौ सन्देहोऽपि न सिद्ध्येत्, तत्सिद्धौ वा तदपि सिद्ध्येत्। निश्चयस्य तदधीनत्वात्। कोटिद्वयस्य चादृष्टस्यानुपस्थाने कः सन्देहार्थः?। तद्दर्शने च कथं सर्वथा तदसिद्धिः?।

---

तादृरूप्येणैव, सर्वेनैवेत्यर्थ. । ज्ञानवदिति। यथा प्रत्यभिज्ञानमेकमेव वर्तमानत्वमतीतत्वञ्च विषयीकरोति, तथैकस्यैव क्रमेण सदसत्सम्बन्धे को विरोध इति भावः। उपसर्पणप्रत्ययः, सम्बन्धकारणमित्यर्थः, प्रत्यभिज्ञाया अप्रामाण्यमाशङ्क्य निराकरोति—अस्तीति। प्रत्यभिज्ञानात्मकं धर्मिस्वरूपं सिद्धं। तस्य प्रामाण्यमात्रं साधनीयमिति भावः। ननु क्षणिकत्वे प्रमाणाभावेऽपि न स्थैर्यसिद्धिः। किन्तु सन्देह एवेति चार्वाकशङ्कां निराकरोति — स्थैर्येति । स्थिरे, तद्दर्शने, प्रामाण्ये वा सन्देहः?। तत्र प्रत्यभिज्ञाविरोधान्न पूर्वद्वये सन्देहः। नापि प्रामाण्ये; किं प्रामाण्यसामान्ये संशयः, उत प्रत्यभिज्ञाप्रामाण्ये? नाद्यः, क्वचिदपि प्रामाण्यासिद्धया तत्कोटिकसंशयाभावात्। न द्वितीयः, एकत्र क्षणे येन विरुद्धसंसर्गाभावेनैकत्वनिश्चयः, एवं स्थिरेऽपि तन्निश्चय इति कारिकार्थः। तमेव विवृणोति — नहीत्यादिना । तथाहीति । सर्वत्र प्रमाण्यासिद्धौ सन्देहविषयकनिश्चयस्याप्यप्रामाणिकतया न सन्देहसिद्धिः। तत्सिद्धौ = सन्देहसिद्धौ । तदपि = प्रामाण्य-

एतेनाऽप्रामाणिकस्तद्व्यवहार इति निरस्तम् । सर्वथा प्रामाण्यासिद्धौ तस्याप्यसिद्धेः । प्रकृते प्रामाण्यसन्देहो, लूनपुनर्जातकेशादौ व्यभिचारदर्शनादिति चेन्न । एकत्वनिश्चयस्य त्वयाऽपीष्टत्वात् । अनिष्टौ वा न किञ्चित्सिद्ध्येत् । सिद्ध्यतु यत्र विरुद्धधर्मविरह इति चेत्; तेनैव स्थिरत्वमपि निश्चीयते । स इह सन्दिह्यते इति चेत्; तुल्यमेतत् । क्वचिन्निश्चयोऽपि कथञ्चिदिति चेत्; समः समाधिः । नन्वेतत्कारणत्वं यदि स्वभावो भावस्य नीलादिवत्तदा सर्वसाधारणं स्यात् । न हि नीलं किञ्चित्प्रत्यनीलम् । अथौपाधिकं, तदा उपाधेरपि स्वाभाविकत्वे तथात्वप्रसङ्गः । औपाधिकत्वे त्वनवस्था । अथाऽसाधारणत्वमप्यस्य स्वभाव एव, तत उत्पत्तेरारभ्य कुर्यात्, स्थिरस्यैकस्वभावत्वादिति चेत्; उच्यते—हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ।

तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥१८॥

---

मपि। निश्चयस्य = सन्देहगोचरनिश्चयस्य तदधीनत्वात् = सन्देहगोचरज्ञानप्रामाण्याधीनत्वादिति भावः। **एतेनेति**। प्रामाण्यसामान्यासिद्धौ व्याघातप्रदर्शनेन। **एकत्वनिश्चयस्येति**। क्षणिकत्वसिद्ध्यर्थमिति शेषः। सः = एकत्वनिश्चयहेतुर्विरुद्धधर्माविरहः। **तुल्यमिति**। सहकारिविशेषसमवधानेन स्थिरेऽपि वर्तमानत्वाद्युपपत्तिरित्युक्तावपि यदि विरुद्धधर्मसन्देहस्तदा क्षणेऽपि तत्सन्देहः स्यादिति भावः। 'यदि क्षणिकस्यैक्यं न स्यात्तर्हि किञ्चिदपि न सिद्ध्येदि'ति तर्केण क्षणिकस्यैक्यसिद्धिस्तर्हि स्थिरस्याभावे प्रवृत्तिनिवृत्तिरूपलोकयात्रोच्छेदप्रसङ्ग इति तर्कोऽत्राप्यस्तीत्याह – **समः समाधिरिति**। तदेवमलौकिकं परलोकसाधनं सिद्धम्। सम्प्रति चार्वाकः स्थिरपक्षे कारणत्वानुपपत्त्या प्रत्यवतिष्ठते—**नन्वेतत्कारणत्वमित्यादिना**। **हेत्विति**। हेतुशक्तिं=कारणत्वमनादृत्य नीलाद्यपि न वस्तु सत्, न पारमार्थिकं भवति। कुतश्चित्कारणाल्लब्धस्वरूपस्यैव पारमार्थिकत्वादिति भावः। प्रतिनियतकारणत्वमेव भावानां स्वभावः। न चैतावता कार्यविशेषाणां सततोत्पादप्रसङ्ग इत्याह—**तद्युक्तमिति**। तत्तत्सहकारिविशेषयुक्तं कारणं तत्तत्कार्यविशेषमारभते इति कार्यविशेषनियतं सहकारिसव्यपेक्षञ्च कारणं सर्वसाधारणमेवेति भावः। अस्तु भूतं स्थिरमचेतनञ्च, तथापि नात्मनस्समवायिकारणत्वमुपपद्यत इति

सर्वसाधारणनीलादिवैधर्म्येण काल्पनिकत्वं कार्यकारणभावस्य व्युत्पादयता नीलादिपारमार्थिकमेवाभ्युपगन्तव्यम् । अन्यथा तद्वैधर्म्येण हेतुफलभावस्यापारमार्थिकत्वानुपपत्तेः । न च कार्यकारणभावस्याऽपारमार्थिकत्वे नीलादि पारमार्थिकं भवितुमर्हति, नित्यत्वप्रसङ्गात् । तस्मादस्य पारमार्थिकत्वेऽपरमपि तथा, न वोभयमपीति कथमेकमनेकं परस्परविरुद्धं कार्यं कुर्यात् ? । तत्स्वभावत्वादिति यदि, तदोत्पत्तेरारभ्य कुर्यादविशेषादित्यपि न युक्तं, तत्तत्सहकारिसाचिव्ये तत्तत्कार्यं करोतीति स्वभावव्यवस्थापनात् । इदञ्च साधारणमेव, सर्वैरपि तथोपलम्भात् । न हि नीलादेरप्यन्यत्साधारण्यमिति । स्यादेतत् । अस्तु स्थिरं, तथापि नित्यविभोर्न कारणत्वमुपपद्यते । तथाह्यन्वयव्यतिरेकाभ्यां कारणत्वमवधार्यते; नान्वयमात्रेण, अतिप्रसङ्गात् । न च नित्यविभूनां व्यतिरेकसंभवः । न च सोपाधेरसावस्त्येवेति साम्प्रतम्; तथाभूतस्योपाधिसंबन्धेऽप्यनधिकारात् । जनितो हि तेन स तस्य स्यात् , नित्यो वा ? । न प्रथमः, पूर्ववत् । नापि द्वितीयः, पूर्ववदेव । तथापि चोपाधेरेव व्यतिरेको. न तस्य, अविशेषात् । तद्वत इति चेन्न । स चोपाधिश्चेत्यतोऽन्यस्य तद्वत्पदार्थस्याभावात् । भावे वा स एव कारणं स्यात् । अत्रोच्यते –

पूर्वभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १९ ॥

---

स एव चार्वाकः प्रकारान्तरेण प्रत्यवतिष्ठते – **स्यादेतदिति** । **अनाधिकारादिति** । अयोग्यत्वादित्यर्थः । **पूर्ववदिति** । नित्यविभोर्व्यतिरेकासम्भवः कार्यजनन इवोपाधिजननेपि तुल्य इति भावः । **पूर्ववदिति** । नित्यविभोरुपाधेरपि व्यतिरेकाभावस्तुल्य इत्यर्थः । नित्याव्यापकोपाधिपक्षे दोषमाह – **तथापि चेति** । परिहरति – **पूर्वभाव** इत्यादि । कार्यनियतपूर्ववृत्तित्वं कारणत्वं, तच्च क्वचिदन्वयव्यतिरेकाभ्यां सिद्ध्यति । क्वचिच्च धर्मिग्राहकमानेन सिद्ध्यति । एवञ्च व्यापकस्यापि नित्यस्य कारणत्वं निराबाधमेव । धर्मिग्राहकमानेन कारणसिद्ध्यनङ्गीकारे

भवेदेवं यद्यन्वयव्यतिरेकावेव कारणत्वं, किन्तु कार्यान्नियतः पूर्वभावः। स च क्वचिदन्वयव्यतिरेकाभ्यामवसीयते, क्वचिद्धर्मिग्राहकात्प्रमाणात्। अन्यथा कार्यात्कारणानुमानं क्वापि न स्यात्। तेन तस्यानुविधानानुपलम्भात्। उपलम्भे वा कार्यलिङ्गानवकाशात्, प्रत्यक्षत एव तत्सिद्धेः। तज्जातीयानुविधानदर्शनात्सिद्धिरन्यत्रापि न वार्यते। तथापि कोष्ठगत्यानुविहितान्वयव्यतिरेकमेव कार्यात्कारणं सिद्ध्येत्, अन्यत्र तथा दर्शनादिति चेन्न। बाधेन सङ्कोचात्, विपक्षे बाधकाभावेन चाव्याप्तेः, दर्शनमात्रेण चोत्कर्षसमत्वात्। अस्य च ईश्वरे विस्तरो वक्ष्यते। सर्वव्यापकानां सर्वान्प्रत्यन्वयमात्राविशेषे कारणत्वप्रसङ्गो बाधकमिति चेन्न। अन्वयव्यतिरेकवज्जातीयतया विपक्षे बाधकेन च विशेषेऽनतिप्रसङ्गात्। तथाहि–कार्यं समवायिकारणवद् दृष्टमित्यदृष्टाश्रयमपि तज्जातीयकारणकम्, आश्रयाभावे किं सत्या-

---

ज्ञानादिकार्यलिङ्गेनात्मादेः समवायिकारणस्याप्रतीतिप्रसङ्ग इति भावः। तेन = कार्यविशेषेण। तस्य = कारणविशेषस्य, अनुविधानानुपलम्भादित्यर्थः। येन घटेन या दण्डव्यक्तिरनुमीयते, तद्घटव्यक्तेस्तेन दण्डेनानुविधानं नोपलब्धमिति भावः। शङ्कते – **तथापीति**। घटादिषु दण्डाद्यन्वयव्यतिरेकानुविधानदर्शनेऽपि धर्मिग्राहकमानेनात्मादीनां स्वनिष्ठकार्यगुणेषु कारणत्वग्रहान्न सर्वत्र कार्ये कारणान्वयव्यतिरेकानुविधाननियम इति भावः। **अव्याप्तेरिति**। अप्रयोजकत्वादित्यर्थः। **उत्कर्षसमत्वादिति**। व्याप्त्यभावेऽपि साहचर्यमात्रेण धर्मान्तरापादनमुत्कर्षसमा जातिः। प्रकृते कार्यमात्रे कारणान्वयव्यतिरेकानुविधानमिति नियमाभावेऽपि घटादौ दर्शनमात्रेणाऽऽत्मन्यपि तस्यापादनमुत्कर्षसमा जातिरिति भावः। नन्वन्वयमात्रेण विभोः कारणत्वे सर्वकार्यकारणत्वप्रसङ्ग इति शङ्कते – **सर्वव्यापकानामिति**। परिहरति – **अन्वयव्यतिरेकेति**। यथाऽन्वयव्यतिरेकवद्घटादिकारणं सहकारिविशेषसहितमेव रूपादिकार्योपादानं भवति, एवमात्मापीत्यङ्गीकारेण, 'कार्यं यदि समवायिकारणसापेक्षं न स्यात्तर्ह्यनियतदेशोत्पत्तिकं स्या' दिति तर्केण च नोक्तापत्तिरिति भावः। विपक्षबाधकं तर्कमेव दर्शयति – **आश्रयाभावेत्यादिना**।

सन्नमसमवायिकारणं स्यात्? तदभावे निमित्तमपि किमुपकुर्यात्?। तथा चानुत्पत्तिः सततोत्पत्तिर्वा सर्वत्रोत्पत्तिर्वा स्यात्। एवमपि निमित्तस्य सामर्थ्यादेव नियतदेशोत्पादे स एव देशोऽवश्यापेक्षणीयः स्यात्। तथाच सामान्यतो देशसिद्धावितरपृथिव्यादिबाधे तदतिरिक्तसिद्धिं को वारयेत्? एवमसमवायिनिमित्ते चोहनीये।

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

॥ इति श्रीन्यायकुसुमाञ्जलौ प्रथमस्तबकः ॥

---

एवं सामान्यतो हेतुहेतुमद्भावं प्रसाध्य भगवतो विचित्रप्रपञ्चरचनायां सहकारिकारणमलौकिकं धर्माधर्मरूपमदृष्टं प्रासाध्य, प्रथमाविप्रतिपत्तिनिराकृतेत्युपसंहरति—इत्येषेति। यस्य सहकारिशक्तिर्दुर्निरूपत्वान्मायेति, मूलत्वात्प्रकृतिरिति, ज्ञाननाश्यत्वादविद्येति चोच्यते, तादृशः प्रतारणाकल्पनापरम्परारहितः, द्वेषादिरहितो देवो मम मनसि साक्षितया स्थितः, स्वविषयामभिरतिं बध्नातु, उत्पादयत्विति। अत्रायं प्रथमस्तबकशास्त्रार्थावतरणक्रमः—अलौकिकं परलोकसाधनं नास्तीति शङ्कायां, कादाचित्कत्वहेतुना सामान्यतो हेतुहेतुमद्भावं प्रसाध्य, तत्र च सत्प्रतिपक्षशङ्कायां तन्निराकरणप्रसङ्गेन स्वभाववादं निराकृत्य, सिद्धसाधनशङ्कायां तन्निराकरणप्रसङ्गेन सहजशक्तिवादमाधेयशक्तिवादञ्च निराकृत्य, मध्ये स्मृतं साङ्ख्यमतमप्युपेक्षानर्हत्वेन निराकृत्य, चार्वाकाशङ्कितं भूतचैतन्यवादं, बौद्धमतसिद्धं क्षणिकत्ववादञ्च निराकृत्य, स्थिरपक्षे नित्यविभोः कारणत्वं व्यवस्थाप्य, तस्य विचित्रजगद्रचनायां सहकारितयाऽलौकिकं परलोकसाधनमदृष्टं सिद्ध्यतीति।

इति श्रीमद्राममूर्तिबुधेन्द्रचरणकमलसेवासमासादितन्यायविद्यावैशद्येन
श्रीमद्वरदाचार्यवर्यव्यवस्थापितनारसिह्मसंस्कृतकलाशाला-
न्यायालङ्कारपण्डितेन सोमशेखरशास्त्रिणा निर्मि-
तायां कुसुमाञ्जलिटिप्पण्यां प्रथमः स्तबकः।

॥ शुभमस्तु ॥

श्रीगणेशाय नमः

# सामोदे न्यायकुसुमाञ्जलौ

## द्वितीयः - स्तबकः



तदेवं सामान्यतः सिद्धे अलौकिके हेतौ तत्साधनेनावश्यं भवितव्यम् । न च तच्छक्यमस्मदादिभिर्द्रष्टुम् । न चादृष्टेन व्यवहारः । ततो लोकोत्तरः सर्वानुभावी सम्भाव्यते । ननु नित्यनिर्दोषवेदद्वारको योगकर्मसिद्धसर्वज्ञद्वारको वा धर्मसम्प्रदायः स्यात्, किं परमेश्वरकल्पनयेति चेत्; अत्रोच्यते –

प्रमायाः परतन्त्रत्वात्सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्ननाश्वासान्न विधान्तरसम्भवः ॥ १ ॥

तथाहि – प्रमा, ज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वे सति तद्विशेषत्वात्, अप्रमावत् । यदि च तावन्मात्राधीना भवेत्, अप्रमापि प्रमैव भवेत् । अस्ति हि तत्र ज्ञानहेतुः । अन्यथा ज्ञानमपि सा न स्यात् । ज्ञानत्वेऽप्यतिरिक्तदोषानुप्रवेशादप्रमेति चेत्, एवं तर्हि दोषाभावमधिक-

---

द्वितीयां विप्रतिपत्तिं निराकर्तुं भूमिकामारचयति – **तदेवमिति** । **सामान्यत** इति । सामान्यतोदृष्टेन पूर्वोक्तेनानुमानेनेत्यर्थः । अन्यथासिद्धिं मीमांसकः शङ्कते – **नन्विति** । यद्यप्यन्यथासिद्धिरपि प्रमाणाभाव एव पर्यवस्यति । तथापि साक्षात्प्रमाणाभावोऽग्रे दर्शयिष्यते, अन्यथासिद्धिद्वारा अत्रेति विवेकः । **प्रमाया** इति । परतन्त्रत्वात्, गुणजन्यत्वादित्यर्थः ॥ **सर्गेति** । तथाच वेदस्य स्वरूपतः, प्रवाहतश्च नित्यत्वं नास्तीत्यर्थः । एतेन प्रथमासिद्धिर्निराकृता । द्वितीयामन्यथासिद्धिं निराकरोति–**तदन्यस्मिन्निति** । अनित्यज्ञानवत्त्वेन भ्रमशङ्काक-

---

१. स्यादेतदिति पा० । अयमाशयः – नित्यत्वेन पुरुषानुप्रवेशाभावात् दोषरहितं स्वतस्सिद्धप्रामाण्यञ्च वेदमेव मूलमवलम्ब्य धर्मसम्प्रदायोऽयमस्तु, तन्नित्यत्वासिद्धावपि साङ्ख्यादिमतावलम्बनेन कर्मयोगसिद्धसाक्षात्कारविषयीकृतधर्माधर्माः कपिलादय एव मूलमस्य सन्तु, किमनेन परमेश्वरेणाऽनपेक्षितसमुद्रवालुकाकीटसंख्यादिसर्वविषयकज्ञानेनेति ।

मासाद्य प्रमापि जायेत, नियमेन तदपेक्षणात्। अस्तु दोषाभावोऽधिको, भावस्तु नेष्यते इति चेत्; भवेदप्येवं, यदि नियमेन दोषैर्भावरूपैरेव भवितव्यम्। न त्वेवम्, विशेषादर्शनादेरभावस्यापि दोषत्वात्। कथमन्यथा ततः संशयविपर्ययौ। ततस्तदभावो भाव एवेति कथं स नेष्यते।

स्यादेतत्। शब्दे तावद्विप्रलिप्सादयो भावा एव दोषाः। ततस्तदभावे स्वत एव शाब्दी प्रमेति चेन्न। अनुमानादौ लिङ्गविपर्यासादीनां भावानामपि दोषत्वे तदभावमात्रेण प्रमानुत्पत्तेः। अन्यत्र यथातथाऽस्तु, शब्दे तु विप्रलिप्साद्यभावे वक्तृगुणापेक्षा नास्तीति चेन्न। गुणाभावे तदप्रामाण्यस्य वक्तृदोषापेक्षा नास्तीति विपर्ययस्यापि सुवचत्वात्। अप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ स्त इति चेन्न। प्रामाण्यं प्रत्यपि गुणानां तयोः सत्त्वात्। पौरुषेयविषये इयमस्तु व्यवस्था, अपौरुषेये तु दोषनिवृत्त्यैव प्रामाण्यमिति चेन्न। गुणनिवृत्त्याऽप्रामाण्यस्यापि सम्भवात्। तस्या अप्रामाण्यं प्रति सामर्थ्यं नोपलब्धमिति चेत्; दोषनिवृत्तेः प्रामाण्यं प्रति क्व सामर्थ्यमुपलब्धम्? लोकवचसीति चेत्; तुल्यम्। तदप्रामाण्ये दोषा एव कारणं, गुणनिवृत्तिस्त्ववर्जनीयसिद्धसन्निधिरिति चेत्; प्रामाण्यं प्रति गुणेष्वपि तुल्यमेतत्। गुणानां दोषोत्सारणप्रयुक्तः सन्निधिरिति चेत्; दोषाणामपि गुणोत्सारणप्रयुक्त इत्यस्तु। निस्स्वभावत्वमेवमपौरुषेयस्य वेदस्य स्यादिति चेत्; आत्मानमुपालभस्व। तस्माद्यथा द्वेषरागाभावाऽविनाभावेऽपि रागद्वेषयोरनुविधाननियमात्प्रवृत्तिनिवृत्तिप्रयत्नयो रागद्वेषकारणकत्वं, न तु निवृत्तिप्रयत्नो द्वेषहेतुकः। प्रवृत्तिप्रयत्नस्तु सत्यपि रागानुवि-

---

लङ्कितत्वान्नित्यसर्वज्ञपूर्वकत्वमन्तरा प्रकारान्तरं न सम्भवतीत्यर्थः। प्रमानुत्पत्तेरिति। लिङ्गसादृश्यादियथार्थज्ञानमन्तरेति भावः। निस्स्वभावत्वमिति। वेदे प्रामाण्याऽप्रामाण्यप्रयोजकयोर्गुणदोषयोरभावादित्यर्थः। रागद्वेषकारणकत्वमिति। अन्यथोपेक्षात्मकज्ञानादपि प्रवृत्तिनिवृत्त्योरापत्तेरिति भावः।

धाने द्वेषाभावहेतुक इति विभागो युज्यते। विशेषाभावात्। तथा प्रकृतेऽपि। तथापि वेदानामपौरुषेयत्वे सिद्धे, अपेतवक्तृदोषत्वादेव प्रामाण्यं सेत्स्यति। ततः सिद्धे प्रामाण्ये गुणाभावेऽपि तदिति दोषाभाव एव हेतुरकारणं गुणा इति चेन्न। अपेतवक्तृगुणत्वेन सत्प्रतिपक्षत्वप्रसङ्गात्। स्वत एव प्रामाण्यनिश्चयः। किन्तु शङ्कामात्रमनेनापनीयते। दोषनिबन्धनत्वात्तस्य तदभावेऽभावात्। अतो नेदमनुमानवत् सत्प्रतिसाधनीकर्तुमुचितमिति चेन्न। गुणनिवृत्तिनिबन्धनायाः शङ्कायाः सुलभत्वात्। तस्याः केवलाया अप्रामाण्यं प्रत्यनङ्गत्वान्न शङ्केति चेत्; दोषनिवृत्तेरपि केवलायाः प्रामाण्यं प्रत्यनङ्गत्वान्न तया शङ्कानिवृत्तिरिति तुल्यमिति। एवं प्रामाण्यं परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वात्, अप्रामाण्यवत्। यदि तु स्वतो ज्ञायेत; कदाचिदपि प्रामाण्यसंशयो न स्यात्, ज्ञानत्वसंशयवत्। निश्चिते तदनवकाशात्। न हि साधकबाधकप्रमाणा-

---

**तदिति।** प्रामाण्यमित्यर्थः। तथाच व्यभिचाराद्गुणस्य न प्रामाण्यप्रयोजकत्वमिति भावः। भवदुपन्यस्तो वेदप्रामाण्यसाधकः, अपेतवक्तृदोषत्वादिति हेतुरप्रामाण्यसाधकेनाऽपेतवक्तृगुणत्वादिति हेतुना सत्प्रतिपक्षित इत्याह-**अपेतवक्तृगुणत्वेनेति।** ननु ज्ञानग्राहकादेव प्रामाण्यं सिद्ध्यति। दोषाधीना तु शङ्का दोषाभावेनाऽपनीयत इत्याशङ्क्य, तथापि गुणाभावहेतुकाऽप्रामाण्यशङ्का तदवस्थैवेत्याह — **गुणनिवृत्तिनिबन्धनाया इति।** एवं प्रमाया उत्पत्तौ परतस्त्वं निरूप्य ज्ञप्तावपि तन्निरूपयति – **एवं प्रामाण्यमि**त्यादिना। अर्थक्रियाकारित्वविज्ञानान्निश्चितप्रामाण्यैः प्रवृत्तिविज्ञानैस्सह सजातीयत्वानुसन्धानमभ्यासदशापत्तिः। तद्दशापन्नानां ज्ञानानां तज्जातीयत्वाऽनुसन्धानादेव प्रामाण्यनिश्चय इति तेषु सांशयिकत्वमसिद्धमित्यसिद्धिशङ्कानिरासार्थमाह — **अनभ्यासेति। सांशयिकत्वादिति।** तज्जातीयत्वाननुसन्धानदशायां ज्ञानस्वरूपे निश्चितेऽपि प्रामाण्यं प्रति संशयाज्ज्ञानस्वरूपनिश्चयात्तद्ग्राहकाद्वा न प्रामाण्यनिश्चयः, किन्त्वर्थक्रियाकारित्वादितः परत एव, यथा विसंवादादेः परत एवाप्रामाण्य-

**भावमवधूय समानधर्मादिदर्शनादेवाऽसौ। तथा सति तदनुच्छेदप्रसङ्गात्। अथ प्रमाणवदप्रमाणेऽपि तत्प्रत्ययदर्शनाद्विशेषादर्शनाद्भवति शङ्केत्यभिप्रायः; तत्किं प्रमाणज्ञानोपलम्भेऽपि न तत्प्रामाण्यमुपलब्धम्, प्रमाणज्ञानमेव वा नोपलब्धम्?। आद्ये कथं स्वतः प्रामाण्यग्रहः? प्रत्ययप्रतीतावपि तदप्रतीतेः। द्वितीये, कथं तत्र शङ्का?। धर्मिण एवाऽनुपलब्धेरिति। यदपि झटिति प्रचुरतरसमर्थप्रवृत्त्यन्यथाऽनुपपत्त्या स्वतः प्रामाण्यमुच्यते, तदपि नास्ति। अन्यथैवोपपत्तेः। झटिति प्रवृत्तिर्हि झटिति तत्कारणोपनिपातमन्तरेणानुपपद्यमाना तमाक्षिपेत्, प्रचुरप्रवृत्तिरपि स्वकारणप्राचुर्यम्। इच्छा च प्रवृत्तेः कारणम्। तत्कारणमपीष्टाभ्युपायताज्ञानम्। तदपि तज्जातीयत्वलिङ्गाऽनुभवप्रभवम्। सोऽपीन्द्रियसन्निकर्षादिजन्मा, न तु प्रामाण्यग्रहस्य क्वचिदप्युपयोगः। उपयोगे वा स्वत एवेति कुत एतत्?। ततः समर्थप्रवृत्तिप्राचुर्यमपि प्रामाण्यप्राचुर्यात्, तद्ग्रहणप्राचुर्याद्वा। स्वतस्त्वं तु तस्य क्वोपयुज्यते। न हि [1]पिपासूनां झटिति प्रचुरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिस्तस्य प्रत्यक्षा स्यात्।**

---

मिति भावः। **तदनुच्छेदप्रसङ्गादिति**। विशेषदर्शनदशायामपि साधारणधर्मदर्शनसत्त्वादिति भावः। ननु ज्ञानेन सह गृह्यमाणेऽपि प्रामाण्ये प्रमाणाप्रमाणज्ञानयोर्विशेषादर्शनात्संशयोपपत्तिरिति शङ्कते — **अथेति**। तत्प्रत्ययदर्शनात् प्रामाण्यप्रत्ययदर्शनादित्यर्थः। निराकरोति — **तत्किमित्यादिना**। अयं भावः — गृह्यमाणं ज्ञानं यद्यप्रमाविलक्षणं न गृहीतं तदा तत्प्रामाण्यमेव न गृहीतम्। यदि च विलक्षणतया गृहीतं तदा न संशयावकाश इति। प्रामाण्यस्य स्वतो ग्राह्यत्वे परोक्तं प्रमाणं दूषयति — **यदपीत्यादिना**। प्रामाण्यस्य परतो ग्राह्यत्वपक्षेऽनवस्थापत्त्या प्रवृत्त्याद्यनुपपत्तिमाशङ्क्य, प्रामाण्याग्रहेऽप्यर्थग्रहणसम्भवा-

---

१. अयं भावः— न हि पिपासाशमनशक्तिमति विशिष्टा प्रवृत्तिः पाथस्स्वरूपग्राहकात्प्रत्यक्षादेव तच्छक्तिग्रहमपेक्षते, सांहित्यलिङ्गेनापि तद्ग्रहोपपत्तेः। तथा प्रवर्तकविज्ञानस्वरूपग्राहकप्रमाणादन्येनाऽपि तज्जातीयत्वादिना लिङ्गेन तत्प्रामाण्यानुमानमविरुद्धमिति।

स्यादेतत् । प्रामाण्यग्रहे सति सर्वमेतदुपपद्यते । स च स्वतो यदि न स्यात्, न स्यादेव । परतः पक्षस्यानवस्थादुःस्थत्वादिति चेन्न । तदग्रहेऽप्यर्थसन्देहादपि सर्वस्योपपत्तेः । न चानवस्थाऽपि, प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमात् । अन्यथा स्वतः पक्षेऽपि सा स्यात् । लिङ्गं निश्चितमेव निश्चायकम् । ततस्तन्निश्चयार्थमवश्यं लिङ्गान्तरापेक्षायामनवस्थेति चेत्; तत्किमनुपपद्यमानोऽर्थोऽनिश्चित एव स्वोपपादकमाक्षिपति, येनाऽनवस्था न स्यात् प्रत्यक्षेण तस्य निश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति चेत्; ममापि प्रत्यक्षेण लिङ्गनिश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति तुल्यम् । लिङ्गज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चयः स्यादिति चेत्; अनुपपद्यमानार्थज्ञानप्रामाण्यानिश्चये कथं तन्निश्चय इति तुल्यम् । न हि निश्चयेन स्वप्रामाण्यनिश्चयेन वा विषयं निश्चाययति प्रत्यक्षम्, अपि तु स्वसत्तयेत्युक्तमिति चेत्; तुल्यम् । तथापि यदि तल्लिङ्गाभासः स्यात्तदा का वार्तेति चेत्; अनुपपद्यमानोऽप्यर्थो यद्याभासः स्यात्तदा का वार्तेति तुल्यम् । सोऽपि प्रामाण्यमाक्षिपतीत्युत्सर्गः । स च क्वचिद्बाधकेनापोद्यते इति चेत्; लिङ्गेऽप्येवमिति तुल्यम् । तर्हि प्रामाण्यानुमानेऽपि शङ्का तदवस्थैवेति निष्फलः प्रयास इति चेत्; एतदपि तादृगेव । [1]अनुपपद्यमानोऽर्थ एवासौ तथाविधः कश्चित्, यः स्वप्नेऽपि नाभासः स्यात् ततो नाशङ्केति चेत्; लिङ्गे-

दर्थसन्देहेऽपि प्रवृत्तिदर्शनाच्च नानुपपत्तिरिति परिहरति – **तदग्रहेपी**त्यादिना । प्रामाण्याग्रहेपीत्यर्थः । ननु प्रामाण्ये कदाचित् ज्ञातव्ये ऽनवस्था स्यादित्याशङ्क्य निराकरोति – **न चानवस्थे**त्यादिना । अयं भावः – यथा ह्यर्थग्रहणे नियमेन न प्रामाण्यग्रहापेक्षा तथा प्रवर्तकज्ञाने प्रामाण्यग्रहेऽपि तद्ग्राहकेषु गुणादिग्रहेष्वपि न प्रामाण्यग्रहापेक्षा । तथाच यत्र प्रामाण्यं ज्ञातव्यं भवति तत्र तदन्येनाऽगृहीतप्रामाण्येनैव प्रकृते प्रामाण्यं निश्चीयत इत्यवश्यमेवाङ्गीकर्तव्यम् । अन्यथा अर्था-

१. 'यदन्तरेण हि यन्नोपपद्यते न तत्तदन्तरेणापि भवती' ति न्यायमवलम्ब्य अनुपपद्यमानस्याऽऽभासत्वं न सम्भवतीत्याह – अनुपपद्यमान इत्यादिना ।

ऽप्येवमिति समः समाधिः । कः पुनरसावर्थो यः स्वप्नेऽपि नाभासः स्यात्, यदनुपलम्भे विभ्रमावकाशो, यादृगुपलम्भे च तद्बाधव्यवस्था । अन्यथा हि, तथाभूतस्यापि व्यभिचारे सापि न स्यात् । मा भूदिति चेन्न । भवितव्यं हि तत्त्वाऽतत्त्वविभागेन । अन्यथा व्याघातात् । कथं हि नियामकनिःशेषविशेषोपलम्भेऽपि विपरीतारोपः ? । तथाभावे वा तदतिरिक्तविशेषानुपलम्भे कथं बाधकम् ? । तदभावे त्वबाधस्य कथं भ्रान्तत्वमिति । स्यादेतत् । परतः प्रामाण्येऽपि नित्यत्वाद्वेदानामनपेक्षत्वं, महाजनपरिग्रहाच्च प्रामाण्यमिति को विरोधः? । न । उभयस्याप्यसिद्धेः । न हि वर्णा एव तावन्नित्याः । तथा हि - 'इदानीं श्रुतपूर्वो गकारो नास्ति, निवृत्तः कोलाहल' इति प्रत्यक्षेणैव शब्दध्वंसः प्रतीयते । न हि शब्द एवाऽन्यत्र गतः, अमूर्तत्वात् । नाप्यावृतः, तत एव सम्बन्धविच्छे-

---

परया, ज्ञातताख्यलिङ्गेन वा प्रामाण्यमिति वदतस्तवापि तत्र तत्र प्रामाण्यनिश्चयापेक्षायामनवस्थाप्रसङ्गो दुर्निवार इति । पार्श्वस्थः पृच्छति – **कः पुनरिति** । योऽसौ युवाभ्यामुच्यते नाऽऽभासः स्यादिति कोऽसावर्थ इति । उत्तरमाह–**यदनुपलम्भ** इति । यस्योपलम्भे भ्रान्तिर्न भवति, अनुपलम्भे चाऽसौ भवति, सोऽर्थः स्वप्नेऽपि नाऽऽभासः स्यादित्यर्थः । अनाभासस्योपलक्षणान्तरमप्याह–**बाधेति** । अन्यथेत्यस्य विवरणं–**तथाभूतस्यापि व्यभिचार** इति । सापि = बाधव्यवस्थापि, बाधव्यवस्थानङ्गीकारे दोषमाह–**भवितव्यमिति** । बाधकविषयस्तत्त्वम्, बाध्यविषयश्चाऽतत्त्वमिति लोकमर्यादेति भावः । **अन्यथेति** । लोकमर्यादातिक्रमे तत्त्वाऽतत्त्वव्यवस्था भज्येतेत्यर्थः । यादृशोपलम्भ इत्यादिनोक्तमर्थमुपपादयति – **कथं हीति** । अशेषविशेषोपलम्भे विपरीतारोपो नास्ति, तथाभावे = अशेषविशेषोपलम्भेऽपि यद्यारोपत्वं तदा, तस्य बाधकत्वेनाभिमतस्य विशेषानुपलम्भे = अबाध्यत्वानिश्चये बाधकत्वमेव न स्यात् । अबाध्यत्वनिश्चयेत्वारोपत्वं न सिद्ध्यतीति भावः । नन्वस्त्वन्यत्र शब्दे प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च परतस्त्वम् । वेदे तु नित्यतया महाजनपरिग्रहाच्च न तथेत्याशङ्क्य निराकरोति – **स्यादेतदि**त्यादिना । **तत एवेति** । अमूर्तत्वादेवेत्यर्थः । **सम्बन्धविच्छेदानुपपत्तेरिति** ।

दानुपपत्तेः। नाप्यनवहितः श्रोता, अवधानेऽप्यनुपलब्धेः। नापीन्द्रियं दुष्टं, शब्दान्तरोपलब्धेः। नापि सहकार्यन्तराभावः, अन्वयव्यतिरेकवतस्तस्यासिद्धेः। नाप्यतीन्द्रियम्, तत्कल्पनायां प्रमाणाभावात्। अन्यथा, घटादावपि तत्कल्पनाप्रसङ्गात्। न च शब्दनित्यत्वसिद्धौ तत्कल्पनेति युक्तम्। निराकरिष्यमाणत्वात्।

येत्वेकदेशिनो नैवमिच्छन्ति, तान् प्रत्युच्यते। विवादाध्यासितः शब्दप्रध्वंसः, इन्द्रियग्राह्यः, ऐन्द्रियकाभावत्वात्, घटाभाववत्। नैतदेवम्। इन्द्रियाऽसन्निकृष्टत्वादतीन्द्रियाधारत्वाद्वेति चेन्न। इदं ह्युपाध्युद्भावनं वा स्यात्, व्यापकानुपलब्ध्या सत्प्रतिपक्षत्वं वा?। न प्रथमः। स्वरूपयोग्यतां प्रति सहकारियोग्यताया अनुपाधित्वात्। तस्यास्तामपेक्ष्यैव सर्वदा व्यवस्थितेः। नाप्यैन्द्रियकाधारत्वप्रयुक्तमभावस्य प्रत्यक्षत्वम्। धर्माद्यभावस्यापि तथात्वप्रसङ्गात्। अत एव

---

श्रोत्रसमवायस्य नित्यत्वादिति भावः। **तत्कल्पनायामिति**। शब्दोपलम्भकस्याऽतीन्द्रियस्य कल्पनायामित्यर्थः। शब्दध्वंसस्य प्रत्यक्षत्वं नास्तीति वदन्तं नैयायिकैकदेशिनं प्रत्याह – **येत्विति**। **ऐन्द्रियकाभावत्वादिति**। इन्द्रियग्राह्यो यः प्रतियोगी तत्प्रतियोगिकाभावत्वादित्यर्थः। तेन न साध्याविशिष्टतेति बोध्यम्। शङ्कते–**नैतदिति**। **उपाध्युद्भावनमिति**। स्वव्यतिरेकेणेति शेषः। तथाचेन्द्रियसान्निकृष्टत्वमैन्द्रियकाधारत्वञ्चोपाधिरित्यर्थः। अत्रैन्द्रियकाधारत्वस्य धर्मादिसाधारण्येऽपि दूषकताबीजस्य साध्यव्यापकत्वस्याऽनपायान्नोपाधित्वभङ्ग इति भावः। **व्यापकेति**। प्रत्यक्षत्वव्यापकस्येन्द्रियसन्निकृष्टत्वस्य ऐन्द्रियकाधारत्वस्य चानुपलब्ध्येत्यर्थः। प्रथमोपाधिं निरस्यति – **स्वरूपेति**। प्रत्यक्षस्वरूपयोग्यतां प्रति सहकारियोग्यता नोपाधिः। साध्याऽव्यापकत्वादित्यर्थः। तस्याः = स्वरूपयोग्यतायाः। तां, सहकारियोग्यतामित्यर्थः। एवञ्चात्र 'सर्वदाऽव्यवस्थितेरि' त्यकारप्रश्लेषो बोध्यः। प्रत्यक्षस्वरूपयोग्यतासत्त्वेऽपि सहकारियोग्यताविरहेण क्वचिन्न प्रत्यक्षत्वमिति भाव.। द्वितीयमुपाधिं दूषयति–**नापीति**। त्र्यणुके साध्याव्यापकत्वादिति भावः। किञ्च प्रत्यक्षयोग्यताऽत्र साध्या, सा चाभावस्य नैन्द्रियकाधारत्व-

नोभयमप्ययुक्तम्। नापि द्वितीयः, प्रथमस्यासिद्धेः। अस्ति हि श्रोत्रशब्दाभावयोः स्वाभाविको विशेषणविशेष्यभावः। विशेष्यस्यातीन्द्रियत्वात् कथमैन्द्रियकविशिष्टज्ञानविषयत्वम्?। तथा विशेष्यमव्यवस्थापयतश्च कथं विशेषणत्वमिति चेन्न। तथा विशेष्यव्यवस्थापनायाः फलत्वात्। न तु तदेव विशेषणत्वम्, आत्माश्रयत्वप्रसङ्गात्। विशेषणभावेन समवायाऽभावयोर्ग्रहणं, तथा ग्रहणमेव च विशेषणत्वमिति। तस्मात् संबन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वमेव हि तयोः। सैव च विशिष्टप्रत्ययजननयोग्यता विशेषणतेत्युच्यते। सा चात्र दुर्निवारा, प्रतियोग्यधिकरणेन स्वभावत एवाऽभावस्य मिलितत्वात्। तथापि तया तथैव प्रतीतिः कर्तव्येति चेन्न। गृह्यमाणविशेष्यत्वावच्छिन्नत्वाद्व्याप्तेः। अन्यथा संयुक्तसमवायेन रूपादौ विशिष्टविकल्पधीजननदर्शनात् गन्धादावपि तथात्वप्रसङ्गात्। तथापि नेन्द्रियविशेषणतया कस्यचिद् ग्रहणं

---

रूपा। सत्प्रतिपक्षं दूषयति—**नापि द्वितीय** इति। अत्र स्थापनानुमाने प्रत्यक्षयोग्यत्वस्य साध्यत्वेन प्रत्यनुमाने तदभावः साध्यः। तत्र च नेन्द्रियासन्निकृष्टत्वं हेतुः। इन्द्रियासन्निकृष्टेऽपि योग्यतायाः सत्त्वेन व्यभिचारात् हीनफलोऽयं हेतुरिति भावः। प्रथमस्य, इन्द्रियासन्निकृष्टत्वस्यासिद्धेरित्यर्थः। स्वरूपासिद्धत्वाच्च न सत्प्रतिपक्षत्वमिति भावः। नन्वतीन्द्रियस्य श्रोत्रस्य शब्दाभावस्य च विशेषणविशेष्यभावो न सम्भवति, विशेष्यव्यवस्थापनाभावादित्याशङ्क्य, विशेष्यव्यवस्थापनं विशेषणस्य फलं, न तु तदेव विशेषणत्वस्वरूपमिति समाधत्ते — **तथा विशेष्येति**। आत्माश्रयं विवृणोति — **विशेषणभावेनेति**। **प्रतियोगीति**। श्रोत्रेण शब्दाभावस्य स्वभावत एव सन्निकृष्टत्वादित्यर्थः। **तथापीति**। तया — विशेषणतया, तथैव — विशेषणविशिष्टविशेष्यविषयैव। एवञ्चात्र विशेष्यस्य श्रोत्रस्याऽयोग्यतया सा न सम्भवतीति भावः। **गृह्यमाणेति**। यत्र विशेष्यं योग्यं तत्रैव तादृशविशेष्यप्रत्ययः। अत्र च विशेष्यस्याऽयोग्यतया विशेषणतासन्निकर्षेण शब्दध्वंसस्य प्रत्यक्षमेव जन्यत इति भावः। एवमनङ्गीकारे दोषमाह — **अन्यथेति**। रूपादेः साश्रयस्य प्रत्यक्षत्वाद्वायवीयस्पर्शस्यापि तथात्वप्रसङ्ग इति

दृष्टम्, अपि त्विन्द्रियसंबद्धविशेषणतया। सा चाऽता ानवतत इात चन्न। अस्य प्रतिबन्धस्य इन्द्रियसन्निकृष्टार्थप्रतिसंबन्धिविषयत्वात्। अन्यथा संयुक्तसमवायेन गन्धादावुपलब्धिदर्शनात्, समवायेनाऽदर्शनात् शब्दस्याग्रहणप्रसङ्गात्। नाप्यभावत्वे सतीन्द्रियाधारत्वात् सत्प्रतिपक्षत्वम्, योग्यताविरहप्रयुक्तत्वाद्व्याप्तेः। न चातीन्द्रियाधारत्वमेव तस्य योग्यताविरहः। तद्विपर्ययस्यैव योग्यतात्वापत्तेः। न चैवमेव, धर्मादिप्रध्वंसग्रहणप्रसङ्गात्। दृश्याधारत्वं दृश्यप्रतियोगिता चेति द्वयमप्यस्य योग्यतेति चेन्न। उभयनिरूपणीयत्वनियमानभ्युपगमात्। प्रतियोगिमात्रनिरूपणीयो ह्यभावः। अन्यथा, 'इह भूतले घटो नास्ती'त्येषाऽपि प्रतीतिः प्रत्यक्षा न स्यात्। संयोगो ह्यत्र निषिध्यते। तदभावश्च भूतलवत् घटेऽपि वर्तते। तत्र यदि प्रत्यक्षतया भूतलस्योपयोगो घटस्यापि तथैव स्यादविशेषात्। अथ घटस्याऽन्यथोपयोगः; भूतलस्याप्यन्यथैव स्यादविशेषात्। कथमन्यथेति चेत्; प्रतियोगिनिरूपणार्थमभावसन्निकर्षार्थश्च। तत्र प्रतियोगिनिरूपणं स्मरणलक्षणमनुपलभ्यमानेनाऽपीति न

---

भावः। प्रतिबन्धस्य = व्याप्तेः। प्रतिसम्बन्धिविषयत्वात्, इन्द्रियसंयुक्तसमवेतविषयत्वादित्यर्थः। द्वितीयसत्प्रतिपक्षं निराकरोति—**नापीति**। शब्दे व्यभिचारवारणायाऽभावत्वे सतीति विशेष्यम्। **योग्यताविरहेति**। तथा चातीन्द्रियाधारत्वहेतुर्योग्यताविरहरूपोपाधिमत्त्वाद्दुर्बल इति भावः। नन्वतीन्द्रियाधारत्वमेव योग्यताविरहः। तथाच साधनाभिन्नत्वात्कथमयमुपाधिरित्याशङ्क्य निराकरोति—**न चेति**। अभावस्योभयनिरूप्यत्वाङ्गीकारे दोषमाह—**अन्यथेति**। 'भूतले घटो नास्ती'त्यत्र घटस्य प्रागभावो वा प्रध्वंसाभावो वा न विषयः। तयोः कपाल एव सत्त्वात्। नाऽप्यत्यन्ताभावः, कदाचित्तस्य तत्र भावादित्याशयेनाह—**संयोगो ह्यत्रेति**। तथाच संयोगस्य ध्वंसः प्रागभावो वा विषय इति वक्तुं शक्यत इति भावः। भूतलस्यान्यथोपयोगोपपत्तिमाह—**प्रतियोगीति**। निषेधप्रतियोगिनः संयोगस्य निरूपणं स्मर्यमाणेन घटेनेव स्मर्यमाणेन भूतलेनापि सम्भवतीति भावः।

तदर्थमध्यक्षगोचरत्वमपेक्षणीयमन्यतरस्यापि, कुत उभयस्य। सन्निकर्षस्तु भूतलघटसंयोगस्येन्द्रियेण साक्षान्नास्ति। येनाऽस्ति, तेनापि यदीन्द्रियं न सन्निकृष्येत कथमिव तं गमयेत्?। न चोपलब्धोपलभ्यमानाभ्यामेवेन्द्रियं सन्निकृष्यते। इतरेतराश्रयप्रसङ्गात्। तस्मात् सन्निकर्षे सति योग्यत्वाद्भूतलमप्युपलभ्यते, न तु तस्योपलभ्यमानत्वमभावोपलब्धेरङ्गमिति युक्तमुत्पश्यामः। प्रकृते तु न प्रतियोगिनिरूपणार्थं तदुपयोगः। तस्य संयोगवदाधारानिरूप्यत्वात्। नापि सन्निकर्षार्थं, तदभावस्य साक्षादिन्द्रियसन्निकर्षादिति। न चेदेवं, कुत एषा प्रतीतिरिदानीं श्रुतपूर्वः शब्दो नास्तीति। अनुमानादिति चेन्न। शब्दस्यैव पक्षीकरणे हेतोरनाश्रयत्वात्। अनित्यत्वमात्रसाधनेऽभा-

---

अभावसन्निकर्षार्थमपि भूतलस्य न प्रत्यक्षत्वापेक्षेत्याह—**सन्निकर्षस्त्विति**। इन्द्रियेण साक्षात्सम्बन्धोऽभावस्य नास्ति। येन भूतलेन विशेषणविशेष्यभावोऽस्ति, तस्यापि भूतलस्येन्द्रियासन्निकृष्टत्वेऽभावस्य प्रत्यक्षं न स्यात्। अतोऽभावप्रत्यक्षार्थं भूतलस्येन्द्रियेण सम्बन्धमात्रमपेक्षितम्। तस्य प्रत्यक्षत्वमर्थसिद्धमपि नापेक्षितम्। तथाचेन्द्रियस्याभावस्य च सन्निकर्षसंपादकतया भूतलस्योपयोग इति भावः। ननु सन्निकर्षार्थमपि भूतलस्य प्रत्यक्षत्वमपेक्षितम्। अनुपलब्धस्य चानुपलभ्यमानस्य चेन्द्रियसन्निकर्षायोगादित्याशङ्क्य निराकरोति - **नचेति**। इन्द्रियसन्निकर्षादुपलम्भः, उपलब्धस्य चेन्द्रियसन्निकर्ष इति परस्पराश्रय इति भावः। तदभावस्य—शब्दध्वंसस्य। योग्यप्रतियोगिकत्वमात्रस्याऽभावप्रत्यक्षे प्रयोजकत्वानङ्गीकारे दूषणमाह—**न चेदेवमिति**। नन्वस्त्वियं प्रतीतिरनुमानादित्याशङ्क्य, शब्दः, इदानीं नास्ति, अनुपलभ्यमानत्वादित्यनुमानेऽतीतशब्दस्य हेत्वाश्रयत्वानुपपत्तेराश्रयासिद्धो हेतुः। विद्यमानं शब्दं पक्षीकृत्य कृतकत्वहेतुनाऽनित्यत्वानुमाने शब्दः कदाचित्प्रध्वंसिष्यत इत्येतावन्मात्रसिद्धावपि 'इदानीं नास्ती' ति प्रत्ययासिद्धिः। आकाशं पक्षीकृत्य शब्दवत्तयाऽनुपलभ्यमानत्वहेतुना निःशब्दत्वसाधने, आकाशस्यातीन्द्रियतया शब्दवत्यप्याकाशे हेतोः सत्त्वाद्व्यभिचार इत्याह - **अनुमानादित्यादिना**।

वस्य नियतकालत्वासिद्धेः । आकाशस्य पक्षत्वे तद्वृत्तयाऽनुपलभ्यमानत्वस्य हेतोरनैकान्तिकत्वात् । शब्दसद्भावकालेऽपि तस्य सत्त्वात् । एवं कालपक्षेऽपि दोषात् । अहमिदानीं निःशब्दश्रोत्रवान्, शब्दोपलब्धिरहितत्वात्, बधिरवदिति चेन्न । दृष्टान्तस्य साध्यविकलत्वात्, व्याहतत्वाच्च । बधिरश्च श्रोत्रवाँश्चेति व्याहतम् । तस्यापि च श्रवसः निःशब्दत्वे प्रमाणं नास्ति । अनुपभोग्यस्य उत्पादवैयर्थ्यं प्रमाणमिति चेन्न । आद्यादिशब्दवदुपपत्तेः । तेषां शब्दान्तरारम्भं प्रत्युपयोगः, अन्त्यस्य न तथेति चेन्न । अन्त्यत्वासिद्धेः । सर्वेषाञ्चोत्पादवतां प्रयोजनतदभावयोरस्मादृशैरनाकलनात् । सुषुप्त्यवस्थायां श्वासप्रश्वासप्रयोजनवच्च तदुपपत्तेः । आरम्भे सति प्रयोजनमवश्यमिति व्याप्तेः । न त्वापाततः प्रयोजनानुपलम्भमात्रेणारम्भानिवृत्तिः । तथा सति कर्णशष्कुल्यवच्छेदोत्पाद एव नभसः तं प्रति निवर्तेत । बधिरस्य तेनाऽनुपयोगात् । विवादकाले बधिरकर्णः शब्दवान्, योग्यदेशस्यानावृत्तकर्णशष्कुलीसुषिरत्वात् । तदितरकर्णशष्कुलीसुषिरवदिति । निःशब्दाः पणववीणावेणवः । तदेकज्ञानसंसर्गयोग्यत्वस्य तदनुपलम्भेऽप्युपलभ्यमानत्वात् । यत् यदेकज्ञानसंसर्गयोग्यस्यानुपलम्भेऽप्युप-

---

अनुमानान्तरमाशङ्क्य निराकरोति – अहमित्यादि । तस्यापि – बधिरस्यापि । बधिरस्य शब्दग्रहणसहकार्यदृष्टं नास्तीति शङ्कायामपि दृष्टान्तस्य साध्यविकलत्वादिति भावः । बधिरश्रवसि शब्दाभावसाधकमनुमानमाशङ्क्य निराकरोति – **अनुपभोग्यस्येत्या**दिना । बधिरश्रवसि शब्दसाधकं प्रमाणमाह – **बधिरकर्ण इति** । वीणादिषु शब्दध्वंसानुमानमाशङ्कते – **निःशब्दा इति** । **तदेकेति** । तेन विशेषणेन शब्देन सह यदेकं ज्ञानं - विशिष्टज्ञानं । तत्संसर्गयोग्यस्य, नियमेन तद्विषयीभूतस्य । विशेषणवत्तया नियमेनैकज्ञानविषयस्येत्यर्थः । विशेषणासिद्धौ

---

१. धर्माद्यनुपलम्भेषूपलभ्यमानेनाऽऽत्मना व्यभिचारो मा भूदित्यर्थं तदेकज्ञानसंसर्गयोग्यत्वस्येत्यभिहितम् । सशब्दानामपि वीणादीनामुपलभ्यमानतया तत्र व्यभिचारवारणार्थं तदनुपलम्भेऽपीत्युक्तम् । शब्दानुपलम्भेऽपीति तदर्थः ।

लभ्यते तत् तदभाववत् । यथा – अघटं भूतलमिति चेन्न । एकज्ञानसंसर्गयोग्यत्वाभावात् । शब्दस्य श्रौत्रत्वाद्वीणादीनां चाक्षुषत्वात् । अभिमानमात्रादिति चेन्न । तथापि शब्दप्रध्वंसस्याऽतद्देशत्वात्, अत्यन्ताभावस्य च कालाऽनियमात् । स्यादेतत् । शब्दवदाकाशोपाधयो हि भेर्यादयः । तेन तेषु विधीयमानः शब्दः आकाश एव विहितो भवति । प्रतिषिद्ध्यमानश्च तत्रैव प्रतिषिद्धो भवति, शरीरे सुखादिवदिति चेन्न । तत्र सोपाधावात्मनि प्रत्यक्षसिद्धे सुखादिनिषेधस्यापि प्रत्यक्षसिद्धत्वात् । न चैवमिहापि; तदुपहितस्य नभसोऽप्रत्यक्षत्वात् । उपाधयस्तावत् प्रत्यक्षा इति चेन्न । तैरभावाऽनिरूपणात् । निरूपणे वा प्रत्यक्षेणापि ग्रहणप्रसङ्गात् । न चैवं सति पारमार्थिकाधिकरणानिरूपणीयत्वमभावस्य । न च तेऽपि प्रत्यक्षसिद्धाः । सर्वत्र शब्दकारणव्यवधानेऽप्युपलब्धस्य शब्दस्य नास्तितताप्रतीतेः । आनुमानिकैस्तैस्तथा व्यवहार इति चेन्न । हेतोस्तद्वृत्तयाऽनुपलभ्यमानत्वस्याऽनैकान्तिकत्वात् । अभावप्रतीतिकाले सन्दिग्धाश्रयत्वाच्च । उपलभ्यमानाविशेष्यत्वपक्षे चासिद्धेः । इन्द्रियव्यवधानाच्छब्दलिङ्गस्य चानुपलम्भात् ।

---

हेतुरित्याह – **एकज्ञानेति** । किञ्च शब्दध्वंसस्याऽऽकाशवृत्तित्वेन बाधितश्चायम् । अत्यन्ताभावसाधने इदानीमिति नियतकालप्रतीतिर्न स्यादित्याह – **तथापीति** । उपाधौ विधिनिषेधावुपाधिमति भवत इत्याशङ्क्य निराकरोति – **स्यादेतदिति** । **अनिरूपणादिति** । अभावस्याश्रयनिरूप्यत्वात्तेषामनाश्रयत्वादिति भावः । किञ्च-तेषामुपाधीनां प्रत्यक्षतया नाऽभावनिरूपकत्वं, कुड्यादिभिस्तेषां व्यवधानेऽपि शब्दस्य तदभावस्य च प्रतीतेरित्याह–**न च तेऽपीति** । ननु शब्देन वीणादीननुमाय तत्र शब्दाभावमनुमाय 'निःशब्दा वीणादय' इति व्यवहारोपपत्तिः क्रियत इत्याशङ्क्य निराकरोति–**आनुमानिकैरिति** । **अनैकान्तिकत्वादिति** । उपाधीनामश्रौत्रत्वात्सशब्दानामपि तेषां तथाऽनुपलभ्यमानत्वादिति भावः । किञ्च शब्देन भेर्यादीनामनुमानमपि न सम्भवतीत्याह — **अभावप्रतीतेरिति** । उपलभ्यमानभेर्यादीनां प्रत्यक्षत्वं विशेषणासिद्ध्या न सम्भवतीत्याह – **इन्द्रियेति** ।

अपि च, नष्टाश्रयाणां द्रव्यगुणकर्मणां नाशोपलम्भः कथं? । न कथञ्चिदिति चेत्; आश्रयनाशात्कार्यनाश इति कुत एतत्? । अनुमानतस्तथोपलम्भादिति चेन्न। तुल्यन्यायेनोक्तोत्तरत्वात् । तन्तुषु नष्टेष्वपि यदि पटो न नश्येत्तद्वदेवोपलभ्येतेति चेत्; एतस्य तर्कस्यानुग्राह्यमभिधीयताम्। यदत्रोपलभ्यते न तत् कार्यपरम्परावत्, योग्यस्य तथाऽनुपलभ्यमानत्वे सति उपलभ्यमानत्वादिति चेन्न। तन्त्ववयवानां पटाऽनाधारत्वे साध्ये सिद्धसाधनात्। पटप्रध्वंसवत्त्वे साध्ये बाधितत्वात्। तस्य स्वप्रतियोगिकारणमात्रदेशत्वात् । ये पटध्वंसवन्तस्तन्तवस्तदभाववन्त एते अंशव इति साध्यमिति चेन्न । तन्तुनाशोत्तरकालं पटनाशात् तद्वृत्तानुपपत्तेः । योग्यतामात्रसाधने च, पटप्रध्वंसाऽसिद्धेः। तस्य नाशाऽनाशयोः समानत्वात्। अनन्यगतिकतया विशिष्टनिषेधे कृते विशेषणानामप्यभावः प्रतीतो भवति । गुणक्रियावत्पटाधारास्तन्तवो न सन्ति स्वावयवेष्विति हि प्रत्यय इति चेत्; तथापि गुणकर्मणां पटस्य च प्रध्वंसः किमधिकरणः प्रतीयते इति वक्तव्यम् । अंश्वधिकरण एवेति चेत्; भ्रान्तिस्तर्हीयम्। तस्याऽतद्देशत्वात्। आश्रयावच्छेदकतया तेषा-

---

ध्वंसस्याऽधिकरणनिरूप्यत्वे दूषणान्तरमाह–अपि चेति। कुत एतदिति। आश्रयनाशात्कार्यनाश इति व्यवहारः किन्निबन्धन इति भावः । आनुमानिकैराश्रयैरानुमानिकोऽयं नाशोपलम्भ इत्याशङ्क्य निराकरोति — तुल्यन्यायेनेति । व्यवहितवीणाद्यनुमानेनाऽऽनुमानिकस्तत्र शब्दाभावोपलम्भ इत्यनेन तुल्यतया आश्रयासिद्धत्वादिभिर्निराकृतत्वादिति भावः । आश्रयनाशात्कार्यनाश इति व्यवहारस्य मूलं तर्कमाह — तन्तुष्विति। तर्कस्य प्रमाणानुग्राहकत्वेन न केवलस्यास्य व्यवहारमूलत्वमित्याह–एतस्य तर्कस्येति । प्रमाणमाह — यदत्रेति। अत्र - नष्टाश्रये पटादौ, यत्-अंशुः उपलभ्यते तत्-अंशुः। तन्तुपटतदीयगुणादिरूपा या कार्यपरम्परा तद्वन्न, तद्वत्तयोपलब्धुं योग्यस्य तथाऽनुपलभ्यमानत्वे सति स्वयमुपलभ्यमानत्वादित्यनुमानमस्यानुग्राह्यमिति भावः । दूषणद्वयं परिहरति — ये पटेति । पटप्रध्वंसासिद्धेरिति । तस्य, योग्यतामात्रस्य । नाशयोग्यतायाः पटसद्भावका-

मप्यदूरविप्रकर्षेण तद्देशत्वम्। एवम्भूतेनापि देशेन तन्निरूपणम्, योग्यताया अव्यभिचारादिति चेत्;न तर्हि प्रतियोगिसमवायिदेशेनैव प्रध्वंसनिरूपणमिति नियमः। प्रकारान्तरेणापि निरूपणात्। तस्मात् यस्य यावतीग्रहणसामग्री तं विहाय तस्यां सत्यां तदभावो यत्र क्वचिन्निरूप्यो देशे काले वा। इयांस्तु विशेषः। सा सती चेत्, प्रत्यक्षेण। असत्येव ज्ञाता चेत्, अनुमानादिनेति स्थितिः। एतेन 'सङ्ख्यामभावो निरूप्यते' इत्यादिशास्त्रविरोधः परिहृतो वेदितव्यः। उभयनिरूपणीयप्रतियोगिविषयत्वात्, अनुमानविषयत्वाच्च। अन्यथा, आश्रयासिद्धिप्रसङ्गात्। तत्रापि न ग्रहणे नियमो, ज्ञानमात्रन्तु विवक्षितम्। तावन्मात्रस्यैव तदुपयोगात्। क्वचिद्ग्रहणस्य सामग्रीसंपातायातत्वात्। यदि चाधिकरणग्रहे शास्त्रस्य निर्भरः स्यात्, वह्नेर्दाह्यं विनाश्यानुविनाशवत्तद्विनाश (न्या० ४-१-२७) इति नोदाहरेत्, असिद्धत्वात्। न हि

---

लेऽपि सत्त्वेन प्रध्वंसस्य नियमेन ततोऽसिद्धेरिति भावः। नन्वत्रांशूनामेव पटध्वंसानाश्रयाणामपि तन्निरूपकत्वमङ्गीक्रियत इति चेत्तर्हि प्रतियोगिसमवायिदेशेनैव प्रध्वंसनिरूपणमिति नियमो नास्ति। किन्तु यस्य भावस्य यावती ग्रहणकसामग्री, तं भावं विहाय तस्यां सत्यां यत्र क्वचिदभावो निरूप्यत इत्याह-**एवम्भूतेनापीत्यादिना**। यद्यतीन्द्रियाधारोऽप्यभावः प्रत्यक्षस्तर्हि प्रत्यक्षाप्रत्यक्षव्यवस्था कथमित्यत आह — **इयांस्त्विति**। सामग्र्याः सतीत्वं योग्यानुपलब्धिसहकृतत्वं, तद्रहितत्वमसतीत्वमिति भावः। **उभयनिरूपणीयेति**। यादृशः संयोगः प्रत्यक्षविषयेनोभयेन निरूप्यस्तादृशसंयोगस्याभावोऽपि उभयनिरूपणीयः। **अनुमानेति**। अभावानुमानेऽधिकरणनिरूप्यत्वमभावस्याङ्गीकर्तव्यम्। अन्यथाऽऽश्रयासिद्धिप्रसङ्ग इति भावः। तत्रापि तस्य प्रत्यक्षत्वनियमो नास्तीत्याह—**तत्रापीति**। शास्त्रस्य विशेषविषयित्वे सूत्रकारसम्मतिमाह —**यदि चेति**। सर्वमनित्यमित्युक्ते, तदनित्यत्वं नित्यं न वा? नित्यं चेत्सर्वानित्यत्वासिद्धिः। अनित्यं चेत्तन्नाशे न पुनरपि सर्वानित्यत्वसिद्धिरिति शङ्कायामाह—सू० - **वह्नेर्दाह्यं विनाश्यानुविनाशवत्तद्विनाश** इति। यदा वह्निर्दाह्यं विनाश्य स्वयं विनश्यत्येवमनित्यत्वमपि सर्वं

वह्निविनाशः तदवयवपरम्परास्वनिरूप्यः, तासामनिरूपणात्। नाप्य-न्यत्र गगनाभावादिना पारिशेष्यादनुमेयः। हेतोरेव निरूपयितुमशक्य-त्वात्। आश्रयानुपलब्धेः। नापि निमित्तविनाशात्सर्वमिदमेकवारेण सेत्स्यतीति युक्तम्, तस्यानैकान्तिकत्वात्। तेजसा विशेषितत्वादयम-दोष इति चेन्न। व्याप्त्यसिद्धेः। न हि इन्धनविनाशात्तेजोद्रव्यमवश्यं विनश्यतीति क्वचित्सिद्धम्, प्रत्यक्षवृत्तेरनभ्युपगमात्। तस्मात् यस्यागे-नान्यत्र गमनं न संभाव्यते, तेन निमित्तादिनापि देशेन प्रध्वंसो निरू-प्यते इत्यकामेनापि स्वीकरणीयम्, गत्यन्तराभावात्। अत एव तमसः प्रत्यक्षत्वेऽप्यभावत्वमामनन्त्याचार्याः। एतेन शब्दप्रागभावो व्याख्या-तः। एवं स्थिते अनुमानमप्युच्यते – शब्दोऽनित्यः उत्पत्तिधर्मकत्वा-

---

विनाश्य स्वयमपि विनश्यतीति सूत्रार्थः। अत्र वह्निविनाशो दृष्टान्ततयोपात्तः। विनाशस्याधिकरणनिरूप्यत्वाङ्गीकारे तन्नोपपद्यत इत्याह — **असिद्धत्वादिति**। अनिरूपणात्, अप्रत्यक्षत्वादित्यर्थः। अन्यत्रागमनेसत्यनुपलभ्यमानत्वरूपेण हेतु-ना तद्विनाशस्यानुमानमपि न संभवपि। हेतोरप्यभावरूपत्वेनाश्रयनिरूपणमन्तरा निरूपयितुमशक्यत्वादित्याह – **नाप्यन्यत्रेत्यादिना**। निमित्तकारणस्य काष्ठादे-र्विनाशेन तत्कार्यवह्नितदवयवादीनां विनाशोऽनुमीयत इत्यपि न शक्यते वक्तुम्। घटादौ दण्डादिनाशेऽपि नाशादर्शनेन व्यभिचारादित्याह – **तस्यानैकान्तिक-त्वादिति**। ननु तेजोनाशस्य निमित्तकारणविनाशेन व्याप्तत्वान्नानुपपत्तिरित्या-शङ्क्य भवताऽतीन्द्रियाधारस्य नाशस्य प्रत्यक्षत्वानङ्गीकारात्तयोरपि व्याप्तिरसिद्धे-त्याह – **न हीति**। उपसंहरति – **तस्मादिति**। तस्मात्, विनाशस्य प्रतियो-ग्याधारनिरूप्यत्वानियमाभावादित्यर्थः। **अत एवेति**। निमित्तादिनाशेनापि ध्वंसनिरूपणादित्यर्थः। अन्यथाऽऽलोकावयवानामतीन्द्रियत्वेन तेजोऽभावरूपस्य तमसः प्रत्यक्षत्वं न स्यादिति भावः। **एतेनेति**। संसर्गाभावस्य प्रति-योगियोग्यतामात्रनिरूप्यत्वकथनेन। **व्याख्यात इति**। प्रत्यक्षतयेति शेषः। एवं शब्दध्वंसप्रागभावयोः प्रत्यक्षसिद्धत्वेन शब्दस्यानित्यत्वं प्रत्यक्षमेवेत्यभिधाय, अनुमानमपि तत्र प्रमाणयति – **एवं स्थिते** इत्यादिना। 'सोऽयं गकार' इति

द्वदट्वत् । न चेदं प्रत्यभिज्ञानबाधितम् । तस्य ज्वालादिप्रत्यभिज्ञानेनाविशेषात् । नैवमबाधितस्य तस्य स्वतः प्रमाणत्वादिति चेत्; तुल्यम् । ज्वालायां तन्नास्ति, विरुद्धधर्माध्यासेन बाधितत्वात् । अन्यथा भेदव्यवहारविलोपप्रसङ्गो, निमित्ताभावात् । आकस्मिकत्वे वा अतिप्रसङ्ग इति चेत्; तुल्यं शब्देऽपि । तीव्रतीव्रतरत्वमन्दमन्दतरत्वादेर्भावात् । तदिह न स्वाभाविकमिति चेन्न । स्वाभाविकत्वावधारणन्यायस्य तत्र तत्र सिद्धस्याऽत्रापि तुल्यत्वात् । न ह्यपां शैत्यद्रवत्वे स्वाभाविके, तेजसो वा औष्ण्यभास्वरत्वे इत्यत्रान्यत्प्रमाणमस्ति प्रत्यक्षादिना । तत्तथैव युज्यते अन्यस्योपाधेरनुपलम्भान्नियमेन तद्गतत्वेन चोपलम्भादिति चेत्तुल्यमेतत् । तथाऽप्यतीन्द्रियान्यधर्मत्वशङ्का स्यादिति चेत्; एतदपि तादृगेव । तत्किं यद्गतत्वेन यदुपलभ्यते, तस्यैव स धर्मः । नन्वेवं पीतः शङ्खो, रक्तः स्फटिको, नीलः पट इत्यपि तथा स्यादविशेषात् । न । पीतत्वादीनां अन्यधर्मत्वस्थितौ शङ्खादीनाञ्च तद्विरुद्धधर्मत्वे स्थिते जपाकुसुमाद्यन्वयव्यतिरेकानुविधानाच्च बाधेन भ्रान्तत्वावधारणात् । न चेह तारतारतरत्वादेरन्यधर्मत्वस्थितिः । नापि शुकसारिकादिगकाराणां तद्विरुद्धधर्मत्वं, नाप्यन्यस्य तद्धर्मिणोऽन्वयव्यतिरेकावनुविधत्ते । तथापि शङ्का स्यादिति चेदेवमियं सर्वत्र । तथाच न काचित् किञ्चित् कुतश्चित्सिद्ध्येत् । न चैतच्छङ्कितुमपि शक्यते, अप्रतीते संस्काराभावात् । संस्कारानुपनीतस्य चारोपयितुमशक्यत्वात् । न च ध्वनिधर्मा

---

प्रत्यभिज्ञाया बाधमाशङ्क्य, सादृश्यालम्बनज्वालाप्रत्यभिज्ञातौल्येन निराकरोति — **न चेदमिति । विरुद्धधर्माध्यासेनेति** ; उपचयाऽपचयरूपाविरुद्धधर्माध्यासेनेत्यर्थः । ननु प्रत्यक्षेण चेत्स्वाभाविकत्वासिद्धिस्तर्हि पीतरूपस्य शङ्खधर्मत्वमपि किं न स्यादित्याशङ्कते — **तत्किमिति** । पीतत्वादीनां शङ्खादिधर्मत्वे बाधकमस्तीत्याह — **नेति** । किञ्च तारत्वादीनामन्यत्राननुभवादस्मृतानां तेषां शब्देष्वारोप इति न शक्यते वक्तुमित्याह — **न चैतच्छङ्कितुमित्यादिना** । तारत्वादीनां ध्वनिधर्मत्वमाशङ्क्य निराकरोति — **न च ध्वनिधर्मा** इत्यादिना ।

एव गृह्यन्ते। स्पर्शाद्यनन्तर्भावेन भावेषु त्वगादीनामव्यापारात्। न च श्रवणेनैव तद्ग्रहणम्। अवायवीयत्वेन तस्य वायुधर्माऽग्राहकत्वात्, चक्षुर्वत्। तारतारतरत्वादयो वा न वायुधर्माः, श्रावणत्वात्, कादिवत्। वायुर्वा न श्रवणग्राह्यधर्मा मूर्तत्वात्, पृथिवीवत्। यदि च नैवं, कादीनामपि वायवीयत्वप्रसङ्गः। ततः किं? अवयविगुणत्वेऽनित्यत्वं, परमाणुगुणत्वेऽग्रहणम्। द्वयमप्येतदनिष्टं भवतः। अवश्यञ्च श्रवसा ग्राह्यजातीयगुणवता भवितव्यम्। बहिरिन्द्रियत्वात्, घ्राणादिवत्। सन्तु ध्वनयोऽपि नाभसाः। तथाच तद्धर्मग्रहणं श्रवसोपपत्स्यते इति चेन्न। तारस्तारतरो वाऽयं गकार इत्यत्र ध्वनीनामस्फुरणात्। न च व्यक्त्या विना सामान्यस्फुरणम्, कारणाभावात्। व्यक्तिस्फुरणसामग्रीनिविष्टा हि जातिस्फुरणसामग्री। कुत एतत्? अन्वयव्यतिरेकाभ्यां तथाऽवगमात्। ऐन्द्रियकेष्वेव घटादिषु सामान्यग्रहणात्। अतीन्द्रियेषु च मनःप्रभृतिष्वग्रहणात्। स्वरूपयोग्यतैव तत्र निमित्तं, अकारणं व्यक्तियोग्यतेति चेत्; एवं तर्हि सत्ताद्रव्यत्वपार्थिवत्वादीनां स्वरूपयोग्यत्वे परमाण्वादिष्वपि ग्रहणप्रसङ्गः। अयोग्यत्वे घटादिष्वपि तदनुपलम्भापत्तिरिति दुरुत्तरं व्यसनम्। तस्माद्व्यक्तिग्रहणयोग्यतान्तर्गतैव जातिग्रहणयोग्यतेति तदनुपलम्भे जातेरनुपलम्भ एव। तथाच न तारत्वादीनामारोपसम्भव इति स्वाभाविकत्वस्थितौ विरुद्धधर्माध्यासेन भेदस्य पारमार्थिकत्वात् प्रत्यभिज्ञानमप्रमाणमिति न तेन बाधः। नापि सत्प्रतिपक्षत्वं, मिथो विरुद्धयोर्वास्तवतुल्यबलत्वाभावात्। एकस्यान्यतमाङ्गवैकल्यचिन्तायामस्य वैकल्ये तस्यैवो-

---

भावेषु=तारत्वादिषु। तारत्वादीनां वायुधर्मत्वे बाधकमाह — **यदि च नैवमिति**। वर्णानां वायुधर्मत्वे बाधकमभिधाय, आकाशधर्मत्वे साधकमप्याह — **अवश्यश्चेति**। ध्वनीनां नाभसत्वमुक्त्वा तद्धर्माणां तारत्वादीनां शब्देषु नाऽऽरोपः शक्यते कर्तुमित्याह — **तारस्तारतर** इत्यादिना। वस्तुनः द्वैरूप्याभावात्सिद्धवस्तुविषययोर्विरुद्धप्रमाणयोः तुल्यबलत्वाभावान्न सत्प्रतिपक्षत्वमित्याह — **नापि सत्प्रतिपक्षत्वमित्यादिना**। अङ्गं = पक्षसत्त्वादि। अस्य = अस्मदीयप्रमाणस्य।

द्राव्यत्वात् । अवैकल्ये त्वदीयेनैव विकलेन भवितव्यमिति हीनस्य न सत्प्रतिपक्षत्वम् । तथापि नित्यः शब्दोऽद्रव्यद्रव्यत्वादित्यत्रापि साधनदशायां किञ्चिद्वाच्यमिति चेदसिद्धिः । द्रव्यं शब्दः साक्षात्संबन्धेन गृह्यमाणत्वात्, घटवदिति सिद्ध्यतीति चेन्न । एतस्याऽप्यसिद्धेः । न हि श्रोत्रगुणत्वे द्रव्यत्वे वाऽसिद्धे साक्षात्संबन्धे शब्दस्य प्रमाणमस्ति । परिशेषोऽस्ति, तथाहि–सदाद्यभेदेन सामान्यादित्रयव्यावृत्तौ मूर्तद्रव्यसमवायनिषेधेन कर्मत्वनिषेधात् द्रव्यगुणत्वपरिशेषे संयोगसमवाययोरन्यतरः संबन्ध इति चेन्न । बाधकबलेन परिशेषे द्रव्यत्वस्यापि निषेधाल्लिङ्गग्राहकप्रमाणबाधापत्तेः । बाधके सत्यपि वा द्रव्यत्वाप्रतिषेधे कर्मत्वादीनामप्यप्रतिषेधप्रसक्तौ परिशेषासिद्धेः । तस्मादेकदेशपरिशेषो न प्रमाणं, सन्देहसङ्कोचमात्रहेतुत्वात् । अथ द्रव्यत्वे किं बाधकम् ? । उच्यते—शब्दो न द्रव्यं, बहिरिन्द्रियव्यवस्थाहेतुत्वात्, रूपादिवदिति परिशेषात् गुणत्वेन समवायिसिद्धौ लिङ्गग्राहकप्रमाणबाधितत्वात् नाव्यवहितसंबन्धग्राह्यत्वेन द्रव्यत्वसिद्धिः । न चासिद्धेन सत्प्रतिपक्षत्वं, असिद्धस्य हीनबलत्वात् ।

---

**अद्रव्यद्रव्यत्वादिति** । असमवेतद्रव्यत्वादित्यर्थः । प्रागभावे व्यभिचारवारणाय द्रव्यत्वोपादानम् । **असिद्धिरिति** । असमवेतत्वद्रव्यत्वयोरिति भावः । ननु सत्तादिमत्त्वेन सामान्यादिव्यावृत्तस्य, मूर्तद्रव्यासमवायेन कर्मणोऽपि व्यावृत्तौ, द्रव्यत्वगुणत्वयोरन्यतरपरिशेषे साक्षात्सम्बन्धः सिद्ध्यतीत्याशङ्क्य बाधकबलेनेतरनिषेधवद्द्रव्यत्वस्यापि निषेधे द्रव्यत्वसाधकमनुमानं बाधितं भवतीत्याह — **बाधकबलेनेति** । **लिङ्गग्राहकप्रमाणबाधापत्तेरिति** । द्रव्यत्वसाधकप्रमाणबाधापत्तेरित्यर्थः । अथवा — लिङ्गग्राहकस्य द्रव्यत्वगुणत्वपरिशेषानुमानस्य बाधापत्तेरित्यर्थः । किञ्च पदार्थसामान्यविषयकस्य सन्देहस्य द्रव्यगुणान्यतरसङ्कोचकत्वेऽप्यनिर्णायकत्वादयं परिशेषो न प्रमाणमित्याह – **तस्मादिति** । **लिङ्गग्राहकप्रमाणबाधितत्वादिति** । परिशेषानुमानस्य बाधितत्वादित्यर्थः ।

ननु शब्दस्तावदश्रोत्रगुणो नैवेति त्वयैव साधितं प्रबन्धेन। न च श्रोत्रगुणः, तेन गृह्यमाणत्वात्। यत् येनेन्द्रियेण गृह्यते नाऽसौ तस्य गुणः। यथा गृह्यमाणो गन्धादिः। श्रोत्रं वा न स्वगुणग्राहकं, इन्द्रियत्वात्, घ्राणवदिति न गुणत्वसिद्धिरिति चेत्; ततः किं?। न चैतदपि, घ्राणादिसमवेतगन्धाद्यग्रहे स्वगुणत्वस्याऽप्रयोजकत्वात्। अयोग्यत्वं हि तत्रोपाधिः। अन्यथा, सुखादिर्नात्मगुणः तेन गृह्यमाणत्वात् रूपादिवत्, न वा तेन गृह्यते तत्समवेतत्वात् अदृष्टवत्, आत्मा वा न तदग्राहकः तदाश्रयत्वात्, गन्धाद्याश्रयघटादिवदित्याद्यपि शङ्केत तस्मात् स्वगुणः परगुणो वाऽयोग्यो न गृह्यते। गृह्यते तु योग्यो योग्येन। तत्किमत्राऽनुपपन्नम्। अवश्यश्च श्रोत्रेण विशेषगुणग्राहिणा भवितव्यं, इन्द्रियत्वात्। अन्यथा तन्निर्माणवैयर्थ्यात्। तदन्यस्येन्द्रियान्तरेणैव ग्रहणात्। न च द्रव्यविशेषग्रहणे तदुपयोगः। विशेषणयोग्यतामाश्रित्यैवेन्द्रियस्य द्रव्यग्राहकत्वात्, न द्रव्यस्वरूपयोग्यतामात्रेण। अन्यथा चान्द्रमसं तेजः स्वरूपेण योग्यमिति तदप्युपलभ्येत। आत्मा वा मनोग्राह्य इति। सुषुप्त्यवस्थायामप्युपलभ्येत। अनुद्भूतरूपेऽपि वा चक्षुः प्रवर्तेत। तस्मात् गुणयोग्यतामेव पुरस्कृत्येन्द्रियाणि द्रव्यमुपाददते, नाऽतोऽन्यथेति स्थितिः। अत[1] एव नाऽऽकाशादयश्चाक्षुषाः। अस्तु तर्हि शब्दो नित्यः, नित्याकाशैक[2]गुणत्वात्,

---

ननु शब्दस्याऽश्रोत्रगुणत्वं भवता साधितम्। मया श्रोत्रगुणत्वं निराकरिष्यते। तथाच गुणत्वासिद्धौ परिशेषात् द्रव्यत्वं सिद्ध्यतीत्याशयेन शङ्कते— **नन्विति**। एवमपि द्रव्यत्वं तस्य न सिद्ध्यतीत्याह— **ततः किमिति**। **स्वगुणः परगुणो वाऽयोग्यो न गृह्यते**। योग्यस्तु गृह्यत इत्याशयेन समाधत्ते— **न चैतदपीत्यादिना**। **तदन्यस्येति**। शब्दादन्यस्येत्यर्थः। भाट्टसत्प्रतिपक्षशङ्कां निराकृत्य प्राभाकरशङ्कां निराकरोति — **अस्तु तर्हीत्यादिना**। एवमनित्यत्वानु-

---

१. अत एव— तद्विशेषगुणस्य चक्षुरग्राह्यत्वादेवेत्यर्थः। २. आकाशैकगुणत्वादित्यत्रानेकगुणेन संयोगादिना व्यभिचारवारणार्थमेकग्रहणम्:

**सम्बध्यन्ते नातोऽन्यथेति, नैतदनुरोधेनापि शब्दस्य नित्यत्वमाशङ्कनीयमिति। यदा च वर्णा एव न नित्यास्तदा कैव कथा पुरुषविवक्षाधीनाऽऽनुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानां, कुतस्तराञ्च तत्समूहरचनाविशेषस्वभावस्य वाक्यस्य, कुतस्तमां तत्समूहस्य वेदस्य। परतन्त्रपुरुषपराधीनतया प्रवाहाविच्छेदमेव नित्यतां ब्रूम इति चेत्; एतदपि नास्ति, सर्गप्रलयसम्भवात्। अहोरात्रस्याऽहोरात्रपूर्वकत्वानियमात् कर्मणां विषमविपाकसमयतया युगपद्वृत्तिनिरोधानुपपत्तेर्वर्णादिव्यवस्थानुपपत्तेः, समयानुपलब्धौ शाब्दव्यवहारविलोपप्रसङ्गात्, घटादिसम्प्रदायभङ्गप्रसङ्गाच्च कथमेवमिति चेत्; उच्यते—**

**वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत्।**
**उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः॥ २॥**

---

त्यादिना वेदस्येत्यन्तेन॥ ननु पूर्वपूर्वोच्चारयितृपुरुषपरतन्त्रोत्तरोत्तरोच्चारयितृपरंपराप्रवाहस्याविच्छेदः, सैव नित्यतेत्याशङ्क्य निराकरोति—**एतदपीति**। हेतुपञ्चकेन सर्गप्रलयासंभवमाह — **अहोरात्रस्येत्यादि**। पञ्चापि हेतून्दूषयति — **वर्षादिवदिति**। यथा दिनस्य वर्षादित्वे सूर्यस्य मेषादिराशिसंसर्गो निमित्तं, न तु तत्पूर्वभाविनोऽहोरात्ररूपदिनस्य तत्र प्रयोजकत्वमेवमहोरात्रस्य अहोरात्रपूर्वकत्वे भवः - ब्रह्माण्डस्थितिरुपाधिः—प्रयोजकः। तथाच ब्रह्माण्डस्थितिकाल एवाहोरात्रस्याऽहोरात्रपूर्वकत्वमिति भावः। यथा सुषुप्तौ बाह्याभ्यन्तरवृत्तीनां निरोधः, एवं कदाचित्सर्वेषामपि कर्मणामुपरोधसंभवान्न प्रलयसिद्ध्यनुपपत्तिरिति भावः। यथा केषाञ्चिद्वृश्चिकानां वृश्चिकजन्यत्वेपि केषाञ्चिद्गोमयजन्यत्वं तथाऽऽधुनिकब्राह्मणानां ब्राह्मणजन्यत्वनियमेऽपि सर्गादौ संस्काररूपादृष्टसध्रीचीनभूतविशेषाणामेव ब्राह्मण्यादिनियामकत्वेन न वर्णाद्यनुपपत्तिः, यथैक एव मायावी प्रयोज्यप्रयोजकरूपविशेषान् धृत्वा प्रेरणानयनादिरूपविचित्रकार्याणि करोति तथा परमेश्वरः प्रयोज्यप्रयोजकशरीरविशेषपरिग्रहेण केषाञ्चिच्छब्दानां सङ्केतमकरोत्तदशाल्लोके व्यवहारात्संकेतग्रहोऽप्युपपद्यत इति कारिकातात्पर्यार्थः। अहोरात्रस्य अहोरात्रपूर्वकत्वे साध्ये प्रलयाङ्गीकारेऽपि पूर्वकल्पीयाहोरात्रपूर्वकत्वमादाय सिद्ध-

तत्पूर्वकत्वमात्रे सिद्धसाधनात्, अनन्तरतत्पूर्वकत्वे अप्रयोजकत्वात्, वर्षादिदिनपूर्वकतद्दिननियमभङ्गवदुपपत्तेः। राश्यादिविशेषसंसर्गरूपकालोपाधिप्रयुक्तं हि तत्। तदभाव एव व्यावृत्तेः। तथेहापि-सर्गानुवृत्तिनिमित्तब्रह्माण्डस्थितिरूपकालोपाधिनिबन्धनत्वात्तस्य तदभाव एव व्यावृत्तौ को दोषः। न च तदनुत्पन्नमनश्वरं वा, अवयवित्वात्। वृत्तिनिरोधस्यापि सुषुप्त्यवस्थावदुपपत्तेः। न ह्यनियतविपाकसमयानि कर्माणीति न तदानीं कृत्स्नान्येव भोगविमुखानि। न ह्यचेतयतः कश्चिद्भोगो नाम, विरोधात्। कस्तर्हि तदानीं शरीरस्योपयोगः?। तं प्रति न कश्चित्। तर्हि किमर्थमनुवर्तते?। उत्तरभोगार्थं, चक्षुरादिवत्। प्राणिति किमर्थम्?। श्वासप्रश्वाससन्तानेनाऽऽयुषोऽवस्थाभेदार्थम्। तेन भोगविशेषसिद्धेः। एकस्यैव तत् कथञ्चिदुपपद्यते, न तु विश्वस्येति चेत्; अनन्ततया, अनियतविपाकसमयतया, उपमर्द्योपमर्दकस्वभावतया च कर्मणां, विश्वस्यैकस्य वा को विशेषो येन तन्न भवेत्। भवति च सर्वस्यैव सुष्वापः क्रमेण, न तु युगपदिति चेन्न। कारणक्रमायत्तत्वात् कार्यक्रमस्य। न च स्वहेतुबलायातैः कारणैः क्रमेणैव भवितव्यम्, अनियतत्वादेव, सर्वग्रासवत्। ग्रहाणां ह्यन्यदा समागमानियमेऽपि तथा

---

साधनं। अव्यवहिताहोरात्रपूर्वकत्वे साध्येऽप्रयोजकमित्याह—तत्पूर्वकत्वेत्यादिना। यथाऽनुभोक्तव्यकर्मशेषे सत्येव सुषुप्तौ सर्वकर्मणामुपरमः, एवं जीवादृष्टशेषे सत्येव कदाचित्सर्वकर्मणामुपरोध इत्याह—वृत्तिनिरोधस्यापीत्यादिना। नन्वेकस्य जीवस्य सुषुप्तौ तदीयसर्वकर्मनिरोधेऽपि सर्वेषां जीवानां वृत्तिरोधो न सम्भवतीत्याशङ्क्य, यथाऽनन्तानां विचित्रफलप्रदानामप्येकजीवकर्मणां सुषुप्तौ निरोधः, एवमनन्तानां सर्वजीवकर्मणां प्रलये निरोधस्सम्भाव्यत इत्याह—एकस्यैवेत्यादिना। ननु यथा सुषुप्तिर्जीवानां क्रमेण भवति तथा प्रलयोऽपीत्याशङ्क्य, सुषुप्तिक्रमे कारणक्रमो हेतुः, कारणानां सर्वदा क्रमेणैव सम्भव इति नियमाभावात्कदाचित् कारणयौगपद्यात्सर्वजीवकर्मोपरतिस्सम्भाव्यत इति समाधत्ते—कारणक्रमायत्तत्वादित्यादिना। अत्र दृष्टान्तमाह — सर्वग्रासवदिति। तद्विवृणोति — ग्रहाणामिति। यथा

स्यादेतत्। यद्येवमस्थिरः शब्दः कथमर्थेन संगतिरस्योपलभ्यते इति चेत्; यथैवाऽर्थस्याऽस्थिरस्य तेन। जातिरेव पदार्थो, न व्यक्तिरिति चेन्न। शब्दात्तदलाभप्रसङ्गात्। आक्षेपत इति चेत; कः खल्वयमाक्षेपो नाम?। न तावदनुमानम्, अनन्ताभिः सह सङ्गतिवदविनाभावस्यापि ग्रहीतुमशक्यत्वात्। शक्यत्वे वा सङ्गतेरपि तथैव सुग्रहत्वात्। व्यक्तिमात्ररूपेणाऽविनाभाव इति चेन्न। व्यक्तित्वस्य सामान्यस्याऽभावात्। भावे वा तदाक्षेपेऽपि विशेषानाक्षेपात्। वाच्यत्वमपि वा तथैवास्तु, किमाक्षेपेण?। सङ्गतेरविरोधादिति। अर्थापत्तिराक्षेप इति चेन्न। व्यक्त्या विना किमनुपपन्नं?। जातिरिति चेन्न। तन्नाशानुत्पाददशायामपि सत्त्वात्। तथापि न व्यक्तिमात्रं विनेति चेन्न। मात्रार्थाभावात्। व्यक्तिज्ञानमन्तरेण जातिज्ञानमनुपपन्नमिति चेन्न। तदभावेऽप्युत्पादात्। व्यक्तिविषयत्वं विना जातिविषयता तस्यानुपपन्नेति चेन्न। एवं तर्ह्येकज्ञानगोचरतायां किमनुपपन्नं किं प्रतिपादयेदिति। जातीनामन्वयानुपपत्त्या व्यक्तिरवसीयते इति चेन्न। परस्पराश्रय प्रसङ्गात्।

---

सिद्ध्यतीत्याशङ्क्य यथा ह्यस्थिरेणैवार्थेन शब्दस्य संगतिग्रहः, एवमस्थिरेणैव शब्देनार्थस्यापि सङ्गतिग्रह इति समाधत्ते—**स्यादेतदि**त्यादिना तेनेत्यन्तेन। **सङ्गतेरविरोधादिति**। व्यक्तित्वस्यैक्यादिति भावः। **व्यक्तिमात्रं विनेति**। अत्र-मात्रपदार्थः अशेषत्वमिति वक्तव्यम्। तच्च न संभवति, एकव्यक्तिनाशेऽपि गोत्वादीनां ज्ञानसम्भवादित्याह — **मात्रर्थाभावादिति**। **तदभावेऽपीति**। भवन्मते केवलजातिज्ञानस्याङ्गीकारादिति भावः। **एवं तर्हीति**। एवं जातिव्यक्त्योरेकज्ञानविषयत्वं सिद्धम्। तत्र किमनुपपन्नम्, किं वोपपादकमित्यर्थः। **परस्पराश्रयप्रसङ्गादिति**। अन्वयप्रतीतौ तदनुपपत्त्या व्यक्त्याक्षेपः। व्यक्त्याक्षेपे च सत्यन्वयप्रतीतिरिति परस्पराश्रयप्रसङ्ग इति भावः। ननु यथा लिङ्गं साध्यसामान्येन गृहीतव्याप्तिकमपि पक्षधर्मताबलात्साध्यविशेषे पर्यवस्यति, एवं जात्या गृहीतसङ्गतिरपि शब्दः शक्तिविशेषाद्व्यक्तौ पर्यवस्यतीत्याशङ्क्य,

स्यादेतत्। प्रतिबन्धं विनाऽपि पक्षधर्मताबलात् यथा लिङ्गं विशेषे पर्यवस्यति, तथा सङ्गतिं विनाऽपि शब्दः शक्तिविशेषाद्विशेषे पर्यवस्यति। स एवाऽऽक्षेप इत्युच्यते इति चेत्; न तावत्प्रतीतिः क्रमेण अपेक्षणीयाभावेन विरम्य व्यापारायोगात्। जातिप्रत्यायनमपेक्षते इति चेत्; कृतं तर्हि शब्दशक्तिकल्पनया। तावतैव नसिद्धेः। ओमिति चेन्न। व्यक्त्यनालम्बनायाःजातिप्रतीतेरसम्भवादित्युक्तत्वात्, प्रमाणान्तरापातप्रसङ्गाच्च। स्मरणं तदित्ययमदोष इति चेन्न। अननुभूतानन्वयप्रसङ्गात्। अस्त्वेकैव प्रतीतिरिति चेत्; कृतं तर्हि शक्तिभेदकल्पनया। एवञ्च यथा सामान्यविषया शक्तिरेकैव तद्वति पर्यवस्यति, तथा सामान्याश्रया सङ्गतिस्तद्वति पर्यवस्येदिति। न च नित्या अपि वर्णाः स्वरानुपूर्व्यादिहीनाः पदार्थैः सङ्गम्यन्ते। न च तद्विशिष्टत्वमपि तेषां नित्यम्। तस्मात्तज्जातीयक्रोडनिविष्टा एव पदार्थाः पदानि च

---

शब्दस्य विरम्य व्यापाराभावान्नैवमिति परिहरति–**स्यादेतदित्यादिना**। ननु शब्दः शक्त्या जातिज्ञानं जनयित्वा तदपेक्ष एव व्यक्तिज्ञानं जनयतीत्याशङ्क्य, एवं चेत्तर्हि व्यक्तौ शक्तिकल्पनं व्यर्थम्, जातिज्ञानेनैव व्यक्तिज्ञानसम्भवादित्याह — **कृतं तर्हीति**। व्यक्त्यविषयकस्य जातिज्ञानस्यासम्भवादिष्टापत्तिर्न सम्भवतीत्याह– **ओमितीति**। दूषणान्तरमाह–**प्रमाणान्तरेति**। शब्दव्यापारस्य जातिज्ञान एव पर्यवसानादिति भावः। ननु जातिव्यक्त्युभयशक्तिसाध्या एकैव प्रतीतिर्जातिव्यक्त्युभयविषयेत्याशङ्क्याह— **कृतमिति**। एवमेकां शक्तिं व्यवस्थाप्य यथा पटत्वसामान्यविषया शक्तिर्व्यक्तौ पर्यवस्यति, एवं शब्दत्वसामान्याश्रयैव शक्तिः शब्दस्यानित्यत्वेऽपि तत्र वाचकत्वव्यवहारं करोतीत्याह–**एवञ्चेति**। एवं शब्दमात्रस्यानित्यत्वं प्रसाध्य, प्रकारान्तरेणाऽपि वेदस्यानित्यत्वं सिद्धयतीत्याह–**नच नित्या अपी-**

---

१. अनेन प्रबन्धेन वर्णपदवाक्यानामनित्यत्वं प्रसाध्य, तत्समूहरूपस्य वेदस्याऽनित्यतोच्यते। नित्यत्वमवगमयन्तीनां श्रुतीनां तात्पर्यन्तु मन्वन्तरादिषु सम्प्रदायाभ्यासप्रयोगाविच्छेद इति वात्स्यायनो निरवोचत्।

तद्गतपरममहत्परिमाणवदिति प्रत्यनुमानमिति चेन्न। अकार्यत्वस्यापोधे-र्विद्यमानत्वात् । अन्यथा—आत्मविशेषगुणा नित्याः, तदेकगुणत्वात्, तद्गतपरममहत्त्ववदित्यपि स्यात् । अस्य प्रत्यक्षबाधितत्वादहेतुत्वमिति चेन्न । निरुपाधेर्बाधानवकाशात् । स्वभावप्रतिबद्धस्य च तत्परित्यागे स्वभावपरित्यागप्रसङ्गात् । तस्मात् बाधेन वोपाधिरुन्नीयते, अन्यथा वेति न कश्चिद्विशेषः। एतेन श्रावणत्वात् शब्दत्ववदित्यपि परास्तम्, अत्रापि तस्यैवोपाधित्वात्। अन्यथा, गन्धरूपरसस्पर्शा अपि नित्याः प्रसज्येरन्। घ्राणाद्येकैकेन्द्रियग्राह्यत्वात्, गन्धत्वादिवदित्यपि प्रयोग-सौकर्यात् । विरोधव्यभिचारावसम्भावितावेवाऽत्रेत्यसिद्धिरवशिष्यते । सापि नास्ति। तथाहि—शब्दस्तावत् पूर्वन्यायेन स्वाभाविकतीव्रमन्द-तरतमादिभावेन प्रकर्षनिकर्षवानुपलभ्यते। इयञ्च प्रकर्षनिकर्षवत्ता का-रणभेदानुविधायिनी सर्वत्रोपलब्धा । अकारणका हि नित्याः प्रकर्ष-वन्त एव भवन्ति, यथाऽऽकाशादयः । निकृष्टा एव वा, यथा परमा-ण्वादयः। न तु किञ्चिदतिशयानाः कुतश्चिदपकृष्यन्ते। तदियं नित्ये-भ्यो व्यावर्तमाना कारणवत्सु च भवन्ती जायमानतामादायैव विश्रा-म्यतीति प्रतिबन्धसिद्धौ प्रयुज्यते । शब्दो जायते, प्रकर्षनिकर्षाभ्या-मुपेतत्वात्, माधुर्यादिवत् । अन्यथा नियामकमन्तरेण भवन्ती नि-त्येष्वपि सा स्यात्, नियमहेतोरभावात् । शब्दादन्यत्रेयं गतिरिति चेन्न । साध्यधर्मिणं विहायेति प्रत्यवस्थानस्य सर्वानुमानसुलभत्वात् । न चेद्व्यञ्जकतारतम्याद्व्यञ्जनीयतारतम्यं, अस्वाभाविकत्वप्रसङ्गात्। व्यव-स्थितश्च स्वाभाविकत्वम् । न च व्यञ्जकोत्पादकाभ्यामन्यस्यानुविधा-नमस्ति । न च स्वाभाविकत्वौपाधिकत्वाभ्यामन्यः प्रकारः सम्भवति ।

---

मानस्य बाधसत्प्रतिपक्षौ निराकृत्य, सपक्षसत्त्वविपक्षासत्त्वाभ्यां विरोधव्यभि-चारयोरनाशङ्कनीयतया असिद्धिं निराकर्तुमुपक्रमते — सापि नास्तीत्यादिना । पूर्वोक्तं ध्वनिधर्माणामारोपासंभवं मनसि निधायाह — न चेद्व्यञ्जकेत्यादि । एवं-

स्यादेतत् । तथाप्युत्पत्तेर्नित्यत्वेन को विरोधो, येन प्रतिबन्धसिद्धिः स्यात् । असिद्धे च तस्मिन्, भवतां व्यापकत्वासिद्धोऽस्माकमप्रयोजकः । सौगतानां सन्दिग्धविपक्षवृत्तिरयमुपक्रान्तो हेतुरिति चेन्न । इदं ह्युत्पत्तिमत्त्वं विनाशकारणसन्निधिविरुद्धेभ्यो नित्येभ्यः स्वव्यापकनिवृत्तौ निवर्तमानं विनाशकसन्निधिमति विनाशिनि विश्राम्यतीति । विनाशकारणेनाऽवश्यं जायमानस्य भवितव्यमिति कुतो निर्णीतमिति चेन्न । तदसन्निधानं हि न तावदाकाशादेरिव, स्वभावविरोधात् । उत्पत्तिविनाशयोः संसर्गदर्शनात् । अविरुद्धयोरसन्निधिस्तु देशविप्रकर्षात् हिमवद्विन्ध्ययोरिव स्यात् । देशयोरपि विप्रकर्षो 'विरोधाद्वा हेत्वभावाद्वा । पूर्वोक्तादेव न प्रथमः । द्वितीयस्तु पटकुङ्कुमयोरिव स्यात् । यदि कुङ्कुमसमागमादर्वागिव प्रध्वंसकसंसर्गादर्वागेव पटो विनश्येत् । यथा हि विनाशकारणं विना न विनाशः, तथा यदि कुङ्कुमसमागमं विना न विनाशः पटस्येति स्यात् । कस्तयोः संसर्गं वारयेत् । तस्मादविरुद्धयोरसंसर्गः कालविप्रकर्षनियमेन व्याप्तः । स चाऽतो निवर्तमानः स्वव्याप्यमुपादाय निवर्तते इति प्रतिबन्धसिद्धिः ।

---

स्वरूपासिद्धिं निराकृत्य व्याप्यत्वासिद्धिं निराकर्तुमाशङ्कते—**स्यादेतदि**त्यादिना । विपक्षबाधकं तर्कमाह—**इदं हीति** । उत्पत्तिमत्त्वस्य विनाशकारणसान्निधानेन व्याप्तिं साधयति— **तदसन्निधानं हीत्या**दिना । अयं भावः – उत्पत्तिमत्त्वस्य, विनाशकारणसमवधानस्य च घटादिषु सहावस्थानदर्शनान्न स्वभावतो विरोधः । अत एव हिमवद्विन्ध्ययोरिव देशविप्रकर्षोऽपि नास्ति । हेत्वभावादसंसर्गस्तु तदा स्यात् यथा कुङ्कुमसंसर्गात्प्रागेव पटनाशात्कुङ्कुमपटयोरसंसर्गस्तथा विनाशकारणसमवधानात्प्रागेव यदि पटो विनश्येत् । न चैतदस्ति । एवं विनाशकारणं विना न विनाश इतिवत्कुङ्कुमसमागमं विना न विनाशः पटस्येत्यपि नास्ति । तस्माद्धेत्वभावादित्यपि वक्तुं न शक्यते । किन्तु कालविप्रकर्षादविरुद्धयोरप्यसंसर्ग इति वक्तव्यम् । सोऽप्यत्र नास्तीति विनाशकारणसमवधानेनोत्पत्तिमत्त्वस्य व्याप्तिर्निष्प्रत्यूहैवेति । ननु शब्दानित्यत्वे अर्थावधारणानुपपत्तिरित्यन्यथानुपपत्त्या शब्दस्य नित्यत्वं

कदाचित्स्यात् । यथा कालाद्यनियमेऽपि सर्वमण्डलोपरागः स्यात्, त्रिदोषसन्निपातवद्वा । यथा हि वातपित्तश्लेष्मणां चयप्रकोपप्रशमक्रमाऽनियमेऽपि एकदा सन्निपातः स्यात्तदा देहसंहारः, तथा कालानलपवनमहार्णवानां सन्निपाते ब्रह्माण्डदेहप्रलयावस्थायां युगपदेव भोगरहिताश्चेतनाः स्युरिति को विरोधः ? । तथापि विदेहाः कर्मिण इति दुर्घटमिति चेत् ; किमत्र दुर्घटम् ? । भोगनिरोधवच्छरीरेन्द्रियविषयनिमित्तनिरोधादेव तदुपपत्तेः । वृश्चिकतण्डुलीयकादिवद्वर्णादिव्यवस्थाऽप्युपपद्यते । यथा हि वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमयादाद्यः, तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य तण्डुलकणादाद्यः, वह्निपूर्वकत्वेऽपि वह्नेररणेराद्यः, एवं क्षीरदधिघृततैलकदलीकाण्डादयः, तथा मानुषपशुगोब्राह्मणपूर्वकत्वेऽपि तेषां प्राथमिकास्तत्तत्कर्मोपनिबद्धभूतभेदहेतुका एव । स एव हेतुः सर्वत्रानुगत इति सर्वेषां तत्सान्तानिकानां समान-

ग्रहाणां समावेशस्य क्रमिकत्वेऽपि कदाचित्सर्वग्रहसमागमः, यथा वातपित्तश्लेष्मणां प्रकोपस्य क्रमिकत्वेपि कदाचित्त्रयाणामेकदैव प्रकोप, एवमेव जीवकर्मणां क्रमिकनिरोधभाजामपि कदाचित्सर्वेषां निरोध इति भावः । ननु देहारम्भनिमित्तानि कर्माणि सन्ति, देहो नास्तीत्यनुपपन्नमित्याशङ्क्य भोगनिमित्तानां कर्मणां सुषुप्तौ निरोधवदुपपत्तिरित्याह — **भोगनिरोधवदिति** । तृतीयपादं व्याकरोति – **वृश्चिकेति** । तण्डुलीयकं - सूक्ष्मतण्डुलहेतुरुद्भिद्विशेषः । आन्ध्रभाषायां जोडा इति प्रसिद्धिः । तण्डुलकणः – विलक्षणदोषदुष्टः शालिबीजविशेषः । नन्वदृष्टवदात्मसंयुक्तपरमाणुरूपस्य भूतविशेषस्य वैजात्यात्कार्यसाजात्यं न स्यादित्याशङ्क्य, अद्यतनानामपि भूतविशेषनिबन्धनैव जातिव्यवस्थेति समाधत्ते – **स एवेत्यादिना** । एतेन जातेः सत्त्वरजस्तमोगुणसम्बन्धादेव सिद्धिः । तथाच शूद्रेष्वपि ये सात्त्विकास्ते ब्राह्मणा इत्याधुनिकवादो निरस्तो वेदितव्यः । देहारम्भकभूतविशेषहेतुकाया जातेः सहजासिद्धत्वात् । खण्डान्तरेष्वपि तादृशी जातिरस्त्येव । किन्तु तत्र कर्मणां, संस्काराणां, व्यवहारस्य चाऽभावात्–तस्या दुर्ग्रहत्वमित्यन्यत्र विस्तरः । ननु जातेर्भूतविशेषनियम्यत्वे उत्पादकजातिमत्त्वमुत्पाद्यस्येति

जातीयत्वमिति । किमसङ्गतम् ? । गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिना। न गतं, योनिजेष्वेव व्यवस्थापनात्। मानसास्त्वन्यथाऽपीति। गोमयवृश्चिकादिवदिदानीमपि किं न स्यादिति चेन्न । कालविशेषनियतत्वात् कार्यविशेषाणाम्। न हि वर्षासु गोमयाच्छालूक इति हेमन्ते किं न स्यात् । समयोऽप्येकेनैव मायाविनेव व्युत्पाद्यव्युत्पादकभावावस्थितनानाकायाधिष्ठानात् व्यवहारत एव सुकरः । यथा हि मायावी सूत्रसञ्चाराधिष्ठितं दारुपुत्रकमिदमानयेति प्रयुङ्क्ते । स च दारुपुत्रकस्तथा करोति तदा चेतनव्यवहारादिवत्तद्दर्शी बालो व्युत्पद्यते, तथेहापि स्यात् । क्रियाव्युत्पत्तिरपि तत एव कुलालकुविन्दादीनाम् । सर्गादावेव किं प्रमाणमिति चेत्; विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवायिभिरारब्धः, सन्तानत्वात् , आरणेयसन्तानवत् । वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः, नित्यत्वे सति तदारम्भकत्वात् , प्रदीपपरमाणुवदित्यादि। अवयवानामावापोद्वापादुत्पत्तिविनाशौ च स्यातां , सन्तानाऽविच्छेदश्चेति को विरोध इति चेन्न । एवं हि घटादिसन्तानाऽविच्छेदोऽपि स्यात् । विपर्ययस्तु दृश्यते ।

---

नियमो न स्यादित्याशङ्क्य, नियमोऽयं योनिजेषु व्यवस्थाप्यत इत्याह – योनिजेष्वेवेति। तथाच सर्गादौ जातानामयोनिजत्वान्नारय नियमस्य तत्र व्यभिचार इति भावः । तुरीयपादं व्याचष्टे – समयोऽपीत्यादिना । ननु निष्प्रमाणत्वात्सर्गप्रलययोरसिद्धिरित्याशङ्क्य, तत्र सर्गे प्रमाणमाह – विश्वसन्तानोऽयमिति । सन्तानो नामाऽवयवावयविप्रवाहः । आरणेयवदिति । अरण्यन्तर्गतदृश्यसन्तानशून्याऽग्निपरमाणुभिरिवेत्यर्थः । प्रलये प्रमाणमाह – वर्तमानेति । अत्र पूर्वानुमाने प्रलयसिद्धिरुत्तरानुमाने सर्गसिद्धिश्चार्थाद्भवति । ननु पटावयवानां तन्तूनां सन्तानाविभेदेऽपि यथा तेषां संयोगविश्लेषाभ्यां पटोत्पत्तिनाशरूपं कार्यं, एवमेव सन्तानानुच्छेदेपि अवयवानां संयोगविभागाभ्यामेव कार्यजातस्योत्पादविनाशौ स्याताम्। सन्तानाविभेदेन न प्रलयसिद्धिरित्याशङ्क्य, अवयवसन्तानाविभेदे अवयवाऽऽवापोद्वापरूपविनाशोऽपि न स्यादिति परिहरति – एवं हीति । ननु पटादिकार्य-

**कर्त्रादिभोगविशेषसम्पादनप्रयुक्तोऽसाविति चेन्न। द्व्यणुकेषु तदभावात्। तथाच तदवयवानामपगमाभावेऽनादित्वप्रसङ्गे द्व्यणुकत्वव्याघातः। तस्मात् यत्कार्यं यन्निबन्धनस्थिति तदपगमे तन्निवृत्तिः। यत् यद्धेतुकं तदुपगमे तस्योत्पत्तिः। न च कार्यस्य स्थितिनिबन्धनं नित्यमेव; नित्यस्थितिप्रसङ्गात्। न च नित्य एव हेतुः; अकादाचित्कत्वप्रसङ्गात्। तदतिनिस्तरङ्गमेतत्। ईदृश्याञ्च वस्तुस्थितौ भोगोऽपि कर्मभिरेवमेव वस्तुस्वभावानतिक्रमेण सम्पादनीय इति द्व्यणुकवत् पिपीलिकाण्डादेः ब्रह्माण्डपर्यन्तस्यापि विश्वस्येयमेव गतिरिति प्रतिबन्धसिद्धिः। तथाच ब्रह्माण्डे परमाणुसाद्भवितारि परमाणुषु च स्वतन्त्रेषु पृथगासीनेषु तदन्तःपातिनः प्राणिगणाः क्व वर्तन्ताम्?। कुपितकपिकपोलान्तर्गतोदुम्बरमशकसमूहवत्, दवदहनदह्यमानदारूदरविघूर्णमानघुणसङ्घातवत्।**

विनाशः न सन्तानविभेदप्रयुक्तः। किन्तु पटादिकर्तुः कुविन्दादेर्यो भोगः पटाद्युत्पादनद्वारकस्तस्य पटविनाशमन्तराऽनुपपत्त्या तादृशभोगप्रयुक्त इत्याशङ्क्य, तथा सति कस्यापि भोगाप्रयोजकतया **द्व्यणुकस्य** विनाशो न स्यादिति परिहरति — **द्व्यणुकेष्विति**। भोगविशेषस्य कार्यविनाशेऽप्रयोजकत्वात्समवायिकारणसंश्लेषविश्लेषावेव कार्योत्पादनाशप्रयोजकावित्याह — **तस्मादिति**। नन्वेवमपि कार्योत्पत्तिहेतुः स्थितिहेतुश्च सार्वदिकः किन्न स्यादित्याशङ्क्य, कादाचित्कत्वव्याघात इति समाधत्ते — **अकादाचित्कत्वप्रसङ्गादिति**। उपसंहरति — **तदिति**। एतत्—यत्कार्यं यन्निबन्धनस्थितीत्यादिकं, अतिनिस्तरङ्गं अनुल्लङ्घ्यमित्यर्थः। ननु भोगविशेषस्य कार्योत्पादविनाशयोरप्रयोजकत्वे भोगार्थमेव कर्माणि कार्यमुत्पादयन्ति हीति सिद्धान्तभङ्ग इत्याशङ्क्य, कर्माणि वस्तुस्थितिमनतिक्रामन्त्येव कार्यविशेषोत्पादनद्वारा भोगार्थानीति समाधत्ते — **द्व्यणुकवदिति**। यथा द्व्यणुकस्य विनाशो न भोगप्रयुक्तः, एवमेव विश्वस्येति भावः। **प्रतिबन्धसिद्धिरिति**। पूर्वोक्तदिशा सर्गप्रलयसाधकानुमानयोः व्याप्तिसिद्धिरित्यर्थः। ब्रह्माण्डविनाशे तदन्तर्गतस्थावरजङ्गमादीनां विनाशोऽवश्यं भवतीति सदृष्टान्तमाह — **तथाच ब्रह्माण्डेत्यादिना**। न केवलमनुमानमेव प्रलयसद्भावे प्रमाणं, किन्तु प्रत्यक्षमपीत्याह—

मलयपवनोल्लासनीयौर्वानलनिपातिपोतसांयात्रिकसार्थवद्वेति । अपि च–

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥

पूर्वं हि मानस्य[1]ः प्रजाः समभवन्, ततोऽपत्यैकप्रयोजनमैथुनसम्भवाः, ततः कामावर्जनीयसन्निधिजन्मानः, इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः । पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत, ततः क्षेत्रप्रभृतिषु, ततो गर्भादितः, इदानीं तु जातेषु लौकिकव्यवहारमाश्रित्य । पूर्वं सहस्रशाखो वेदोऽध्यगायि, ततो व्यस्तः, ततः षडङ्ग एकः, इदानीं तु क्वचिदेका शाखेति । पूर्वं ऋत[2]वृत्तयो ब्राह्मणाः प्राद्योतिषत, ततोऽमृतवृत्तयः, सम्प्रति प्रमृतसत्यानृतकुसीदपाशुपाल्यप्रवृत्तयो भूयांसः । पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियातिथयोऽपि संवृत्ताः, ततो वैश्यावेशिनोऽपि । सम्प्रति शूद्रान्नभोजिनोऽपि । पूर्वममृत[3]भुजः, ततो विघस[4]भुजः, ततोऽन्नभु[5]जः, सम्प्रत्यघभु[6]ज एव। पूर्वं चतुष्पा[7]द्धर्म आसीत्, ततस्तनूयमाने तपसि त्रिपात्, ततो म्लायति ज्ञाने द्विपात्, सम्प्रति जीर्यति यज्ञे दानैकपात् । सोऽपि पादो दुरागता-

---

अपि चेति । अथवा - सर्वनाशे वेदनाशोऽप्यर्थात्सिध्यतीति संसूच्य ह्रासदर्शनेनापि वेदनाशोऽनुमीयत इत्याह – अपि चेति । जन्मादिह्रासनाशोक्तिर्वेदनाशे दृष्टान्तप्रदर्शनार्था । नन्विदानीं यावान्वेदो वर्तते तावानेव वेदः सदा अध्ययनविषय इत्याशङ्कते – इदानीमित्यादिना । धर्मावेदकत्वाच्छिष्टाचारस्यैवाऽनुमित-

---

१. वशीकृतयोषान्वृषातत्त्वैर्मानस्यः प्रजाः स्रष्टुं शक्यन्ते इति हि शतपथे विज्ञायते । रयिः प्राण इति सोम अग्निरित्यनयोराभिधानम् ।

२. श्लो० –‘ ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतन्तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं कुसीदञ्च कुलान्तरम् ’ इति । ३. यज्ञशेषभुजः । ४. अतिथिशेषभुजः । ५. भृत्यशेषभुजः । ६. स्वार्थसाधितभुजः । यः अनादृत्य देवतापित्रतिथिचाण्डालादीन् अन्नं भुङ्क्ते स केवलमघमेव भुङ्क्ते इति किल श्रुतिराह – ‘ केवलाघो भवति केवलादी ’ ति ऋ० स० । ७. तपोज्ञानयज्ञदानानि चत्वारः पादाः ।

दिविपादिकाश्चतदुःस्थोऽश्रद्धामलकलङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यते । इदानीमिव सर्वत्र दृष्टाबाधिकमिष्यते इति चेन्न । स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनात् । स्वातन्त्र्येण स्मृतीनामाचारस्य च प्रामाण्याऽनभ्युपगमात्। मन्वादीनामतीन्द्रियार्थदर्शने प्रमाणाभावात्। आचारात्स्मृतिः स्मृतेश्चाचार इत्यनादिताभ्युपगमे अन्धपरंपराप्रसङ्गात्। आसंसारमनाम्नातस्य च वेद[1]त्वव्याघातेनाऽनुमानायोगात् । उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतो वाऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात् । यदि च शिष्टाचारत्वादिदं हितसाधनं कर्तव्यं वेत्यनुमितं किं वेदानुमानेन? । तदर्थस्यानुमानत एव सिद्धेः । न च धर्मवेदनत्वादिदमेवानुमानं – अनुमेयो वेदः, प्रत्यक्षसिद्धत्वात् अशब्दत्वाच्च ।

अथ शिष्टाचारत्वात्प्रमाणमूलोऽयमिति चेत्; ततः सिद्धसाधनम्, प्रत्यक्षमूलत्वाभ्युपगमात् । तदसम्भवेऽप्यनुमानसम्भवात् । नित्यमज्ञायमानत्वात्तदप्रत्यायकं कथमनुमानम्? कथं च मूलमिति चेत्; वेदः किमज्ञायमानः प्रत्यायकोऽप्रत्यायक एव वा मूलं, येन जडतम! तमा-

वेदत्वमित्याशङ्क्य, निराकरोति – प्रत्यक्षत्वादिति । आचारस्येति शेषः । ननु शिष्टाचारस्य प्रमाणसामान्यमूलकत्वमेवानुमीयते । तच्च पक्षधर्मताबलाद्वेदमूलकत्वे पर्यवस्यतीत्याशङ्क्य, प्रत्यक्षमूलत्वेन सिद्धसाधनमिति परिहरति – सिद्धसाधनमिति । ननु शिष्टाचारविषयस्येष्टसाधनत्वे न प्रत्यक्षं मूलमित्याशङ्क्यानुमानमूलत्वमाह – तदसम्भव इति । तथाच शिष्टाचारविषयत्वानुमानस्य मूलत्वान्नेष्टासिद्धिरिति भावः । ननु यथाऽऽधुनिकाः शिष्टानाचरतो दृष्ट्वा किमप्येषामाचाराणां मूलं भवतीति सामान्यतो ऽनुमिमते । तथा मन्वादयोऽपि तदानीन्तनशिष्टानामाचारान् दृष्ट्वा किमप्येषां मूलं स्यादित्यनुमिन्वते । तथाच विशेषतो लिङ्गस्याऽज्ञानात्कथमनुमानं मूलमित्याशङ्कते – नित्यमित्यादिना । नित्यानुमेये वेदेऽप्येतत्तुल्यमिति परिहरति - वेदः किमित्यादिना । ननु शिष्टाचारात्तत्प्रतिपाद-

१. वेदशब्देन हि ' अग्निमीळे ' इत्यादिनियतानुपूर्वीकपदघटितमन्त्रसङ्घात उच्यते ।

द्रियसे । अनुमितत्वाज्ज्ञायमान एवेति चेत्; लिङ्गमप्येवमेवास्तु । अनुमेयप्रतीतेः प्राक्तनी लिङ्गप्रतीतिरपेक्षिता कारणत्वात्, न तु पश्चात्तनीति चेत्; शब्दप्रतीतिरप्येवमेव । आचारस्वरूपेण शब्दमूलत्वमनुमीयते, तेन तु शब्देन कर्तव्यता प्रतीयते इति चेन्न । आचारस्वरूपस्य-प्रत्यक्षसिद्धत्वेन मूलान्तरानपेक्षणात् । तस्मात्कर्तव्यतायां प्रत्यक्षाभावादप्रमिततया च शब्दानुमानानवकाशात् प्रत्यक्षश्रुतेरसम्भवाच्छिष्टाचारत्वेनैव कर्तव्यतामनुमाय तया मूलशब्दानुमानम् । तथाच किं तेन? । तदर्थस्य प्रागेव सिद्धेः । तथाप्यागममूलत्वेनैव तस्य व्याप्तेरिति चेत्; अत एव तर्हि तस्य प्रत्याक्षानुमानमूलत्वमनुमेयम् । आदिमतः तत्त्वं स्यात्, अयं त्वनादिरिति चेत्; आचारोऽपि तर्हि प्रथमतः तथा स्यात् । अयं त्वनादिर्विनाप्यागमम् भविष्यति । आचारकर्तव्यताऽनु-

---

कवेदविशेष एवानुमीयत इत्याशङ्क्य, लिङ्गमपि तादृशमेवानुमीयतामित्याह — **लिङ्गमप्येवमेवेति**। नन्वत्राऽऽचारस्य हितसाधनत्वे यल्लिङ्गं तदनुमेयम् । तत् यद्याचारादेवानुमीयते तदाऽनुमेयादनुमापकानुमानमित्यापत्तिरित्याशङ्क्य वेदानुमानेऽप्येतत्तुल्यमित्याह — **शब्दप्रतीतिरपीति** । अयं भावः — यथाऽस्माभिः शिष्टाचारात्कार्यविशेषाणां कर्तव्यतां ज्ञात्वा तज्ज्ञानमूलमनुमीयते तथा मन्वादिभिरपि प्रमेयभूतकर्तव्यताज्ञानोत्तरमेव तन्मूलभूतवेदानुमानात्प्रमेयसिद्ध्युत्तरमेव प्रमाणसिद्धिरिति तुल्यमिति । एतदेवावेदयति — **तस्मादित्यादिना** । ननु शिष्टाचारविषयकर्तव्यताया अनुमानेन सिद्धावपि ज्योतिष्टोमादिकर्तव्यतायां क्लृप्तागममूलत्वव्याप्तिबलाद्वेदमूलत्वमङ्गीक्रियत इत्याशङ्क्य, तर्हि व्याप्तिबलादेवानुमीयमानस्यापि वेदस्य प्रत्यक्षादिमूलत्वमङ्गीक्रियताम् । वेदत्वस्य प्रत्यक्षानुमानान्यतरव्याप्तत्वादित्याह — **अत एव तर्हीत्यादिना** । एतत्प्रकृतानुपयोग्यपि परेषामनिष्टमित्येतावता प्रसञ्जितम् । नन्वाचारमूलवेदस्यानादित्वात्प्रत्यक्षानुमानमूलत्वं न सम्भवतीत्याशङ्क्य, तर्हि अष्टकाद्याचारस्याप्यनादित्वान्नागममूलत्वं सिद्ध्यतीत्याह — **आचारोऽपीत्यादिना** । नन्वस्त्वाचारस्याप्यनादित्वं, किं नश्छिन्नमित्याशङ्क्य वेदमूलस्त्वाचार इति "चोदनालक्षणोधर्म" इति सिद्धान्तभङ्ग इत्याह —

मानयोरेवमनादित्वमस्तु, किं नश्छिन्नमिति चेत् ;प्रथमं तावन्नित्यानुमेयो वेद इति । द्वितीयश्च देशेनैव धर्मे प्रमाणमिति ।

अथायमाशयः–वैदिका अप्याचाराः राजसूयाश्वमेधादयः समुच्छिद्यमाना दृश्यन्ते । यत इदानीं नानुष्ठीयन्ते । न चैते प्रागपि नानुष्ठिता एव । तदर्थस्य वेदराशेरप्रामाण्यप्रसङ्गात् , समुद्रतरणोपदेशवत् । न चैवमेवास्तु; दर्शाद्युपदेशेन तुल्ययोगक्षेमत्वात् । एवं पुनः स कश्चित्कालो भविता यत्रैते अनुष्ठास्यन्ते । तथाऽन्येप्याचाराः समुच्छेत्स्यन्ते, अनुष्ठास्यन्ते चेति न विच्छेदः। ततस्तद्वदागममूलतेति चेत्; एवं तर्हि प्रवाहादौ लिङ्गाऽभावे कर्तव्यत्वागमयोरननुमानादसत्यां प्रत्यक्षश्रुतौ, आचारसङ्कथापि कथमिति सर्वविप्लवः । तस्मात्प्रत्यक्षश्रुतिरेव मूलमाचारस्य । सा चेदानीं नास्तीति शाखोच्छेदः । अधुनाऽप्यस्ति साऽन्यत्रेति चेत् ; अत्र कथं नास्ति ? । किमुपाध्यायवंशानामन्यत्र गमनात् ? । तेषामेवोच्छेदाद्वा ? । आहोस्वित् स्वाध्यायविच्छेदात्?। न प्रथमद्वितीयौ, सर्वेषामन्यत्र गमने उच्छेदे वा नियमेन भारतवर्षे शिष्टाचारस्याप्युच्छेदप्रसंगात् । तस्याध्येतृसमानकर्तृकत्वात् । अन्यत आगतैराचारप्रवर्तने अध्ययनप्रवर्तनमपि स्यात् । न तृतीयः,आध्यात्मिकशक्तिसंपन्नानामन्तेवासिनामविच्छेदे तस्यासम्भवात् । तस्मादायुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात स्वाध्यायानुष्ठाने शीर्यमाणे

---

प्रथममित्यादिना । अनुमानस्यैव धर्ममूलत्वादिति भावः । नित्यानुमेयवेदवादिनामेवाऽऽशयमाशङ्कते–अथायमिति । यथा प्रत्यक्षवेदमूलानामश्वमेधादीनां प्रवाहविच्छेदः एवमेवाष्टकाद्याचाराणामपि कदाचिद्विच्छेदो भवेत् । तस्मादष्टकाद्याचारस्याऽऽचारमूलत्वं न सम्भवति । किन्तु तद्वदेव वेदमूलत्वमेवेति यदि भवतामाशयः तर्हि अष्टकाद्याचाराणामुच्छेदे पुनरपि तेषां प्रवृत्तिः किं निबन्धना? । न तावत्कर्तव्यत्वानुमानमनुमितवेदो वाऽस्ति, तल्लिङ्गस्याऽऽचारस्याभावात् । नाप्यश्वमेधादिवत्प्रत्यक्षश्रुतिरस्ति । तथाच तदाचारस्य विप्लवापत्तिः । तस्मात्प्रत्यक्षश्रुतिरेवाऽऽचारमूलमित्युपसंहरति – तस्मात्प्रत्यक्षश्रुतिरिति । नन्वष्टकाद्याचाराणां प्रामाण्यमेव

कथञ्चिदनुवर्तते। विश्वपरिग्रहाच्च न सहसा सर्वोच्छेद इति युक्तमुत्पश्यामः।[1] गतानुगतिको लोक इत्यप्रामाणिक एव आचारो, न तु शाखोच्छेदः। अनेकशाखागतेतिकर्तव्यतापूरणीयत्वात्। एकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्गादिति चेत्; एवं हि महाजनपरिग्रहस्योपप्लवसम्भवे वेदा अपि गतानुगतिकतयैव लोकैः परिगृह्यन्ते इति न वेदाः प्रमाणं स्युः। तथा च वृश्चिकभिया पलायमानस्य आशीविषमुखे निपातः। एनमेव च कालक्रमभाविनमनाश्वासमाशङ्कमानैर्महर्षिभिः श्रुतिविहितमतो नोक्तदोषोऽपि। न चायमुच्छेदो ज्ञानक्रमेण येन श्लाघ्यः स्यात्। अपि तु प्रमादमदमानालस्यनास्तिक्यपरिपाकक्रमेण। ततश्चोच्छेदानन्तरं पुनः प्रवाहः। तदनन्तरश्च पुनरुच्छेद इति सारस्वतमिव स्रोतः। अन्यथा कृतहानप्रसङ्गात्। तथाच भाविप्रवाहवद्भवप्रवाहमप्ययमुच्छेदपूर्वक इत्यनुमीयते। स्मरति च भगवान् व्यासो गीतासु भगवद्वचनम्।

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥

---

नास्तीत्यङ्गीक्रियते। न तन्मूलशाखोच्छेद इत्याशङ्क्य, महाजनपरिगृहीतत्वेऽप्याचारस्याप्रामाणिकत्वे तर्हि वेदस्याप्यप्रामाणिकत्वं स्यात्। न हि महाजनपरिग्रहादन्यत्तस्य प्रामाण्यसाधकम्। तथाच शाखोच्छेदभयादाचारस्याप्रामाण्यं वदता कृत्स्नवेदस्याप्रामाण्यमङ्गीकर्तव्यं स्यादित्याह — **गतानुगतिक** इत्यादिना। **एकस्मिन्नपि कर्मणीति**। शाखोच्छेदकल्पने कयाचिदुच्छिन्नया शाखया विहितमङ्गान्तरं किमपि स्यादिति शङ्कया न कस्मिंश्चिदपि कर्मणि विश्वास इति भावः। इतश्च शाखोच्छेदोऽवगम्यत इत्याह — **एनमेवेति**। आत्यन्तिकोच्छेदरूपादपवर्गादस्य विश्वोच्छेदस्य भेदमाह — **न चायमिति**। प्रवाहविच्छेदयोर्नैरन्तर्येण प्रवृत्तावागममपि दर्शयति — **यदेति**। वेदप्रामाण्ये महाजनपरिग्रहो हेतुरुक्तः। तत्स्वरूपमाह —

---

१. तत्तच्छाखायां कर्तव्यतया निर्दिष्टानां पदार्थानां कल्पसूत्रस्मृत्यादौ सङ्कलनमकारि।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

कः पुनरयं महाजनपरिग्रहः? । हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुष्ठानादिः। स ह्यत्र न स्यात् ऋते निमित्तम्। न ह्यलोभाद्यादेर्निमित्तं, दुःखमयकर्मप्रधानत्वात्। नाप्यन्यत्र सिद्धप्रामाण्येऽभ्युपायेऽनधिकारेणास्मिन्ननन्यगतिकतयाऽनुप्रवेशः,परैः पूज्यानामप्यत्राप्रवेशात्। नापि भक्ष्यपेयाद्यद्वैतरागः, तद्विभागव्यवस्थापरत्वात् । नापि कुतर्काभ्यासाहितव्यामोहः, आकुमारं प्रवृत्तेः । नापि सम्भवद्विप्रलम्भपाषण्डसंसर्गः, पित्रादिक्रमेण प्रवर्तनात् । नापि योगाभ्यासाभिमानेनाव्यग्रताभिसन्धिः, प्राथमिकस्य कर्मकाण्डे सुतरां व्यग्रत्वात् । नापि जीविका, प्रागुक्तेन न्यायेन दृष्टफलाऽभावात् । नापि कुहकवञ्चना प्रकृते तदसम्भवात् । सम्भवन्ति चैते हेतवो बौद्धाद्यागमपरिग्रहे । तथाहि – भूयस्तत्र कर्मलाघवमित्यलसाः । इतः पतितानामप्यनुप्रवेश इत्यनन्यगतिकाः । भक्ष्याद्यनियम इति रागिणः। स्वेच्छया परिग्रह इति कुतर्काभ्यासिनः । पित्रादिक्रमाभावात्प्रवृत्तिरिति पाषण्डसंसर्गिणः । ' उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते[२] ' इत्यादिश्रवणादव्यग्रताभिमानिनः, सप्तघटिकाभोजनादिसिद्धेर्जीविकेत्ययोग्याः, आदित्यस्तम्भनं पाषाणपाटनं शाखाभङ्गो भूतावेशः प्रतिमाजल्पनं धातुवाद इत्यादिदन्धनात्कुहकवाञ्छिताः।ततस्तान् परिगृह्णन्तीति सम्भाव्यते। अतो न ते महाजनपरिगृहीता इति विभागः।

---

हेतुदर्शनशून्यैरिति । दृष्टहेतुनिरपेक्षैरित्यर्थः । स चायं महाजनपरिग्रहो निर्निमित्तो न भवतीत्याह – **स ह्यत्रेति** । दृष्टस्य निमित्तत्वाऽसम्भवं दर्शयति — **न ह्यत्रेत्यादिना** । शङ्कितानां दृष्टहेतूनां बौद्धागमे सम्भवं दर्शयति — **सम्भवन्तीति** । **सप्तघटिकेति** । बौद्धसन्यासिनां सप्तघटिकानन्तरं भोजनाभ्यनुज्ञाना-

---

१. प्रशस्तग्रन्थबोधितमार्गानुयायित्वम् । ग्रन्थे प्राशस्त्यं नाम सत्यमूलकत्वम् । सम्भवति चेदं वेदे वेदमूलके च,न त्वन्यत्र । यथा हि भक्ष्यपेयादिविभागः समूलकः, अविभागश्चानृतमूलक इति । २. "अत्यन्तमलिनः कायो देही चात्यन्तनिर्मलः" इति पूर्वार्धम् ।

स्यादेतत्। यद्येवं सर्वकर्मणां वृत्तिनिरोधे न किञ्चिदुत्पद्यते, न किञ्चिद्विनश्यतीति स्तिमिताकाशकल्पे जगति कुतो विशेषात् पुनः सर्गः? । प्रकृतिपरिणते[1]रिति सांख्यानां शोभते। ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते । वासनापरिपाकादिति सौगतमतमनुधावति। कालविशेषादिति चोपाधिविशेषाभावादयुक्तम्। असताञ्चोपलक्षणानां न विशेषकत्वं, सर्वदा तुल्यरूपत्वात्। न च ज्ञानद्वारा, अनित्यस्य तस्य तदानीमभावात् । नित्यस्य च विषयतः स्वरूपतश्च अविशेषादिति चेन्न । शरीरसंक्षोभश्रमजनितनिद्राणां प्राणिनामायुःपरिपाकक्रम-सम्पादनैकप्रयोजनश्वाससन्तानाऽनुवृत्तिवन्महाभूतसंप्लवसंक्षोभलब्धसं-स्काराणां परमाणूनां मन्दतरतमादिभावेन कालावच्छेदैकप्रयोजनस्य प्रचयाख्यसंयोगपर्यन्तस्य कर्मसंतानस्येश्वरनिश्वसितस्याऽनुवृत्तेः। कि-यानसावित्यत्राऽविरोधादागमप्रसिद्धिमनतिक्रम्य तावन्तमेव कालमित्य-नुमन्यते। ब्रह्माण्डान्तरव्यवहारो वा कालोपाधिः। तदवच्छिन्ने काले पुनः सर्गः। यथा खल्वलाबुलतायां विततानि फलानि, तथा परमे-श्वरशक्तावनुस्यूतानि सहस्रशोऽण्डानीति श्रूयते। एवं विच्छेदसम्भवे कस्य केन परिग्रहो, यतः प्रामाण्यं स्यात्। ज्ञापकश्चायमर्थो, न का-रकः। ततः कारकाभावान्निवर्तमानं कार्यं ज्ञापकाभिमतः कथङ्कारमा-स्थापयेत्।

स्यादेतत्। सन्तु कपिलादय एव साक्षात्कृतधर्माणः कर्मयोग-

दिति भावः। एवं वेदप्रामाण्यहेतोर्महाजनपरिग्रहस्य स्वरूपं प्रसङ्गादभिधायाऽधुना सर्गप्रलययोरेव प्रस्तुतयोराशङ्कते—**स्यादेतदि**त्यादिना। महाजनपरिग्रहाद्वेदप्रामाण्यं न सिद्ध्यतीत्याह – **एवं विच्छेदे**त्यादिना। अयमर्थः = महाजनपरिग्रहरूपोऽर्थः। तृतीयपादव्याख्यानार्थं द्वितीयान्यथासिद्धिनिराकरणार्थञ्चाऽऽशङ्कते-**स्यादेतदिति**।

१. न हि जडायाः प्रकृतेः चेतनानाधिष्ठितायाः परिणामः सम्भवति। अस्तु परिणामः, तथापि शान्ता प्रयोजनाकाङ्क्षा । अत इदं वचस्तेषामेव शोभेत न तत्त्वविदाम् ।

२. जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीतिवार्ष्यायण्युपज्ञातषड्वि-काररहितस्य क्लेशकर्मविपाकाशयैरपरामृष्टस्य च ब्रह्मणः परिणतेरसम्भवात् ।

सिद्धास्त एव संसाराङ्गारेषु पच्यमानान् प्राणिनः पश्यन्तः परमकारुणिकाः प्रियहितोपदेशेनाऽनुग्रहीष्यन्ति, कृतं परमेश्वरेणाऽनपेक्षितर्कटादिसंख्यापरिज्ञानवतेति चेन्न। तदन्यस्मिन्ननाश्वासात्। तथा ह्यतीन्द्रियार्थदर्शनोपायो भावनेत्यभ्युपगमेऽपि नाऽसौ सत्यमेव साक्षात्कारमुत्पादयति, यतः समाश्वसिमः। प्रमाणन्तरसंवादादिति चेन्न। अहिंसादि हितसाधनमित्यत्र तदभावात्। आगमोऽस्तीति चेन्न। भावनामात्रमूलत्वेन तस्याप्यनाश्वासविषयत्वात्। एकदेशसंवादेनापि प्रवृत्तिरिति चेन्न। स्वप्नाख्यानवदन्यथापि सम्भवात्। न चानुपलब्धे भावनाऽपि चौरसर्पादयो ह्युपलब्धा एव भीरुभिर्भाव्यन्ते। न च कर्मयोगयोर्हित साधनत्वं कुतश्चिदुपलब्धम्। न चैतयोः स्वरूपेणोपलम्भः क्वचिदुपयुज्यते, भावनासाध्यो वा। न चास्मिन्नन्वयव्यतिरेकौ सम्भवतः देहान्तरभोग्यत्वात्, फलस्याऽप्रतीततया तदनुष्ठाने तदभावाच्च न च कर्तृभोक्तृरूपोभयदेहप्रतिसन्धानादेव तदुपपद्यते; तदभावात्। न ह्येतस्य पूर्वकर्मणः फलमिदमनुभवामीति कश्चित प्रतिसन्धत्ते। केचित् तथा भविष्यन्तीति सम्भावनामात्रेऽप्यना-

---

संस्काररूपायाः भावनायाः अप्रमाणत्वादाह – **अभ्युपगमेऽपीति**। **स्वप्नाख्यानवदिति**। यथा स्वप्नफलप्रतिपादकस्यैकदेशसंवादेऽपि न प्रामाण्यं, तद्वदिति भावः। एवं भावनामभ्युपगम्योक्त्वा अधुना सैव न सम्भवतीत्याह – **न चानुपलब्ध इति**। किञ्च कपिलादयः कर्मयोगानुष्ठानेन सिद्धा इति वक्तव्यम्। तच्च तत्र हितसाधनत्वज्ञानेन भवति। तादृशज्ञानोपायस्तदानीं नास्तीत्याह – **न च कर्मयोगयोरिति**। **भावनासाध्यो वेति**। स्वरूपोपलम्भः भावनासाध्यो न भवतीत्यर्थः। **न चास्मिन्निति**। कर्मयोगयोरतीन्द्रियसाधनत्व इत्यर्थः। **तदभावादिति**। अन्वयव्यतिरेकयोरभावादित्यर्थः। नन्वेकस्मिन् देहे कर्मणस्तत्फलस्य चाऽन्वयव्यतिरेकासम्भवेऽपि कर्तृभोक्तृदेहयोरात्मनश्च प्रतिसन्धानात्तदुपपत्तिरित्याशङ्कते – **न च कर्तृभोक्तृरूपेति**।

श्वासात् । विनिगमनायां प्रमाणाभावात् । प्रतिपन्निशीथनिद्राणप्रातः-प्रतिबुद्धसमस्तोपाध्यायवदन्योन्यसंवादात् कपिलादिषु समाश्वास इति चेन्न । एकजन्मप्रतिसन्धानवत् जन्मान्तरप्रतिसन्धाने प्रमाणाभावात्। तथापि च अधिकारिविशेषेण ब्राह्मणत्वाद्यप्रतिसन्धानेऽनुष्ठानरूपस्या-ऽऽश्वासस्याभावात्। न हि पूर्वजन्मनि मातापित्रोर्ब्राह्मण्यात्तदुत्तरत्र ब्राह्म-ण्यमिति नियमो, येन सर्गादौ वर्णादिधर्मव्यवस्था स्यात् । ईश्वरवद-दृष्टविशेषोपनिबद्धभूतविशेषानुपलम्भात् । अतीन्द्रियार्थदर्शित्वे चाऽना-श्वासस्योक्तत्वात् ।

एतेन ब्रह्माण्डान्तरसञ्चारिवर्णव्यवस्थया सम्प्रदायप्रवर्तनमपा-स्तम् । सञ्चारशक्तेरभावात् । वर्षान्तरसञ्चरणमेव हि दुष्करं, कुतो लोकान्तरसञ्चारः, कुतस्तराञ्च ब्रह्माण्डान्तरगमनम् । अणि-मादिसम्पत्तेरेवमपि स्यादिति चेन्न । तत्राऽपि प्रमाणाभावात् । सम्भावनामात्रेण समाश्वासानुपपत्तेः । आद्यमहाजनपरिग्रहान्यथानु-पपत्तिरेवाऽत्र प्रमाणमिति चेत् ; एवम्भूतैककल्पनयैवोपपत्तौ भूयः-कल्पनायां गौरवप्रसङ्गात् । विदेहनिर्माणशक्तेरणिमादिविभूतेश्चावश्या-

---

**विनिगमनायामिति** । अनुभवत्येवेत्यवधारणायामित्यर्थः । **तथापीति** । कपिला-दीनां जन्मान्तरप्रतिसन्धानाङ्गीकारेऽपीत्यर्थः । नन्वीश्वरवत् कपिलादयोऽपि ब्राह्म-ण्यादिवर्णविशेषज्ञा इत्याशङ्क्य जीवादृष्टविशेषसहकृतानां परमाण्वादिभूतविशेषा-णामनध्यक्षान्नैवमित्याह — **ईश्वरवदिति** । महाजनपरिग्रहाऽन्यथानुपपत्तिरेव कपि-लादीनामणिमाद्यैश्वर्ये प्रमाणमित्याशङ्क्य अनेकेषामणिमादिशक्तिमतां कल्पना-पेक्षया एकस्यैव कल्पनं युक्तमित्याह — **एवम्भूतेति** । **विदेहेति** ।

---

१. सिद्धैः कपिलादिभिर्वेदोक्ताः पदार्थाः साक्षात्कारिषत इत्येतावान् महिमा तेषां, न त्वदृष्टाद्यधिष्ठातृत्वमपीति समस्तवाक्यार्थः ।

ऽभ्युपगन्तव्यत्वात् । अस्त्वेक एवेति चेत्; न तर्हीश्वरमन्तरेणान्यत्र सामाभास इति ।

कारं कारमलौकिकाद्भुतमयं मायावशात्संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानाऽनुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥



॥ इति श्रीन्यायकुसुमाञ्जलौ द्वितीयस्तबकः ॥

---

विदेहस्यैव निर्माणशक्तेरित्यर्थः । अथवा, विविधदेहस्यैव निर्माणशक्तेरित्यर्थः परिच्छेदार्थमुपसंहरन्नीश्वरं स्तौति – कारं कारमिति ॥

इति श्रीमद्राममूर्तिबुधेन्द्रचरणकमलसेवासमासादितन्यायविद्यावैशद्येन
श्रीमद्वरदाचार्यवर्यव्यवस्थापितनारसिंहसंस्कृतकलाशाला-
न्यायालङ्कारपण्डितेन सोमशेखरशास्त्रिणा निर्मि-
तायां कुसुमाञ्जलिटिप्पण्यां द्वितीयः स्तबकः ।

॥ शुभमस्तु ॥



श्रीगणेशाय नमः

# सामोदे न्यायकुसुमाञ्जलौ

## तृतीयः - स्तबकः



नन्वेतदपि कथं ? । तत्र बाधकसम्भवात् । तथाहि—यदि स्यादुपलभ्येत । अयोग्यत्वात् सन्नपि नोपलभ्यते इति चेत्; एवं तर्हि शशशृङ्गमप्ययोग्यत्वान्नोपलभ्यते इति स्यात् । नैतदेवं, शृङ्गस्य योग्यतयैव व्याप्तत्वादिति चेत्; चेतनस्यापि योग्योपाधिमत्तयैव व्याप्तत्वात् । तद्बाधे सोऽपि बाधित एवेति तुल्यम् । व्यापकस्वार्थाद्यनुपलम्भेनाप्यनुमीयते नास्तीति । को हि प्रयोजनमन्तरेण किञ्चित्कुर्यादिति । उच्यते—

योग्या दृष्टिः कुतोऽयोग्ये प्रतिबन्दिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥

---

तृतीयां विप्रतिपत्तिं निराकर्तुमुपक्रमते । ननु नित्यवेदद्वारा कपिलादिद्वारा वा धर्मसंप्रदायासिद्धावपि तस्येश्वरद्वारकत्वमपि न सिद्ध्यति, ईश्वरे बाधकसद्भावादिति शङ्कते—**नन्वेतदपीति** । एतत्=कालात्ययापदिष्टत्वं । कथं निरसनीयमिति शेषः । बाधकमेवोपन्यस्यति – **तथापीति** । **यदीति** । न चोपलभ्यत इति शेषः । तथा चानेन तर्केणानुगृहीतं प्रत्यक्षमेवेश्वरसद्भावे बाधकमिति भावः । शशशृङ्गप्रतिबन्दीं निरसितुमाशङ्कते—**नैतदिति** । **व्याप्तत्वादिति** । गवादाविति शेषः । **चेतनस्यापीति** । चैतन्यस्य शरीरसम्बन्धनियतत्वेन अनुपलब्ध्या तद्बाधे तद्गतोऽपि बाधादिति भावः । न केवलं प्रत्यक्षमेव बाधकं, किं त्वनुमानमपीत्याह – **व्यापकेति** । कुलालादौ स्वार्थस्य कर्तृत्वव्यापकतया दृष्टत्वाद्व्यापकानुपलब्ध्या जगत्कर्तुरभावोऽनुमीयत इति भावः । स्वार्थस्य कर्तृव्यापकत्वमेवाह—**को हीति** । सिद्धान्तमुपक्रमते — **उच्यत इति** । अयोग्ये परमेश्वरे योग्यानुपलब्धिः कुतो बाधिका । नापि शशशृङ्गमयोग्यं सद्योग्यानुपलब्ध्या बाध्यते । ततश्च न तेन प्रतिबन्दीसिद्धिः । अयोग्यं शृङ्गत्वं क्व बाध्यते । योग्यस्यैव शृङ्गस्य बाध्यत्वादिति भावः । एवं प्रात्यक्षिकबाधमुद्धृत्य अनुपलब्धिलिङ्गकानुमानमपि न बाधकमित्याह – **क्वानुमानमिति** ।

स्वात्मैव तावत् योग्यानुपलब्ध्या प्रतिषेद्धुं न शक्यते, कुतस्त्वयोग्यः परमात्मा। तथाहि–सुषुप्त्यवस्थायामात्मानमनुपलभमानो नास्तीत्यवधारयेत्। कस्यापराधेन पुनर्योग्योऽप्यात्मा तदानीं नोपलभ्यते?। सामग्रीवैगुण्यात्। ज्ञानादिक्षणिकगुणोपधानो ह्यात्मा गृह्यते इत्यस्य स्वभावः। ज्ञानमेव कुतो न जायते इति चिन्त्यते। पश्चाद्वा कथमुत्पत्स्यते इति चेत्; मनसोऽ[1]निन्द्रियप्रत्यासन्नतया अजननात् तत्प्रत्यासत्तौ च पश्चाज्जननात्। मनोवैभववादिनामिदमसम्मतम्। तथाहि–मनो विभु, सर्वदा स्पर्शरहितद्रव्यत्वात्, सर्वदा विशेषगुणशून्यद्रव्यत्वात्, नित्यत्वे सत्यनारम्भकद्रव्यत्वात्, ज्ञानासमवायिकारणसंयोगाधारत्वादित्यादेरिति चेन्न। सर्वेषामापाततः स्वरूपासिद्धत्वात्। तथाहि–यदि रूपाद्युपलब्धीनां क्रियात्वेन करणतया मनोऽनुमितिर्न तदा द्रव्यत्वसिद्धिः, अद्रव्यस्यापि करणत्वात्। अथाऽऽसामेव साक्षात्कारितयेन्द्रियत्वेन तदनुमातव्यम्। तथापि व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। तत्र यदि कर्णशष्कुलीवन्नियतशरीरावयवस्योपाधित्वं, तदा तावन्मात्रे वृत्तिलाभः। तद्दोषे च वृत्तिरोधः श्रोत्र[2]वत् प्रसज्येत।

---

ईश्वरानङ्गीकारे आश्रयासिद्धं तदनुमानं, तदङ्गीकारे च तद्ग्राहकमानबाधितं तदनुमानमिति कारिकार्थः। अमुमेव विवृणोति–**स्वात्मैवेति**। सुषुप्तावात्मा कुतो नोपलभ्यत इति मध्यस्थः शङ्कते–**कस्येति**। **सामग्रीति**। सहकारिविरहादित्यर्थः। सुषुप्तौ ज्ञानाद्यनुत्पत्तिरपि कथमित्याशङ्क्य समाधत्ते–**मनसोऽनिन्द्रियेत्यादिना**। मनोवैभववादिनः कौमारिला इदं न सहन्त इत्याह–**मन इति**। मनोवैभवहेतूनां स्वरूपासिद्धिमाह–**तथाहीत्यादिना**। **अद्रव्यस्यापीति**। लिङ्गज्ञानस्यादृष्टवदात्मसंयोगस्य चेत्यर्थः। ननु सुखाद्युपलब्धीनां प्रत्यक्षरूपतया तत्करणस्येन्द्रियत्वं सिद्ध्यति। इन्द्रियत्वेन द्रव्यत्वमपि सिद्ध्यतीति कुतः स्वरूपासिद्धिरित्याशङ्क्य निराकरोति–**तथापीत्यादिना**।

---

१. मनस इन्द्रियाप्रत्यासन्नतया। २. यथा हि नियतोपाधौ श्रोत्रे नष्टे नैव शब्दानुभवस्तथैव नियतशरीरावयवोपाधौ नष्टे सुखाद्यनुभवो न स्यात्।

ततः शरीरमात्रमुपाधिरवसेयः। तथाच तदवच्छेदेन वृत्तिलाभे 'शिरसि मे वेदना, पादे मे सुखमि'त्याद्यव्याप्यवृत्तित्वप्रतीतिविरोधः। असमवायिकारणानुरोधेन विभुकार्याणां प्रादेशिकत्वनियमात्। शरीरतदवयवादिपरमाणुपर्यन्तोपाधिकल्पनायां कल्पनागौरवप्रसङ्गो नियमानुपपत्तिश्चेति। ततोऽन्यदेवैकं सूक्ष्ममुपाधित्वेनातीन्द्रियं कल्पनीयम्। तथाच तस्यैवेन्द्रियत्वे स्वाभाविकेऽधिककल्पनायां प्रमाणाभावाद्धर्मिग्राहकप्रमाणबाधः। अथ ज्ञानक्रमेणेन्द्रियसहकारितया तदनुमानं ततः सुतरां प्रागुक्तदोषः। यदि च मनसो वैभवेऽप्यदृष्टवशात् क्रम उपपाद्येत तदा मनसोऽसिद्धेराश्रयासिद्धिरेव वैभवहेतूनामिति।

अथ यत्रादृष्टस्य दृष्टकारणोपहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पाद्यत एव। अन्यथा, अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित् पटो न जायेत, जातोऽपि वा कदाचिन्निर्गुणः स्यात्। बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत। यत्र तु दृष्टानुपहारेणादृष्टव्यापारस्तत्र तद्वैगुण्यात् कार्यानुदयः, यथा परमाणुकर्मणः। तदिहापि यदि विषयेन्द्रियात्मनां समवधानमेव ज्ञानहेतुः, तदा तत्सद्भावे सदैव कार्यं स्यात्। न ह्येतदतिरिक्तमप्यदृष्टस्योपहरणीयमस्ति, न च सदैव

---

**नियमानुपपत्तिश्चेति।** नियतदेशे सुखाद्युत्पत्तिनियमानुपपत्तिरित्यर्थः। **धर्मिग्राहकप्रमाणबाध इति।** अणुत्वेनैव मनसः सिद्धेर्वैभवहेतूनां धर्मिग्राहकमानबाध इत्यर्थः। एवं सुखादिसाक्षात्कारकारणत्वेन मनःकल्पनायां धर्मिग्राहकबाधमुक्त्वा बाह्येन्द्रियेभ्यो युगपज्ज्ञानानुत्पत्तेस्तत्सहकारितया मनःकल्पनायामपि धर्मिग्राहकबाधमाह — **अथ ज्ञानक्रमेणेति।** नन्वदृष्टस्य द्विविधं कारणत्वं। क्वचित् दृष्टकारणोपसंहारेण घटादौ, क्वचिच्च साक्षादेव परमाणुसंयोगादौ। प्रकृते च सुषुप्तौ ज्ञानानुत्पत्तेस्तत्रादृष्टं विषयेन्द्रियात्मभ्योऽतिरिक्तं किञ्चित्कारणमुपसंहरति। तदेव मन इति न वैभवहेतूनामाश्रयासिद्धत्वम्। तस्य विभुत्वेऽपि करणत्वाङ्गीकारेण करणस्य च क्रमिकक्रियाजनकत्वाङ्गीकारेण च न क्रमिकज्ञानोत्पत्तिभङ्ग इत्याशङ्कते — **अथ यत्रे-**

ज्ञानोदयः; ततोऽतिरिक्तमपेक्षितव्यम् । तच्च यद्यपि सर्वाण्येवेन्द्रियाणि व्याप्नोति, तथापि करणधर्मत्वेन क्रियाक्रमः सङ्गच्छते, अकल्पिते तु तस्मिन्नायं न्यायः, प्रतिपत्तुरकरणत्वाच्चक्षुरादीनामनेकत्वादिति चेत्; नन्वेवमपि युगपत् ज्ञानानि माभूवन् । युगपज्ज्ञानं तु केन वार्यते ?। भवत्येव समूहालम्बनमेकं ज्ञानमिति चेन्न। एकेन्द्रियग्राह्येष्विव नानेन्द्रियग्राह्येष्वपि प्रसङ्गात् । तेष्वपि भवत्येवेति चेन्न। व्यासङ्गकाले ज्ञानक्रमेण विवादाविषये क्रमानुमानात् । बुभुत्साविशेषेण व्यासङ्गे क्रियाक्रम इति चेन्नैवम् । न ह्येष बुभुत्साया महिमा यदबुभुत्सिते विषये ज्ञानसामग्र्यां सत्यामपि न ज्ञानं, अपि तु न तत्र संस्कारातिशयाधायकः प्रत्ययः स्यात्। यदि त्वबुभुत्सिते विषये सामग्रीमेव सा निरुन्ध्यात्, घटायोन्मीलितं चक्षुः पटं नैव दर्शयेत् । तस्मात् बुभुत्सापीन्द्रियान्तरादाकृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती युगपज्ज्ञानानुत्पत्तावुपयुज्यते, न तु स्वरूपतः। विभुनोऽपि मनसो व्यापारक्रमात् क्रम इति चेन्न । तस्य संयोगातिरिक्तस्य कर्मरूपत्वे वैभवविरोधात् । गुणरूपत्वे नित्यस्य क्रमाऽनुपपत्तेः।

---

त्यादिना चेदित्यन्तेन । **चक्षुरादीनामनेकत्वादिति** । तथा च तेषां यौगपद्याद्युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति भावः । नन्वेवं बहूनां ज्ञानानां युगपदनुत्पत्तावपि नानेन्द्रियकरणकमेकं ज्ञानं किं न स्यात्, एकेन्द्रियजन्यनानाविषयकसमूहालम्बनज्ञानवदिति शङ्कां निराकरोति — **युगपज्ज्ञानं त्विति** । दीर्घशष्कुलीभक्षणे नानेन्द्रियकरणकमेकमपि ज्ञानं गन्धादिविषयकं भवत्येवेत्याह पूर्वपक्षी — **तेष्वपीति** । लोके श्रोत्रेण कस्यचिच्छब्दस्य सुस्पष्टं श्रवणकाले इतरेन्द्रियविषयसम्बन्धे सत्यपि तज्ज्ञानं न जायते । मनसोऽणुत्वेन तस्य श्रोत्रेणैव सम्बन्धादितरेणासम्बन्धादिति तत्र यथा ज्ञानस्य क्रमिकत्वं, तथैव प्रकृतेऽपि दीर्घशष्कुलीभक्षणे ज्ञानस्य क्रमिकत्वमेव । क्रमस्य पुनर्लाघवादज्ञानमात्रमिति न क्वापि नानेन्द्रियकरणकमेकं ज्ञानमिति समाधत्ते - **व्यासङ्गकाल इति** । ननु भवदुक्तदृष्टान्तेन बुभुत्सावशात्क्रमो, न मनसोऽणुत्वप्रयुक्त इत्याशङ्क्य निराकरोति—**न ह्येष** इत्यादिना । एवं मनसोऽणुत्वं प्रसाध्य, सुषुप्तिकाले मनसः पुरीतति प्रविष्टस्य बाह्येन्द्रि-

अनित्यस्य च नित्यैकगुणस्याऽविभुद्रव्यसंयोगासमवायिकारणकत्वेन तदन्तरेणाऽनुपपत्तेः । तदपि कल्पयिष्यते इति चेत्; तदेव तर्हि मनःस्थाने निवेश्यतां लाघवाय । तस्मादण्वेव मन इति । तथाच तस्मिन्ननिन्द्रियप्रत्यासन्ने निरुपधानत्वादात्मनः सुषुप्त्यवस्थायामनुपलम्भः । एतदेव मनसः शीलमिति कुतो निर्णीतमिति चेत्; अन्वयव्यतिरेकाभ्याम् । न केवलं तस्य, किन्तु सर्वेषामेवेन्द्रियाणाम् । न हि विशेषगुणमनपेक्ष्य चक्षुराद्यपि द्रव्ये प्रवर्तते । स्वापावस्थायां कथं ज्ञानमिति चेत्; तत्तत्संस्कारोद्बोधे विषयस्मरणेन स्वप्नविभ्रमाणामुत्पत्तेः । उद्बोध एव कथमिति चेत् ; मन्दतरतमादिन्यायेन बाह्यानामेव शब्दादीनामुपलम्भात्, अन्ततः शरीरस्यैवोष्मादेः प्रतिपत्तेः । यदा च मनः त्वचमपि परिहृत्य पुरीतति वर्तते तदा सुषुप्तिः ।

स्यादेतत् । परात्मा तु कथं परस्याऽयोग्यः ? । न हि साक्षात्कारिज्ञानविषयतामेवायं न प्राप्नोति, स्वयमप्यदर्शनप्रसङ्गात् । नापि ग्रहीतुरेवायमपराधः, तस्यापि हि ज्ञानसमवायिकारणतयैव तद्योग्यता । नापि करणस्य, साधारणत्वात् । न ह्यासंसारमेकमेव मनः एकमेवात्मानं गृह्णातीत्यत्र नियामकमस्ति । स्वभाव इति चेत्; तर्हि मुक्तौ

---

न्द्रियासम्बन्धाज्ज्ञानाद्यनुत्पत्तौ निरुपाधेरात्मनः प्रत्यक्षं न भवतीत्याह — **निरुपधानेति** । निरुपाधेरप्यात्मनः प्रत्यक्षं किं न स्यादित्याशङ्क्य परिहरति — **अन्वयव्यतिरेकाभ्यामिति** । ननु बाह्येन्द्रियाणामुपरतत्वात् स्वप्ने कथं ज्ञानमित्याशङ्क्य, तदानीं पूर्वानुभवजनितसंस्कारोद्बोधसंपादितस्मरणसध्रीचीनं मन एव स्वाप्निकविभ्रमाणां कारणमित्याह—**स्वप्नविभ्रमाणामुत्पत्तेरिति** । एतावता योग्यस्याऽप्यात्मनः कारणवशादनुपलब्धिः । किमु वक्तव्यमयोग्यस्य परमात्मनोऽनुपलब्धाविव्युक्ते शङ्कते — **स्यादेतदित्यादिना** । अयं भावः — परमात्मा न सर्वथाऽयोग्यः, स्वस्याप्यप्रत्यक्षत्वप्रसङ्गात् । नापि प्रमातृत्वरूपसहकारिविरहः । ज्ञानसमवायिकारणत्वरूपस्य प्रमातृत्वस्यापि सत्त्वात् । नापि मनोरूपकरणसहकारयोग्यताविरह, मनसः साधारण्यात् । एकस्य मनस एकेनैवात्मना सम्बन्धः, नान्येनेति मनस्त्व-

निःस्वभावत्वप्रसङ्गः, तदेकार्थताया अपायादिति । न । भोजकादृष्टोपग्रहस्य नियामकत्वात् । यद्धि मनो यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाऽऽकृष्टानि तानि तस्यैवेति नियमः । तदुक्तं प्राक्—'प्रत्यात्मनियमाद्भुक्ते' रिति । एतेन परबुद्ध्यादयो व्याख्याताः। तदेवं योग्यानुपलब्धिः परात्मादौ नास्ति । तदितरा तु न बाधिकेति तवापि सम्मतम् । अतः किमधिकृत्य प्रतिबन्धिः । न हि शशशृङ्गमयोग्यानुपलब्ध्या कश्चिन्निषेधति । न च प्रकृते योग्यानुपलब्धिं कश्चिन्मन्यते । अथायमाशयः—अयोग्यशशशृङ्गादावनुपलब्धिर्न बाधिका स्यादिति । ततः किं? । तत् सिद्ध्येदिति चेत्; एवमस्तु यदि प्रमाणमस्ति । पशुत्वादिकमिति चेत्; पर-

---

भावान्मनसो न साधारण्यमित्यपि न शक्यते वक्तुम् । मुक्तात्मनां मनस्सम्बन्धाभावान्मनसस्तादृशस्वभावासिद्धेरिति । शरीरस्येव मनसोऽप्यदृष्टविशेषनियम्यत्वान्मनस्सम्बन्धहेतोरदृष्टस्याभावान्न परमात्मा परस्य गोचरः, जीवात्मान्तरवदिति समाधत्ते—**भोजकादृष्टोपग्रहस्येत्यादिना** । कारिकाप्रथमपादार्थमुपसंहरति —**तदेवमिति** । इतरा = अयोग्यानुपलब्धिः । पराशयमाशङ्कते—**अथेति** । यथा अयोग्यानुपलब्धिः शशशृङ्गे अबाधिकेति तावता न शशशृङ्गसिद्धिरेवमीश्वरोऽपि न सिद्ध्येदित्यर्थपरतया अयोग्येत्यारभ्य चेदित्यन्तग्रन्थो व्याख्येयः । अथवा अयोग्यानुपलब्धेरबाधकतेश्वर इव शशशृङ्गेऽपि समानमिति शङ्कितुराशयः । ततः किमिति सिद्धान्तिनो वचनम् । ईश्वरवच्छशशृङ्गमपि किं न सिद्ध्येदिति शङ्कितुराशय इत्येवमर्थकतया वा व्याख्येयः ।

शशः शृङ्गवान्पशुत्वाद्गवादिवदिति शृङ्गे प्रमाणमाशङ्कते — **पशुत्वादिकमिति** । अश्वादीनां पक्षसमत्वान्न व्यभिचार इति भावः । **परसाधन इति** । अयं भावः — आदावीश्वरेऽनुपलब्धिर्बाधिकेत्यभिधाय अनुपलब्धिर्यदीश्वरे अबाधिका तर्हि शृङ्गेऽप्यबाधिका । यदि तत्र बाधिका तर्हीश्वरेऽपि बाधिकेतीश्वरबाधने प्रतिबन्धिरभिहिता । इदानीं पुनरयमुपन्यासः । परेणेश्वरसाधने क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादिति प्रयुक्ते, तर्हि शशः शृङ्गवान् पशुत्वादित्यपि किं न

साधने प्रतिबन्धिस्तर्हि न तद्बाधने । तत्रैव भविष्यतीति चेत्; तर्त्कि तत्र प्रतिबन्धिरेव दूषणं, अथ कथञ्चित्तुल्यन्यायतया योग्या एव परात्म-बुद्ध्यादयस्ते च बाधिता एवेत्यपहृतविषयत्वम्? । न प्रथमः, अव्याप्तेः । न हि पशुत्वादेः शशशृङ्गसाधकत्वेन कार्यत्वादेः कर्तृमत्त्वादिसाधकत्वं व्याप्तं, येन तस्मिन्नसति तत्प्रतिषिद्ध्येत । न द्वितीयः, मिथोऽनुपल-भ्यमानत्वस्य वादिप्रतिवादिस्वीकारात् । तथापि पशुत्वादौ को दोष इति चेन्न । जानीमस्तावत्तद्विचारावसरे चिन्तयिष्यामः ।

स्यादेतत् । यत्प्रमाणगम्यं हि यत् तदभाव एव तस्याभावमावेद-यति । यथा रूपादिप्रतिपत्तेरभावश्चक्षुरादेरभावम् । कायवाग्व्यापारैक-प्रमाणकश्च परात्मा, तदभाव एव तस्याऽभावे प्रमाणमङ्कुरादिषु । तन्न । तदेकप्रमाणकत्वासिद्धेः। अन्यथा सुषुप्तोऽपि न स्यात्। श्वाससन्तानोऽपि तत्र प्रमाणमिति चेन्न। निरुद्धपवनोऽपि न स्यात्। कायसंस्थानविशेषो-ऽपि तत्र प्रमाणमिति चेन्न । विषमूर्च्छितोऽपि न स्यात् । शरीरोष्मापि

---

स्यादिति प्रतिबन्धिरुच्यत इति परसाधने अयं प्रतिबन्धिः, नेश्वरबाधने इति । ननु परसाधन एवायं प्रतिबन्धिरित्याशङ्कते – तत्रैवेति । विकल्प्य दूषयति – तत्किमिति । यदि कार्यत्वं कर्तारं साधयेत् पशुत्वमपि शृङ्गं साधयेदिति किं प्रतिब-न्धिरेवं दूषणं। किं वा योग्यानुपलब्ध्या पशुत्वस्येव कार्यत्वादेरपि बाधितविषयता वा । न द्वितीय इति।परात्मादेः परायोग्यत्वस्योभयवादिसिद्धत्वात्प्रत्यक्षानुपलम्भः नाऽयो-ग्ये बाधकम् । यद्वा यदि योग्यानुपलब्धिः परात्मादौ बाधिका स्यात्तर्हि परस्पर-मनुपलभ्यमानयोरेव वादिप्रतिवादिनोः परस्परमङ्गीकारो न स्यादिति वाऽर्थः । तथापि पशुत्वादाविति। अत्र दूषणाभिधाने तदेवेश्वरसाधनेऽपि दूषणमिति शङ्कितुरभिप्रायः। अनवसरत्वान्नोच्यत इत्याह–तद्विचारावसर इति। अयं भावः– शशे शृङ्गं नास्तीत्यबाधितप्रत्यक्षमेवात्र बाधकं। अयोग्यस्याऽपि कर्तृत्वेनेश्वरानुमाने नेदं बाधकमिति संक्षेपः । एवं प्रत्यक्षस्येश्वरे बाधकत्वे निराकृतेऽधुना व्यापका-नुपलब्धिलिङ्गकमनुमानमङ्कुरादीनां कर्तरि बाधकमित्याशङ्कते – स्यादेतदिति । तदेकप्रमाणकत्वासिद्धेरिति। परात्मन इति शेषः । कार्यमात्रोन्नेयस्य वाग्व्या-

तत्र प्रमाणमिति चेन्न। जलावसिक्तविषमूर्च्छितोऽपि न स्यात्। तस्मात् यद्यत्कार्यमुपलभ्यते तत्तदनुगुणश्चेतनस्तत्र तत्र सिद्धयति। न च कार्यमात्रस्य क्वचिद्व्यावृत्तिरिति। न च त्वदभ्युपगतेनैव प्रमाणेन भवितव्यं नान्येनेति नियमोऽस्ति। न च प्रमेयस्य प्रमाणेन व्याप्तिः। सा हि कात्स्न्र्येन वा स्यात्, एकदेशेन वा स्यात्? न प्रथमः, प्रत्यक्षाद्यन्यतमासद्भावेऽपि तत्प्रमेयावस्थितेः। न द्वितीयः, पुरुषनियमेन सर्वप्रमाणव्यावृत्तावपि प्रमेयावस्थितेः। अनियमेनासिद्धेः। न हि सर्वस्य सर्वदा सर्वथाऽत्र प्रमाणं नास्तीति निश्चयः शक्य इति। कथं तर्हि चक्षुरादेरभावो निश्चेयः? व्यापकानुपलब्धेः। चरमसामग्रीनिवेशिनो हि कार्यमेव व्यापकम्। तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः। योग्यमात्रस्य कदाचित्कार्यं, तन्निवृत्तौ तथाभूतस्याऽपि निवृत्तिः। अन्यथा, तत्रापि सन्देहः। प्रकृतेऽपि

---

पारादिरूपकार्यविशेषनिवृत्त्या न निवृत्तिरित्याह — **तस्मादिति**। प्रमाणप्रमेययोर्व्याप्यभावेन प्रमाणाभावान्न प्रमेयाभावस्सिद्धयतीत्याह — **न च त्वदित्यादिना**। व्याप्तिमेव विकल्प्य दूषयति—**सा हीत्यादिना**। अयं भावः — प्रमेयस्य निखिलप्रमाणव्याप्यत्वे एकप्रमाणनिवृत्तावपि प्रमेयनिवृत्तिप्रसङ्गः। येन केनापि प्रमाणेन व्याप्यत्वाङ्गीकारेऽपि यस्य कस्यचित्पुरुषस्येति नियमाङ्गीकारे तत्पुरुषीयसर्वप्रमाणनिवृत्तौ प्रमेयनिवृत्तिप्रसङ्गः। अथाऽनियमेन सर्वपुरुषीयप्रमाणव्याप्यत्वे न प्रमाणनिवृत्तिर्ज्ञातुं शक्यत इति। एतदेवाह — **अनियमेनासिद्धेरिति**।

ननु प्रमेयस्य प्रमाणाव्याप्यत्वे रूपादिज्ञानाभावात्तदेकप्रमाणस्य चक्षुरादेरभावः कथं सिद्धयतीत्याशङ्क्य, तत्रापि प्रमेयाभावान्न प्रमाणाभावः। किं तु व्यापकानुपलब्ध्येत्याह —**व्यापकेति**। ननु कार्यस्य कारणव्यापकत्वं नास्तीत्याशङ्क्य चरमकारणस्य कार्यमेव व्यापकमिति समाधत्ते—**चरमेति**। **कार्यमिति**। (व्यापकमिति शेषः।) अयं भावः—किञ्चित्कारणं कार्योत्पादनयोग्यताशाल्येव भवति तन्त्वादिकं। तस्यापि कादाचित्कं कार्यं व्यापकमेव। तत्र कार्याभावेन तादृशयोग्यताविशिष्टस्य कारणस्य व्यतिरेकः सिद्धयतीति। **अन्यथेति**। चक्षुरादिषु चरमसामग्रीनिविशिष्टत्वं योग्यताविशिष्टत्वं वा नास्ति तदा रूपज्ञानाभान्न चक्षुरादीनामभावनिश्चयः, किंतु

व्यापकानुपलब्ध्या तत्प्रतिषेधोऽस्तु । न । आश्रयासिद्धत्वात् । न हीश्वरस्तज्ज्ञानं वा क्वचित् सिद्धम् । आभासप्रतिपन्नमिति चेन्न। तस्याश्रयत्वानुपपत्तेः । प्रतिषेध्यत्वानुपपत्तेश्च ।

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥

न चैतदाभासप्रतिपन्नस्यास्तीति कुतस्तस्य निषेधाधिकरणत्वं निषेध्यता वेति । कथं तर्हि शशशृङ्गस्य निषेधः? । न कथञ्चित् । स ह्यभावप्रत्यय एव । न चायमपारमार्थिकप्रतियोगिकः परमार्थाभावो नाम। न चापारमार्थिकविषयं प्रमाणं नामेति । अपि च —

दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति साऽनुपलम्भने ॥३॥

---

संदेह एवेति भावः । ननु प्रकृतेऽपीश्वरे व्यापकस्य स्वप्रयोजनस्याभावाद्व्याप्यस्य कर्तृत्वस्य प्रतिषेधोऽस्त्वित्याशङ्क्य प्रतिषेधाधिकरणस्यासिद्धया नैवमिति परिहरति— **नहीति । आभासेति ।** असत्ख्यात्युपस्थितमित्यर्थः । असत्ख्यात्युपस्थितस्याभावप्रतियोगित्वमभावाश्रयत्वं वा नोपपद्यत इत्याह — **व्यावर्त्येति** । व्यावर्त्यते अनेनेति व्युत्पत्त्या व्यावर्त्यस्य प्रतियोगिनोऽभाववत्ता, भाविकी = स्वाभाविकी विशेष्यता, आश्रयस्येत्यर्थः । पारमार्थिकस्यैवाभावाश्रयत्वं, नाऽपारमार्थिकस्येति भावः । एवं वस्तुनः प्रतियोगित्वमपि पारमार्थिकमभावविरहात्मत्वमेव । एतच्चालीकस्याभावाश्रयत्वमभावप्रतियोगित्वं वा निष्प्रामाणिकमिति भावः । यदाहुः — 'लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते' इति ।

**स ह्यभावेति** । शशशृङ्गं नास्तीत्यत्र शशे शृङ्गनिषेधात्पारमार्थिकत्वमेव तत्राधिकरणप्रतियोगिनोरिति भावः । न केवलमाभासप्रतिपन्नस्य पारमार्थिकप्रतिषेधप्रतियोगित्वाभावः । किन्तु प्रतिषेधविषयत्वमेव नास्तीत्याह — **अपि चेति** । अयं भावः — केवलानुपलब्धिमात्राद्वस्तुनः निषेधो न सम्भवति, अतीन्द्रियोच्छेदापत्तेः । किन्तु योग्यानुपलब्धेः । अनुपलम्भे योग्यता च प्रतियोग्यतिरिक्तनिखिलतत्प्रमापकसामग्रीसमवधानरूपा । अलीके शशशृङ्गादौ

**केन च शशशृङ्गं प्रतिषिद्ध्यते । सर्वथाऽनुपलब्धस्य योग्यत्वाऽसिद्धेः। तदितरसामग्रीसाकल्यं हि तत्। ननूक्तमाभासोपलब्धं हि तत्। अत एवाऽशक्यनिषेधमित्युक्तम् । अनुपलम्भकाले आभासोपलम्भसामग्र्या अभावात्तत्काले चानुपलम्भाभावादिति । कस्तर्हि शशशृङ्गं नास्तीत्यस्यार्थः? । शशे अधिकरणे विषाणाभावोऽस्तीति ।**

**स्यादेतत् । यद्यपीश्वरो नावगतो, यद्यपि च नाभाससिद्धेन प्रमाणव्याहारः शक्यसम्पादनः । तथाप्यात्मानः सिद्धास्तेषां सार्वज्ञ्यं निषिद्ध्यते, क्षित्यादिकर्तृत्वञ्चेति । तथाहि—मदितरे न सर्वज्ञाश्चेतनत्वादहमिव । न च ते क्षित्यादिकर्तारः पुरुषत्वादहमिव । एवं वस्तुत्वादेरपीति । तदेतदपि प्रागेव परिहृतम् । तथाहि –**

इष्टसिद्धिः प्रसिद्धेऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥४॥

---

तु योग्यता दोषसमवहितोपलम्भसामग्रीरूपा वाच्या । अन्यथोपलम्भस्यादुष्टत्वेनोपलब्धस्य तात्त्विकत्वापत्तेः । एवञ्च योग्यतासद्भावदशायामनुपलम्भो नास्ति । अपि तु शशशृङ्गानामुपलम्भ एवास्ति । तेषामनुपलम्भे योग्यता नास्ति ।तथ.च योग्यानुपलम्भाभावान्न तेषां निषेधस्सम्भवतीति । योग्यतानुपलम्भयोः सहानवस्थानादभावावधारणं न सम्भवतीत्याह – **केन** चेत्यादिना । शङ्कते — **कस्तर्हीति** । उक्तदिशा शशशृङ्गनिषेधस्याशक्यत्वे इति भावः। ननु यथा शशे शृङ्गनिषेधस्त्वया समर्थितः एवमेव मदन्यचेतने सर्वज्ञत्वादि प्रतिषिध्यते । तेनैवास्मदभिमतसिद्धेरित्याशङ्क्य, अत्रार्थे उपदर्शितहेतवस्त्वाश्रयासिद्धत्वादिना दूषिता इति समाधत्ते — **तदेतदिति** । तदेव दर्शयति — **इष्टसिद्धिरित्या**दिना । प्रसिद्धे जीवरूपचेतने सर्वज्ञत्वनिषेधे सिद्धसाधनं, अप्रसिद्धे तन्निषेधे आश्रयासिद्धिः । हेत्वसिद्धिः, हेतोराश्रयविशेषितस्यासिद्धिरित्यर्थः । नन्वात्ममात्रपक्षीकरणे ईश्वरोऽपि सामान्यतस्सिद्ध्यतीत्याशङ्क्याह — **नान्येति** । उभयसिद्धयनुभयसिद्धिभ्यामन्या सामान्यतस्सिद्धिर्नास्तीर्थः । जीवानामुभयवादिसिद्धत्वादीश्वरस्योभयवाद्यसिद्धत्वात्कथं सामान्यतस्तत्सिद्धिः, कथं चाश्रयासिद्धिनिरास इति भावः । आत्मत्वजातेः पक्षी-

प्रमाणप्रतीतानां चेतनानां पक्षीकरणे सिद्धसाधनम् । ततोऽन्येषामसिद्धौ हेतोराश्रयासिद्धत्वम् । आत्मत्वमात्रेण सोऽपि सिद्ध इति चेत्; कोऽस्यार्थः ? किमात्मत्वेनोपलक्षिता सैव वस्तुगत्या सर्वज्ञविश्वकर्तृव्यक्तिः, अथ तदन्या, आत्मत्वमेव वा पक्षः ? । सर्वत्र पूर्वदोषानतिवृत्तेः । अथायमाशयः – आत्मत्वं न सर्वज्ञसर्वकर्तृव्यक्तिसमवेतं, जातित्वात् , गोत्ववदिति । तदसत् , निषेध्यासिद्धेर्निषेधस्याशक्यत्वात् । तथा चाऽप्रसिद्धविशेषणः पक्ष इत्याश्रयासिद्धिरिति स एव दोषः । त्वदुपगतागमलोकप्रसिद्धस्यैवेश्वरस्याऽसर्वज्ञत्वमकर्तृत्वञ्च साध्यते इति चेन्न ।

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥

निगदव्याख्यातमेतत् । चार्वाकस्त्वाह, किं योग्यताविशेषाग्रहेण? । यन्नोपलभ्यते तन्नास्ति, विपरीतमस्ति । न चेश्वरादयस्तथा । ततो न सन्तीत्येतदेव ज्यायः । एवमनुमानादिविलोप इति चेत् ; नेदमनिष्टम् । तथाच लोकव्यवहारोच्छेद इति चेन्न । सम्भावनामात्रेण तत्सिद्धेः । संवादेन च प्रामाण्याभिमानादिति । अत्रोच्यते –

---

करणे नोक्तदोषनिस्तार इत्यर्थः । सर्वज्ञत्वादेर्निषेध्यत्वेनाभिमतस्योभयवादिसम्प्रतिपन्नत्वाभावाद्विशेषणासिद्धौ साध्यविशिष्टस्याश्रयस्यासिद्धिरिति भावः । एतदेव विवृणोति — **प्रमाणेति** । तृतीयपादं व्याचिख्यासुरशङ्कते—**आत्मत्वेति** । विकल्प्य दूषयति—**कोऽस्यार्थ इति** । **पूर्वदोषेति** । प्रथमे हेत्वसिद्धिरिति स्यात् । द्वितीये इष्टसिद्धिः । तृतीयेऽप्यात्मत्वस्य सर्वज्ञत्वासर्वकर्तृकत्वयोस्सिद्धत्वात्सिद्धसाधनतैव । तुरीयपादं व्याख्यातुमाह — **अथेति** । **निषेध्येति** । सर्वज्ञस्येत्यर्थः । **निगदव्याख्यातमिति** । निगदः = पाठः, तेन व्याख्यातमित्यर्थः । चार्वाकशङ्कां निराकरोति—**उच्यत इति** । दृष्टयदृष्टयोर्भावावधारणात्क सन्देहः? । दर्शने सति भावावधारणाददर्शने चाऽभावावधारणाच्च न सन्देहस्सम्भवतीति

दृष्टयदृष्टयोः क्व सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

सम्भावना हि सन्देह एव । तस्माच्च व्यवहारस्तस्मिन् सति स्यात् । स एव तु कुतः? । दर्शनदशायां भावनिश्चयात्, अदर्शनदशायामभावावधारणात् । तथाच गृहात् बहिर्गतश्चार्वाको वराको न निवर्तेत । प्रत्युत, पुत्रदारधनाद्यभावावधारणात् सोरस्ताडं शोकविकलो विक्रोशेत् । स्मरणानुभवान्नैवमिति चेन्न । प्रतियोगिस्मरण एवाऽभावपरिच्छेदात्, परावृत्तोऽपि कथं पुनरासादयिष्यति । सत्त्वादिति चेत्; अनुपलम्भकालेऽपि तर्हि सन्तीति न तावन्मात्रेणाभावावधारणम् । तदैवोत्पन्ना इति चेन्न । अनुपलम्भेन हेतूनां बाधात् । अबाधे वा स एव दोषः । अत एव प्रत्यक्षमपि न स्यात्, तद्धेतूनां चक्षुरादीनामनुपलम्भबाधितत्वात् । उपलभ्यन्त एव गोलकादय इति चेन्न । तदुपलब्धेः पूर्वं तेषामनुपलम्भात् । न च यौगपद्यनियमः । कार्यकारणभावादिति ।

एतेन न परमाणवः सन्ति, अनुपलब्धेः । न ते नित्या निरवयवा वा, पार्थिवत्वात् घटादिवत् । न पार्थिवीयपरमाणुरूपादयो नित्याः, रूपादित्वात्, दृश्यमानरूपादिवत् । न रूपत्वपार्थिवत्वादि नित्याऽकार्यातीन्द्रियसमवायि, जातित्वात्, शृङ्गत्ववत् । नेन्द्रियाणि सन्ति, योग्यानुपलब्धेः । अयोग्यानि च शशशृङ्गप्रतिबन्धिनिरसनीयानीत्येवं स्वर्गापूर्वदेवतानिराकरणं नास्तिकानां निरसनीयम् ।

संशयरूपसंभावनावशान्न व्यवहारसिद्धिः । अतस्तदर्थमनुमानादिकमेवेष्टव्यम् । तच्चानुपलब्धिमात्रेणाभावनिर्णये न सम्भवति । मास्त्वनुमानादिकं प्रत्यक्षेणैवोपपत्तिरित्यपि वक्तुं न शक्यते । प्रत्यक्षहेतौ चक्षुरादिकेऽनुपलब्धिबाधिते सति कारणाभावात्तस्यापि दुर्लभत्वापत्तेरिति कारिकार्थः । **प्रतियोगिस्मरणेति** । प्रतियोगिस्मरणसहकृतानुपलम्भस्यैवाभावनिश्चयहेतुत्वादित्यर्थः । **अनुपलम्भेनेति** । पुत्राद्युत्पत्तिहेतूनामनुपलम्भेनाभावनिश्चयादित्यर्थः । **स एव दोष इति** । नाऽनुपल-

मीमांसकश्च तोषयितव्यो भीषयितव्यश्चेति। यद्येवमनुपलम्भेनादृश्यप्रतिषेधो नेष्यते, अनुपलभ्योपाधिप्रतिषेधोऽपि तर्हि नेष्टव्यः । तथाच कथं तथाभूतार्थसिद्धिरपि । अनुमानबीजप्रतिबन्धासिद्धेः । तदभावे शब्दादेरप्यभावः, प्रामाण्यासिद्धेः । सोऽयमुभयतःपाशा रज्जुः । अत्र कश्चिदाह । मा भूदुपाधिविधूननं, चतुःपञ्चरूपसम्पत्तिमात्रेणैव प्रतिबन्धनिर्वाहात् । तस्याश्च सपक्षाऽसपक्षदर्शनादर्शनमात्रप्रमाणकत्वात् । यत्र तु तद्भङ्गः तत्र प्रमाणभङ्गोऽप्यावश्यकः । न ह्यस्ति सम्भवो दर्शनादर्शनयोरविप्लवे हेतुरुपप्लवते इति । अप्रयोजकोऽपि तर्हि हेतुः स्यादिति चेत् ; भूयोदर्शनाऽविप्लवे कोऽयमप्रयोजको नाम? । न तावत् साध्यं प्रत्यकार्यमकारणं वा, सामान्यतो दृष्टानुमानस्वीकारात् । नाऽपि सामग्र्यां कारणैकदेशः, पूर्ववदभ्युपगमात् । नापि व्यभिचारी, तदनुपलम्भात् । व्यभिचारोपलम्भे वा स एव दोषः । न च शङ्कित-

म्भमात्रेणाभावावधारणामिति पूर्वोक्तदोष एवेत्यर्थः । **मीमांसक इति** । स्वर्गाद्यनिराकरणेन तोषणं, ईश्वरानिराकरणेन भीषणश्चेति भावः । नन्वनुपलम्भमात्राद्यद्यभावानिश्चयस्तर्ह्यनुपलभ्यमानोपाधिसद्भावशङ्कया व्याप्त्यसिद्धयाऽनुमानासिद्धौ नेश्वरसिद्धिरिति शङ्कते — **यद्येवमिति** । एकदेशिमतं दूषयितुमाह — **कश्चिदाहेति** । **चतुःपञ्चरूपसम्पत्तीति** । केवलान्वयिनि विपक्षाभावात्पक्षसत्त्वसपक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि । केवलव्यतिरेकिण्यपि सपक्षाभावात्पक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि । अन्वयव्यतिरेकिणि तु सपक्षविपक्षयोरसम्भवात्पञ्चरूपाणि सम्भवन्ति । एवं रूपसम्पत्त्यवधारणे तूपाधिविधूननं निष्फलमित्याह — **तस्या इति** । **तद्भङ्गः**— रूपसम्पत्तिभङ्गः । **प्रमाणभङ्गोऽपीति** । दर्शनादर्शनात्मकप्रमाणभङ्ग इत्यर्थः । प्रमाणभङ्गस्यावश्यकत्वमेवाह — **न हीति** । स एवाप्रयोजकत्वेन सम्भावितविशेषानाशङ्क्य दूषयति — **न तावदित्यादिना** । कार्यं कारणं सामान्यतोदृष्टश्चेति

१. असत्यनुमाने तद्ग्राह्यप्रामाण्यं शब्दाद्यपि नेश्वरे प्रमाणं स्यात् । प्रमाणागम्यश्च पदार्थस्तुच्छ इति तत्त्वविदां मतम् । २. उभयतः स्पाशा इति पाठः ।

**व्यभिचारः, निर्बीजशङ्कायाः, सर्वत्र सुलभत्वात्। नाऽपि व्याप्यान्तरसहवृत्तिः। एकत्राऽपि साध्येऽनेकसाधनोपगमात्। नाप्यल्पविषयः, धूमादेस्तथाभावेऽपि हेतुत्वात्।**

**ननु धूमो वह्निमात्रे अप्रयोजक एव, तन्निवृत्तावपि तदनिवृत्तेः। आर्द्रेन्धनवन्तं वह्निविशेषं प्रति तु प्रयोजकः, तन्निवृत्तौ तस्यैव निवृत्तेरित्येतदप्ययुक्तम्। सामान्याप्रयोजकतायां विशेषसाधकत्वायोगात्तदसिद्धौ तस्यासिद्धिनियमात्। सिद्धौ वा सामान्यविशेषभावानुपपत्तेः। नाऽपि क्लृप्तसामर्थ्येऽन्यस्मिन् कल्पनीयसामर्थ्योऽप्रयोजकः, नाशे कार्यत्वसावयवत्वयोरपि हेतुभावादिति। तदेतदपेशलम्। कथं हि विशेषाभावात्, कश्चिद्व्यभिचरति कश्चिच्च नेति शक्यमवगन्तुम्। ततो निर्णायकाभावे सति साहित्यदर्शनमेव शङ्काबीजमिति क्वासौ निर्बीजा। एवं सत्यतिप्रसक्तिरपि[1] चार्वाकनन्दिनी नोपालम्भाय।**

---

त्रिविधं लिङ्गम्। एवञ्चाकारणमकार्यमप्यप्रयोजकं न भवति। तस्य सामान्यतोदृष्टेऽन्तर्भावात्। व्यभिचारस्यानुपलम्भे व्यभिचार्यपि नाप्रयोजकः। तदुपलम्भे स एव दोषः स्यात्। **अल्पविषय इति**। अल्पविषयत्वञ्च व्यापकत्वनिष्ठात्यन्ताभावप्रतियोगित्वम्। धूमस्य वह्निसामान्यगमकत्वं नास्त्येव। किं तु वह्निविशेषे आर्द्रेन्धनप्रभववह्नावेव। तयोश्च समविषयत्वमेवेत्याशङ्क्य, विशेषव्याप्त्यैव सामान्यव्याप्तिरपि सिद्ध्यतीत्याह – **सामान्याप्रयोजकतायामित्यादिना**। **कार्यत्वसावयवत्वयोरिति**। गुणादिनाशे भावकार्यत्वस्य प्रयोजकत्वेऽपि द्रव्यनाशे सावयवकार्यत्वस्याऽपि प्रयोजकत्वाङ्गीकारादिति भावः। शङ्कितव्यभिचारस्याप्रयोजकत्वादुपाधिविधूननमन्तरा व्यभिचारशङ्काया अनिरासाद्भूयोदर्शनमात्रेण शङ्कैवोदेति, न व्याप्तिनिश्चय इत्याशयेनैतन्मतं दूषयति – **तदेतदिति**। भूयोदर्शने सत्यपि यदि व्यभिचारशङ्का स्यात्तर्हि सर्वत्र स्यादित्यतिप्रसक्तिश्चार्वाकस्यानुमानमात्राप्रामाण्यवादिनस्तोषायैवेत्याह – **एवं सतीति**।

---

१. "अवश्यं शङ्कया भाव्यं नियामकमपश्यतामि" ति चार्वाकोक्तातिप्रसक्तिर्नोपालम्भाय, शङ्काबीजस्य सहचारदर्शनस्य सत्त्वात्।

स्वभावादेव कश्चित् किञ्चिद्व्यभिचरति, कश्चिच्च नेति स्वभाव एव विशेष इति चेत्; केन चिह्नेन पुनरसौ निर्णेय इति निपुणेन भावनीयम्। भूयोदर्शनस्य शतशः प्रवृत्तस्यापि भङ्गदर्शनात्। यत्र भङ्गो न दृश्यते तत्र तथेति चेत्; आपाततो न दृश्यते इति सर्वत्र कालक्रमेणापि न द्रक्ष्यते इति को नियन्तेति। तस्मादुपाधितद्विरहावेव व्यभिचाराऽव्यभिचारनिबन्धनं, तदवधारणञ्चाशक्यमिति।

ननु यः सर्वैः प्रमाणैः सर्वदाऽस्मदादिभिर्यद्वत्तया नोपलभ्यते नासौ तद्वान्। यथा बकः श्यामिकया नोपलभ्यते च वह्नौ धूम उपाधिमत्तयेति शक्यमिति चेन्न। अस्याप्यनुमानतया तदपेक्षायामनवस्थानात्। सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः, सर्वदेत्यसिद्धेः।

तादात्म्यतदुत्पत्तिभ्यां नियम इत्यन्ये। तत्र तादात्म्यं विपक्षे बाधकाद्भवति। तदुत्पत्तिश्च पौर्वापर्येण प्रत्यक्षानुपलम्भाभ्याम्।

---

उपसंहरति – **तस्मादिति**। ननु वह्नौ धूमो नोपाधिमान, तद्वत्तयाऽनुपलभ्यमानत्वादित्यनेनोपाधिनिषेधस्सिद्ध्यतीत्याशङ्क्य, अस्याप्यनुमानत्वेनात्राप्युपाधिविधूननापेक्षायामनुमानान्तरानुसरणे अनवस्थेत्याह — **अस्याप्यनुमानतयेति**। किञ्चात्रोपाधिमत्तया अनुपलभ्यमानत्वमित्यत्र सर्वैः सर्वदाऽनुपलभ्यमानत्वं निश्चेतुमशक्यमिति सन्दिग्धासिद्धो हेतुः। स्वेनानुपलभ्यमानत्वं व्यभिचारिसाधारणमेवेत्याह – **सर्वादृष्टेरित्यादिना**। **असिद्धेरिति**। कदाचिदुप्युपाधिर्न द्रक्ष्यते इति निश्चेतुमशक्यत्वादिति भावः।

एवमेतन्मतं दूषयित्वा सम्प्रति बौद्धमतं निराकर्तुमुपन्यस्यति – **तादात्म्येति**। अयं भावः – यस्य य आत्मा कार्यं वा ताभ्यां तस्याविनाभाव आवश्यकः। अन्यथा तदात्मकत्वव्याघातात्, कार्यकारणभावभङ्गप्रसङ्गाच्च। उक्तं च — 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमः' इति। अवृक्षे शिलादौ शिंशुपात्वस्यानुपलब्धिबाधितत्वाद्वृक्षः शिंशुपात्वेन निश्चीयत इति विपक्षबाधकेन तादात्म्यनिश्चयः। प्रत्यक्षानुपलम्भाभ्यां चोत्पत्तिनिश्चयः। प्रत्यक्षानुपलम्भपञ्चकेन तदुत्पत्तिनिश्चय इति बौद्धमतम्। तथाहि – पौर्वापर्येण वह्निधूमयोरुपलम्भद्वयम्। वह्न्यनुपलम्भे धूमानुपलम्भः। अन्यो-

**न ह्येवं सति शङ्कापिशाच्यवकाशमासादयति, आशङ्क्यमानकारणभावस्यापि पिशाचादेरेतल्लक्षणाविरोधेनैव तत्त्वनिर्वाहादिति। न। एवमप्युभयगामिनोऽव्यभिचारनिबन्धनस्यैकस्याऽविवेचनात्, प्रत्येकं चाव्यापकत्वात्। कुतश्च कार्यात्मानौ कारणमात्मानञ्च न व्यभिचरत इति। अत्रोच्यते—**

**शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम्।**
**व्याघातावधिराशङ्का तर्कः शङ्काऽवधिर्मतः॥ ७॥**

---

पलम्भेऽपि धूमानुपलम्भ इत्यनुपलम्भत्रयमिति मिलित्वा पञ्चकं सम्पन्नम्। एतन्मते प्रत्यक्षानुपलम्भाभ्यां कारणत्वनिर्णयात्कारणत्वेनाशङ्क्यमानस्यान्यपिशाचादेरपि निरुक्तकारणतानिर्णायकसत्त्वे तस्यापि कारणत्वमग्नीन्धनादीनामिव स्यादेव। वस्तुतस्तु तदभावान्नास्तीति निगर्वः। एतन्मतं दूषयति — **नेति**। तादात्म्योत्पत्योरनुगतव्याप्तिग्राहकतावच्छेदकरूपाभावान्न तयोस्तत्सम्भवः। तादात्म्याभावेऽप्युत्पत्तेरुत्पत्त्यभावेऽपि तादात्म्येन च व्याप्तिग्रहसम्भवात् व्यभिचारेण न प्रत्येकमपि तत्सम्भवः। किञ्चोपाधिविधूननमन्तरा कार्यात्मानौ कारणमात्मानञ्च न व्यभिचरत इति निश्चय एव दुर्घटः। विपक्षबाधकतर्कस्यापि व्याप्त्यपेक्षत्वात्। एवमनुमानं व्याप्तिनिश्चयमूलम्। व्याप्तिनिश्चयश्चोपाधिनिषेधमूलकः। निषेधश्च योग्यानुपलब्ध्यभावान्न सम्भवति। अनुपलब्धिमात्रान्न निषेध इति त्वयैव साधितम्। तथाचानुमानमात्रोच्छेद इति चार्वाके प्रत्यवस्थिते सिद्धान्तमाह — **अत्रोच्यत** इति।

हेतौ निरुपाधिकत्वस्य दुरवधारणीयतयाऽनुमानमात्रोच्छेदप्रसङ्ग इति शङ्काऽस्तिचेदनुमाप्यस्त्येव। तदानीं वह्निसहचरिततया तत्र देशे दृष्टस्यापि धूमस्य कालान्तरे देशान्तरे वा व्यभिचारशङ्कायां सत्यां कालान्तरस्य देशान्तरस्य वाऽनुमानावसेयत्वादिति भावः। न चेच्छङ्का व्यभिचारस्य तदा व्याप्तिज्ञानविघटकाभावात् व्याप्तिनिश्चये सुतरामेवाऽनुमा निष्प्रत्यूहा। एवं जल्पेन चार्वाकं निराकृत्य विनेयानुद्दिश्याह — **व्याघातेति**। अयं भावः — यत्र व्यभिचारशङ्का नास्ति तत्र विनैव तर्कं सहचारग्रहाद्व्याप्तिनिश्चयः। यत्र च व्यभिचारशङ्का तत्र विपक्ष-

कालान्तरे कदाचिद्व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्क्येत। तदाकलनञ्च नानुमानमन्तर्धीयं कस्याचित्। मुहूर्तयामाऽहोरात्रपक्षमासर्त्वयनसंवत्सरादयो हि भाविनो भवन्मूहूर्ताद्यनुमेया एव। अनवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वात्। अनाकलने वा, कमाश्रित्य व्यभिचारः शङ्क्येत? तथा च सुतरामनुमानस्वीकारः। एवञ्च देशान्तरेऽपि वक्तव्यम्। स्वीकृतमनुमानम्। सुहृद्भावेन पृच्छामः, कथमाशङ्का निवर्तनीया? इति चेन्न। यावदाशङ्कं तर्कप्रवृत्तेः। तेन हि वर्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयतेच्छा विच्छिद्यते। विच्छिन्नाविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलोऽधितिष्ठति, अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिरिति किमनुपपन्नम्?।

ननु तर्कोऽप्यविनाभावमपेक्ष्य प्रवर्तते, ततोऽनवस्थया भवितव्यम्। न। शङ्काया व्याघातावधित्वात्। तदेव ह्याशङ्क्यते, यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्यादा। न हि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते। तथा सति शङ्कैव न स्यात्, सर्वं मिथ्या भविष्यतीत्यादिवत्। तथापि अतीन्द्रियोपाधिनिषेधे किं प्रमाणमित्युच्यतामिति चेत्; न वै कश्चिदती-

---

बाधकतर्केण व्यभिचारशङ्काविधूनने व्याप्तिनिश्चयः। ननु तर्कस्यापाद्यापादकयोर्व्याप्तिनिश्चयमूलकतया तत्रापि व्यभिचारशङ्कायां का गतिः। अनवस्थाभिया तर्कान्तरानुसरणस्याप्ययोगादिति चेत्तर्कमूलभूतव्याप्तौ स्वप्रवृत्त्यादिव्याघातेन तत्र व्यभिचारशङ्कैव नोदेति, शङ्काया व्याघातावधित्वादिति। एतदेव विवृणोति— **कालान्तरे**त्यादिना। तथा सति शङ्कैव न स्यादिति। शङ्काया अपि कस्यचित्कार्यत्वेन कार्यकारणभावाभावे सैव न स्यादित्यर्थः। **सर्वं मिथ्येति**। यथा सर्वं मिथ्येति शङ्का नोत्पत्तुमर्हति, स्वस्यापि सर्वान्तर्गतत्वेन मिथ्यात्वात्। एवमियमपि

---

१. संशयजनितसाध्याभाववति जिज्ञासा निवर्त्यते। तज्जनकसंशयसहिता इति शेषः। अन्यथा जिज्ञासायामपगतायामपि सति संशये व्याप्त्यग्रहात्।

न्द्रियोपाधिः प्रमाणसिद्धोऽस्ति, यस्याभावे प्रमाणमन्वेषणीयम्। केवलं साहचर्ये निबन्धनान्तरमात्रं शङ्क्यते । ततः शङ्कैव फलतः स्वरूपतश्च निवर्तनीया । तत्र फलमस्याविपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्तते । ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम् ! न चैतदनागमं, न्यायाङ्गतया तर्कं व्युत्पादयतः सूत्रकारस्याभिमतत्वात्। अन्यथा तद्व्युत्पादनवैयर्थ्यात् । तदयं संक्षेपः — यत्रानुकूलतर्को नास्ति सोऽप्रयोजकः। स च द्विविधः, शङ्कितोपाधिर्निश्चितोपाधिश्च । यत्रेदमुच्यते—

यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावत् हेतोर्गमनिकाबलम् ॥

तत्रोपाधिस्तु, साधनाव्यापकत्वे सति साध्यव्यापकः । तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते इति । तदिदमाहुः —

---

शङ्का न भवतीति भावः । तर्कस्योपयोगमाह — **केवलमित्यादिना** । अयं भावः— न खलु भूयोदर्शनमात्राद्व्याप्तिनिश्चयः । किन्तु सहचारदर्शने 'साहचर्यमिदं कारणान्तरप्रयुक्तमुत स्वाभाविकमि'ति शङ्का भवति । तया च व्यभिचारशङ्का भवतीति सैव फलम्। सा च व्यभिचारशङ्का विपक्षबाधकतर्केण निवर्तते । ततश्च व्याप्तिनिश्चयः । तदनन्तरं प्राथमिकशङ्कानिवृत्तिरिति । अत्रार्थे सूत्रकारसंमतिमाह — **न चैतदिति**। तर्कलक्षणसूत्रे वादसूत्रे च तर्कस्य प्रमाणानुग्राहकत्वेन न्यायाङ्गत्वं प्रतिपादितमिति भावः । भूयोदर्शने सति कोऽयमप्रयोजको नामेत्यत्रोत्तरयन् शिष्यानुकम्पया विस्तरतः प्रतिपादितमर्थं संग्रहेणाह — **तदयमिति** । शङ्कितोपाधेरप्रयोजकत्वे मीमांसकसंमतिमाह — **यावदिति** । पक्षस्य विपक्षाव्यतिरेकित्वं यावच्छङ्क्यते तावत् हेतोर्गमनिका नास्तीत्यर्थः । उपाधिशब्दप्रवृत्तिनिमित्तमाह— **तद्धर्मभूतेति** । स्वसन्निहिते धर्मिणि स्वधर्मप्रतिभासकत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति भावः । अत्रापि वृद्धसम्मतिमाह — **तदिदमिति** । अन्ये हेतवः परप्रयुक्ता-

---

१. 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः' इति तर्कलक्षणसूत्रे, 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' इति वादलक्षणसूत्रे च तर्कस्य प्रमाणानुग्राहकन्यायाङ्गत्वं सूत्रकृता प्रत्यपादि ।

'अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशाऽवधारणा' ॥ इति ।

तदनेन विपक्षदण्डभूतेन तर्केण सनाथे भूयोदर्शने, कार्यं वा, कारणं वा, ततोऽन्यद्वा, समवायि वा, संयोगि वा, अन्यथा वा, भावो ऽभावो वा, सविशेषणं वा, निर्विशेषणं वा लिङ्गमिति निःशङ्कमवधारणीयम् । अन्यथा तदाभास इति रहस्यम् ।

तादात्म्यतदुत्पत्त्योरप्येतदेव बीजम् । यदि कार्यात्मानौ कारणमात्मानश्चातिपतेतां, तदा तयोस्तत्त्वं व्याहन्येत । अत एव सामग्रीनिवेशिनश्चरमकारणादपि कार्यमनुमिमते सौगता अपि । तस्माद्विपक्षबाधकमेव प्रतिबन्धलक्षणम् । तथाहि — शाकाद्याहारपरिणतिविरहिणि मित्रातनये न किञ्चिदनिष्टमिति नासौ तस्य व्यापिका । व्यापिका तु श्यामिकायाः कारणत्वावधारणात् । कारणञ्च तत् तस्य, तदतिपत्य भवति चेति व्याहतम् । एवमन्यत्राप्यूहनीयमिति ।

---

नामुपाधिप्रयुक्तानां व्याप्तीनामुपजीवकाः । उपाधिनिष्ठव्याप्त्युपरक्ततया भासन्त इत्यर्थः । तादात्म्यतदुत्पत्तिभ्यां व्याप्तिनिश्चय इति ये वदन्ति तेषामपि तर्क एव व्यभिचारशङ्काविघटक इत्याह — **तादात्म्येति** । तत्रानुकूलतर्कमाह — **यदि कार्यात्मानाविति** । बौद्धाभ्युपगममाह — **अत एवेति** । **चरमकारणादपीति** । चरमकारणमात्रादपीत्यर्थः । उपसंहरति — **तस्मादिति** । **प्रतिबन्धलक्षणमिति** । लक्ष्यते अनेनेति व्युत्पत्त्या प्रतिबन्धबोधकमित्यर्थः । विपक्षबाधकस्तर्कः व्याप्तिनिर्णायक इति भावः । एवं विपक्षबाधकतर्काद्व्याप्तिनिर्णय इत्युक्त्वा तदभावे न व्याप्तिनिर्णय इत्याह — **तथा हीत्यादिना** । असौ = शाकाहारपरिणतिः, तस्य मित्रातनयत्वस्य ।

---

१. 'अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकमि' ति कणादोक्तं सर्वमपि हेतुजातं पर्यग्राहि । एवञ्च कार्यकारणभावादेव वा स्वाभावादेव वाऽविनाभावनियम इति बौद्धप्रलापः पराहतः ।

**क्व पुनरप्रयोजकोऽन्तर्भवति ? । न क्वचिदित्येके । यथाहि सिद्धसाधनं न बाधितविषयं, विषयापहाराभावात् । नापि निर्णये सति पक्षत्वातिपातादपक्षधर्मः । कालातीतविलोपप्रसङ्गात् । न चानैकान्तिकादिः, व्यभिचाराद्यभावात् । तथाऽयमपि । सूत्रं[1] तूपलक्षणपरमिति ।**

**तदसत् । विभागस्य न्यूनाधिकसंख्याव्यवच्छेदफलत्वात् । क्व तर्हि द्वयोरन्तर्निवेशः? । असिद्ध एव । व्याप्तस्य हि पक्षधर्मताप्रतीतिः सिद्धिः । तदभावोऽसिद्धिः । इयञ्च व्याप्तिपक्षधर्मतास्वरूपाणामन्यतमाप्रतीत्या भवन्ती यथासङ्ख्यमन्यथासिद्धिराश्रयासिद्धिः, स्वरूपासिद्धिरित्याख्यायते । मध्यमाऽप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या वेति द्वयी । तत्र चरमा सिद्धसाधनमिति व्यपदिश्यते । व्याप्तिस्थितौ पक्षत्वस्याहत्य विघटनात् । न त्वेवं बाधे, व्याप्तेरेव प्रथमं विघटनादिति विशेषः ।**

---

प्रसङ्गादप्रयोजकस्यान्तर्भावं पृच्छति — **क्व पुनरिति** । यथा सिद्धसाधनस्य व्यभिचारादिष्वनन्तर्भावेऽपि हेत्वाभासत्वमेवमस्यापीत्येकदेशिमतमाह — **न क्वचिदि**त्यादिना । एषामयमाशयः — सिद्धसाधनस्य विषयापहाराऽभावान्न बाधितेऽन्तर्भावः । न च सन्दिग्धसाध्यवतः पक्षत्वेन साध्यसिद्धौ संशयाभावात्पक्षतारूपपक्षधर्मविघटकत्वेनासिद्धावन्तर्भाव इति वाच्यम् । तथा सति बाधनिश्चयकालेऽपि निरुक्तपक्षताविरहेण बाधस्याप्यसिद्धावन्तर्भावप्रसङ्गात् । तस्मात्सिद्धसाधनं स्वतन्त्रमेव हेतुदूषणम् । एवमप्रयोजकत्वमपि । सूत्रे पञ्चत्वकथनमनयोरुपलक्षणमिति । अनयोरसिद्धेऽन्तर्भावादेकदेशिमतमनुचितमिति प्रतिपादयन्नेवाऽसिद्धिघटकसिद्धिस्वरूपमाह— **व्याप्तस्य हीति** । सिद्धसाधनस्याश्रयासिद्धावन्तर्भावमुक्त्वा बाधवैलक्षण्यमाह — **न त्वेवमिति** । अयं भावः — व्याप्तिनिश्चये सत्येव सिद्धसाधनं पक्षतां विघटयति । बाधस्थले तु व्याप्तिरेव प्रथमं विहन्यते । तदनन्तरं विपरीतनिर्णये सति पक्षताविघटनमिति विशेषात् । एवमप्रयोजकोऽपि व्याप्यत्वासिद्धेऽन्तर्भवतीति । अप्रयोजकस्य सन्दिग्धानैकान्तिकेऽन्तर्भाववादिनां

---

१. 'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः' (न्या०. १-२-४) इति सूत्रम् ।

यत्त्वप्रयोजकः सन्दिग्धानैकान्तिक इत्यनैकान्तिकेऽन्तर्भाव्यते, तदसत्। व्याप्त्यसिद्ध्या हि निमित्तेन व्यभिचारः शङ्कनीयोऽन्यथा वा ?। प्रथमे असिद्धिरेव दूषणमुपजीव्यत्वात्। नाऽनैकान्तिकमुपजीवकत्वात्। अन्यथाशङ्का त्वदूषणमेव, निर्णीते तदनवकाशादिति।

उपमानं तु बाधकमनाशङ्कनीयमेव, विषयानतिरेकादिति केचित्। तथाहि – न तावदस्य विषयः सादृश्यव्यपदेश्यं पदार्थान्तरमेव सम्भावनीयम्।

परस्परविरोधे हि न प्रकारान्तरस्थितिः।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः॥ ८॥

न हि भावाभावाभ्यामन्यः प्रकारः संभावनीयः, परस्परविधिनिषेधरूपत्वात्। न भाव इति निषेधमात्रेणैवाभावविधिः। ततस्तं विहाय कथं स्ववचनेनैव पुनः सहृदयो निषेधेन्नाभाव इति। एवं नाभाव इति निषेध एव भावविधिः। ततस्तं विहाय स्ववाचैवानुन्मत्तः कथं पुनर्निषेधेन्न भाव इति। अत एवम्भूतानामेकताऽप्यशक्यप्रतिपत्तिः, प्रतिषेधविध्योरेकत्रासंभवात्। तस्माद्भावाभावावेव तत्त्वम्।

---

मतं दूषयति — **तदसदिति**। अयं भावः — किं व्याप्त्यसिद्धिं निमित्तीकृत्य व्यभिचारः शङ्क्यते, उतान्यथा। प्रथमे उपजीव्यत्वादसिद्धिरेव दूषणम्। द्वितीये व्याप्तिसिद्ध्युत्तरं व्यभिचारशङ्कैव नोदेतीति। एवं प्रत्यक्षानुमानयोस्तदबाधकत्वमुक्त्वा उपमानस्याप्यबाधकत्वमुपपादयितुमादौ क्लृप्तप्रमाणविषयातिरिक्तविषयाभावादुपमानस्य प्रमाणान्तरत्वमेव नास्ति। कुतस्तस्य बाधकत्वमिति वादिनां मतमुपन्यस्यति – **उपमानं त्विति**। नन्वतिरिक्तस्य सादृश्यस्य तद्विषयत्वात्तस्यातिरिक्तप्रमाणत्वं निराबाधमित्याशङ्क्य सादृश्यस्यातिरिक्तपदार्थत्वमेव न सिद्ध्यतीत्याह – **न तावदस्येत्यादिना**। अयं भावः – भावनिषेधेऽभावविधिः। अभावनिषेधे भावविधिः, भावाभावयोः परस्परप्रतिक्षेपकत्वसरूपात्। इत्थञ्च भावाऽभावयोरनन्तर्गतः कोऽपि पदार्थो न सम्भवति। विरोधादुभयात्मकत्वमपि न सम्भवतीति। विरोधादेव सगुणनिर्गुणव्यतिरेकेण प्रकारान्तरासम्भवादुभयात्म-

भावत्वेऽपि गुणवन्निर्गुणं वेति द्वयमेव पूर्ववत् । पूर्वं द्रव्यमेव । उत्तरश्चाश्रितमनाश्रितं वेति द्वयमेव, पूर्ववत् । तत्रोत्तरं समवाय एव, अनवस्थाभयात् । आश्रितन्तु सामान्यवन्निःसामान्यश्चेति पूर्ववत् द्वयमेव । तत्र प्रथममपि स्पन्दोऽस्पन्द इति द्वयमेव । एतच्च यथासंख्यं कर्मगुण इति व्यपदिश्यते । निःसामान्यं निर्गुणमाश्रितन्त्वेकाश्रितमनेकाश्रितं वेति प्रागिव द्वयमेव । एतदपि यथासंख्यं विशेषः सामान्यश्चेत्यभिधीयते । तदेतत्सादृश्यमेतास्वेकां विधामासादयन्नातिरिच्यते । अनासादयन्न पदार्थीभूय स्थातुमुत्सहते । एतेन शक्तिसंख्यादयो व्याख्याताः । ततोऽभावेन सह सप्तैव पदार्था इति नियमः । अतो नोपमानविषयोऽर्थान्तरमिति ।

स्यादेतत् । भवतु सामान्यमेव सादृश्यं, तदेव तस्य विषयः स्यात् । तत्सदृशोऽयमिति हि प्रत्ययो नेन्द्रियजन्यः, तदापातमात्रेणाऽनुत्पत्तेरिति चेन्न । पूर्वपिण्डानुसन्धानुरूपसहकारिवैधुर्येणानुत्पत्तेः, सोऽयमिति प्रत्यभिज्ञानवदिति । नन्वेतत्सदृशः स इति नेन्द्रियजन्यं,

---

कत्वासम्भवाच्च क्लृप्तषड्भावातिरिक्तत्वमपि न सम्भवतीत्याह – **भावत्वेऽपीत्या-दिना** । **अनाश्रितमिति** । असमवायीत्यर्थः । उपसंहरति – **अत इति** ।

एवं तत्त्वान्तरभूतसादृश्यविषयमुपमानमिति प्रभाकरमतं निराकृत्य भाट्टमतं निराकर्तुमुपन्यस्यति – **स्यादेतदित्यादिना** । अयं भावः – तद्भिन्नत्वे सति तद्गतभूयोधर्मसमानधर्मवत्त्वं सादृश्यम् । तच्च न प्रत्यक्षविषयः, इन्द्रियसन्निकर्षेऽपि तदज्ञानात् । नाप्यनुमानस्य, लिङ्गाद्यज्ञानेऽपि तज्ज्ञानादिति । सादृश्यघटकीभूततद्भिन्नत्वांशस्य प्रतियोगिज्ञानाभावदशायामगृहीतत्वेऽपि प्रतियोगिज्ञानसहकृतेन्द्रियेणैव तत्प्रत्यक्षोपपत्तौ न तदर्थं प्रमाणान्तरकल्पनमित्याह — **पूर्वपिण्डेत्या-दिना** — **प्रत्यभिज्ञानवदिति** । तत्तास्मरणसहकृतेन्द्रियस्य प्रत्यभिज्ञाजनकत्वमिवेत्यर्थः । ननु तत्सदृशोऽयमिति प्रत्यक्षसंभवेऽपि 'एतत्सदृशः स' इति प्रत्यक्षं न संभवति, तच्छब्दार्थस्यासन्निकृष्टत्वात् । सादृश्यविशिष्टस्य तस्य पूर्वमननुभवात्तस्य स्मरणमपि न संभवति । प्रत्यभिज्ञास्थले धर्मिण ऐक्यात्तस्य चेन्द्रियसन्नि-

तेन तस्यासम्बन्धात्। न चेदं स्मरणं, तत्पिण्डानुभवेऽपि विशिष्टस्याऽननुभवात्। न चैतदपि, 'अयं स' इति विपरीतप्रत्यभिज्ञानवदुपपादनीयम्। तत्तेदन्तोपस्थापनक्रमाविपर्ययेऽपि विशेष्यस्येन्द्रियेण सन्निकर्षाविरोधात्। तस्य सन्निहितवर्तमानगोचरत्वात्। प्रकृते तु तदभावात्। तस्मात् तत्पिण्डस्मरणसहायमेतत्पिण्डवर्तिसादृश्यज्ञानमेव तथाविधं ज्ञानमुत्पादयदुपमानं प्रमाणमिति। एतदपि नास्ति।

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते।

अर्थापत्तिरसौ व्यक्तमिति चेत्प्रकृतं न किम्? ॥९॥

यदा हि 'एतद्विसदृशोऽसौ' इति प्रत्येति, तत्रापि तुल्यमेतत्। न हि तत्प्रत्यक्षमसन्निकृष्टविषयत्वात्। न स्मरणम्, विशिष्टस्याननुभवात्। नोपमानमसादृश्यविषयत्वात्। नन्वेतद्धर्माभावविशिष्टत्वमेव तस्य वैधर्म्यं, तच्चाभावगम्यमेवेष्यते। न च प्रकृतेऽपि तथाऽस्तु, सादृश्यस्य भावरूपत्वादिति चेन्न। इतो व्यावृत्तधर्मविशिष्टताया अपि वैधर्म्यरूपत्वात्। तस्य च भावरूपत्वात्।

स्यादेतत्। तद्धर्मा इह न सन्तीत्यवगते, अर्थादापद्यते इहाऽविद्यमानास्तत्र सन्तीति। न हि तद्विधर्मत्वमेतस्योपपद्यते, यद्येतद्वि-

---

कृष्टत्वात् "अयं सः, सोयमि" त्युभयविधाऽपि प्रत्यभिज्ञा इन्द्रियजन्या भवितुमर्हति। प्रकृते 'एतत्सदृशः सः' इति ज्ञानस्योपपादकतया उपमानं प्रमाणान्तरमित्याशङ्क्य निराकरोति — एतदपीत्यादिना। अयं भावः — यद्यसन्निहितपिण्डगतसादृश्यगोचरप्रमित्युत्पादकतयोपमानस्य प्रमाणान्तरत्वमेवं तद्गतवैधर्म्यगोचरप्रमित्युत्पादकस्यापि प्रमाणान्तरत्वमापद्येत। नन्वसन्निहितपिण्डगतवैधर्म्यं नाम सन्निहितपिण्डगतसाधर्म्याभावः। तथाच वैधर्म्यस्याऽभावरूपतयाऽभावग्राहकप्रमाणेनैव तद्ग्रहणोपपत्तेर्न प्रमाणान्तरस्वीकार इतिचेत्; मैवम्। पुरोवृत्तिधर्मिव्यावृत्तधर्मरूपवैधर्म्यस्य भावरूपस्यापि संभवात्। ननु पुरोवृत्तिधर्मिणि असन्निहितपिण्डवैधर्म्यज्ञानमसन्निहिते धर्मिण्येतद्वैधर्म्यमन्तराऽनुपपन्नं सत् तस्य कल्पकमित्यर्थापत्त्या

धर्मोऽसौ न भवतीति चेत्; एवं तर्हि प्रकृतमप्यर्थापत्तिरेव । न हि तत्सादृश्यविशिष्टत्वमेतस्य प्रत्यक्षसिद्धमपि तस्यैतत्सादृश्यविशिष्टत्वं विनोपपद्यते ।

एतेन दृष्टासन्निकृष्टप्रत्यभिज्ञानं व्याख्यातम् । तत्रापि तद्धर्मशालित्वं तस्य स्मरणाभिव्यक्तमनुपपद्यमानं तदिदन्तास्पदस्यैकतां व्यवस्थापयति । तस्मान्नोपमानमधिकमिति । एवं प्राप्ते अभिधीयते –

सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥

'यथा गौस्तथा गवय' इति श्रुतातिदेशवाक्यस्य गोसदृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयमसौ गवयशब्दवाच्य इति भवति मतिः । सेयं न तावत् वाक्यमात्रफलं, अनुपलब्धपिण्डस्यापि प्रसङ्गात् । नापि प्रत्यक्षफलं, अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि समाहारफलं, वाक्यप्रत्यक्षयोर्भिन्नकालत्वात् । वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डसम्बन्धेनापीन्द्रियेण तद्गतसादृश्यानुपलम्भे समयपरिच्छेदासिद्धेः । फलसमाहारे तु तदन्तर्भावे अनुमानादेरपि प्रत्यक्ष-

---

असन्निहितपिण्डगतवैधर्म्यं गृह्यत इति चेत्; प्रकृतेऽपि तुल्यमिति । एवमयं स इति प्रत्यभिज्ञानमप्यर्थापत्तिप्रयोज्यमित्याह—**एतेनेति** । उपसंहरति—**तस्मादिति** । उपमानस्य प्रमाणान्तरत्वेऽप्यबाधकत्वं वक्तुकामस्तस्य प्रमाणान्तरत्वमादौ व्यवस्थापयति — **सम्बन्धस्येत्यादिना** । शब्दार्थयोः सम्बन्धस्य परिच्छेदः प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुरिति योजना । **वाक्यतदर्थयोरिति** । गवयगतगोसादृश्यानुपलम्भे समयपरिच्छेदो न भवतीत्यर्थः । ननु सादृश्योपलम्भे सति समयपरिच्छेद इति त्वयैवोक्तम् । तथा च प्रत्यक्षफलीभूतसादृश्योपलम्भाज्जायमानं शक्तिज्ञानमपि प्रत्यक्षफलमेवेति न तदर्थं प्रमाणान्तरकल्पनेत्याशङ्क्य, एवं तर्हि प्रत्यक्षफलीभूतलिङ्गज्ञानाज्जायमानं साध्यज्ञानमपि प्रत्यक्षमेवेत्यनुमानोच्छेदप्रसङ्गमाह — **फलसमाहारे त्वित्यादिना** । नन्वैन्द्रियकात् सादृश्योपलम्भाज्जाय-

त्वप्रसङ्गः । तत् किं तत्फलस्य तत्प्रमाणबहिर्भाव एव ? । अन्तर्भावे वा कियती सीमा? । तत्तदसाधारणेन्द्रियादिसाहित्यम् । अस्ति तर्हि सादृश्यादिज्ञानकाले विस्फारितस्य चक्षुषो व्यापारः । न । उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यतदर्थस्मृतिमतः कालान्तरे ऽप्यनुसन्धानबलात् समयपरिच्छेदोपपत्तेः ।

ननु च वाक्यादेवाऽनेन समयः परिच्छिन्नः, गोसदृशस्य गवयशब्दः संज्ञेति । केवलमिदानीं प्रत्यभिजानात्ययमसाविति । प्रयोगाद्वाऽनुमितः, यो यत्राऽसति वृत्त्यन्तरे वृद्धैः प्रयुज्यते स तस्य वाचको, यथा गोशब्द एव गोः । प्रयुज्यते चायं गोसदृशे इति किमुपमानेनेति । न ।

साहश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥११॥

न हि गवयशब्दस्य सादृश्यं प्रवृत्तिनिमित्तं, अप्रतीतगूनामव्यवहारप्रसङ्गात् । न चोभयमपि निमित्तं, स्वयं प्रतीतसमयसंक्रान्तये

---

मानोऽपि समयपरिच्छेदः नेन्द्रियफलमिति चेत्; तर्हीन्द्रियसन्निकर्षवशान्निर्विकल्पोत्तरं जायमानस्य सविकल्पकस्याऽपीन्द्रियफलत्वं न स्यात् । सविकल्पकस्यैन्द्रियकत्वाङ्गीकारे तु उपमित्यनुमित्योरैन्द्रियकत्वानङ्गीकारे नियमविशेषो वक्तव्य इत्याशङ्कते—**तत्किमि**त्यादिना । नियमहेतुमाह—**तत्तदि**ति । यदीयव्यापारः यज्ज्ञानेऽसाधारणं निमित्तं तज्ज्ञाने तत्प्रमाणमिति नियमः । एवं च सविकल्पकस्येन्द्रियव्यापारमन्तराऽनुत्पद्यमानत्वात्तस्य फलं नेतरदिति भावः । नन्वत्रापीन्द्रियव्यापारोऽस्तीत्याशङ्क्य निराकरोति—**उपलब्धगोसादृश्ये**त्यादिना । ननु शब्दादनुमानाद्वा गवयशब्दसमयपरिच्छेदसंभवान्न तदर्थं प्रमाणान्तरकल्पनेत्याशङ्कते — **नन्विति** । निराकरोति — **न सादृश्ये**त्यादिना । सादृश्यस्य गवयपदप्रवृत्तिनिमित्तत्वात् गवयपदप्रवृत्तिनिमित्तस्य चाऽनवगमात् शब्देनानुमानेन वा न समयपरिच्छेदः सिद्ध्यतीति कारिकार्थः । **न चोभयमिति** । नागरिकाणां गोसादृश्यमाटविकानां

---

१. इन्द्रियव्यापारोपरतौ लिङ्गशब्दानुसन्धानस्येव वाक्यार्थस्मृतिसचिवस्य सादृश्यज्ञानस्यापि मानान्तरत्वमवश्यमङ्गीकार्यमिति भावः ।

अतिदेशवाक्यप्रयोगानुपपत्तेः । गवयत्वे ह्ययं व्युत्पन्नो वृद्धव्यवहारान्न सादृश्ये । कथमेतन्निर्धारणीयमिति चेत्; वस्तुगतिस्तावदियम् । तदापाततः सन्देहेऽपि न फलसिद्धिः । गन्धवत्त्वमिव पृथिवीत्वस्य, गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तस्योपलक्षणमिदमेव वा निमित्तमित्यनिर्धारणात् ।

स्यादेतत् । पूर्वं निमित्तानुपलब्धेर्न फलसिद्धिः, इदानीं तु तस्मिन्नुपलब्धे तदेव वाक्यं स्मृतिसमारूढं फलिष्यति, अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्यवदातस्य कालान्तरे । न च वाच्यं वाक्येन स्वार्थस्य प्रागेव बोधितत्वात् प्रागेव पर्यवसितमिति । गोसादृश्यस्योपलक्षणनिमित्तत्वयोरन्यतरत्र तात्पर्ये सन्देहात् । इदानीं तु गवयत्वेऽवगते तर्कपुरस्कारात् सादृश्यस्योपलक्षणतायां व्यवस्थितायां, 'गङ्गायां घोष' इतिवदन्वयप्रतिपत्तिरिति चेन्न ।

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।

---

गवयत्वञ्च विकल्पेनेत्यर्थः । आटविकः गवयत्व एव व्युत्पन्नः, न गोसादृश्ये इत्येतत्कथमित्याशङ्क्य वस्तुस्थितेरिति परिहरति — **वस्तुगतिरिति** । किञ्च गोसादृश्यं तदुपलक्षितं गवयत्वं वा प्रवृत्तिनिमित्तमिति सन्देहेऽपि वाक्यादनुमानाद्वा समयपरिच्छेद इति त्वदभिमतासिद्धिरित्याह — **तदापातत** इत्यादि । ननु सादृश्यस्यानिमित्तत्वेऽपि निमित्तस्य गवयत्वस्य पूर्वमज्ञानेऽपि इदानीं वनं गतस्य गवयत्वोपलम्भे सति स्मृतमतिदेशवाक्यमेव समयपरिच्छेदकं किं न स्यादध्ययनसमयगृहीतवेदवदिति शङ्कते — **स्यादेतदिति** । नन्वध्ययनसमयगृहीतवेदस्याङ्गसाकाङ्क्षत्वात्तस्य कालान्तरेऽर्थज्ञानजनकत्वेऽप्यतिदेशवाक्यस्य निराकाङ्क्षतया कालान्तरे समयपरिच्छेदकत्वमनुचितमित्याशङ्क्य तस्यापि प्रवृत्तिनिमित्तसन्देहात् तन्निर्णायकसाकाङ्क्षत्वात्समयान्तरे तत्सहकृतस्य फलोपधायकत्वं युक्तमेवेत्याह — **इदानीं त्वित्यादिना** । निराकरोति — **न श्रुतान्वयेति** । अयं भावः —

---

१. प्रवृत्तिनिमित्तविशेषानिश्चयः । २. 'गवयत्वस्य जातितया लघुत्वात्, सादृश्यस्य चोपाधितया गुरुत्वात्'इत्ययमत्र तर्कः ।

पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

'गोसदृशो गवयशब्दवाच्य' इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ विशेषसन्देहेऽपि वाक्यस्य पर्यवासितत्वेन मानान्तरोपनीतानपेक्षणात्, रक्तारक्तसन्देहेऽपि 'घटो भवति' इति वाक्यवत्। अन्यथा वाक्यभेददोषात्। न च 'गङ्गायां घोष' इतिवत् पदार्था एवान्वयाऽयोग्याः, येन प्रमाणान्तरोपनीतेनान्वयः स्यात्। प्रतीतवाक्यार्थबलायातोऽप्यर्थो यदि वाक्यस्यैव, दिवाभोजननिषेधवाक्यस्यापि रात्रिभोजनमर्थः स्यात्। तस्माद्यथा गवयशब्दः कस्यचित् वाचकः शिष्टप्रयोगादिति सामान्यतो निश्चितेऽपि विशेषे मानान्तरापेक्षा, तथा 'गोसदृशस्य गवयशब्दो वाचक' इति वाक्यान्निश्चितेऽपि सामान्ये विशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति।

अस्त्वनुमानम्। तथाहि—गवयशब्दो गवयस्य वाचकः, असति वृत्त्यन्तरेऽभियुक्तैस्तत्र प्रयुज्यमानत्वात्, गवि गोशब्दवदिति चेन्न। असिद्धेः। न ह्यसति वृत्त्यन्तरे तद्विषयतया प्रयोगः सङ्गतिमविज्ञाय

---

"गोसदृशो गवयपदवाच्य" इत्येतद्वाक्यं स्वघटकपदार्थानामन्वयोपपत्तौ निराकाङ्क्षं सदन्यत्सहकार्यन्तरं स्वार्थप्रतीत्यर्थं नाकाङ्क्षति। "गङ्गायां घोष" इत्यत्र पदार्थान्वयस्यैव बाधितत्वेन गङ्गापदाक्षिप्तेन तीरेणैव संबन्धनिश्चय इति। एतदेव विवृणोति — **गोसदृश** इत्यादिना। **वाक्यभेददोषादिति**। यद्येकमेव वाक्यं प्रथमतः सामान्येनान्वयं प्रतिपाद्य पश्चादाकाङ्क्षासहायेन विशेषतोऽप्यन्वयं प्रतिपादयेत्तदा वाक्यभेदापत्तिरिति भावः। उपसंहरति — **तस्मादिति**। यथा गवयपदस्य सामान्यतः किञ्चिद्वाचकत्वावगतावपि तद्विशेषावगत्यर्थं मानान्तरापेक्षा तथा गोसदृशस्य गवयपदवाच्यत्वावगतावपि तद्विशेषज्ञानार्थमुपमानमावश्यकमिति भावः। नन्वस्तु संज्ञासंबन्धज्ञानेऽनुमानं प्रमाणमित्याशङ्क्य विशेषणासिद्धो हेतुरिति समाधत्ते — **असिद्धेरिति**। असिद्धिं विवृणोति — **नहीति**। अयं भावः — गवयपदस्य सङ्गतिग्रहे सति वृत्त्यन्तरासत्त्वं ज्ञातुं शक्यते। वृत्त्यन्तरासत्त्वविशेषितप्रयोगाच्च सङ्गतिग्रह इति परस्पराश्रयप्रसङ्ग इति।

ज्ञातुं शक्यते । सामानाधिकरण्यादिति चेन्न । पिण्डमात्रे सिद्धसाधनात्, निमित्ते चासिद्धेः, सादृश्यस्यानिमित्तत्वादित्युक्तम् ।

ननु व्याप्तिपरमिदं वाक्यं स्यात् । "यो गोसदृशः स गवयपदार्थ" इति । तथा च वाक्यादवगतप्रतिबन्धो[1]ऽनुमिनुयात् । अयमसौ गवयो, गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदिति । न । विपर्ययात् । न हि गोसदृशं बुद्धावारोप्याऽनेन पृष्टः स किं शब्दवाच्य इति । किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति । तथा च यद्योगप्राथम्याभ्यां तस्यैव व्याप्यत्वं, ततः किं तेन ? । प्रकृतानुपयोगात् ।

अथ किंलक्षणकोऽसाविति प्रश्नार्थः, तदा व्यतिरेकपरं स्यात् । लक्षणस्य तथाभावात् । तथाच "गोसदृशो गवय" इत्यस्यार्थो यो गवय इति न व्यवह्रियते नाऽसौ गोसदृश इति । एवञ्च प्रयोक्तव्यं, अयमसौ गवय इति व्यवहर्तव्यः, गोसदृशत्वात् । यस्तु न तथा नासौ गोसदृशो, यथा हस्ती । न च हस्त्यादीनां विपक्षत्वे प्रमाणमस्ति, सर्वाप्रयोगस्य दुरवधारणत्वात् । कतिपयाव्यवहारस्य चानैकान्तिकत्वात् ।

---

ननु "गोसदृशो गवय" इति सामानाधिकरण्याद्गवयपदस्य गोसदृशवाचकत्वं सिद्ध्यतीत्याशङ्क्य तावतापि न गवयत्वस्य प्रवृत्तिनिमित्तत्वं सिद्ध्यतीत्याह — **न पिण्डमात्रेति** । नन्वयं गवयपदवाच्यः गोसदृशत्वादित्यनुमानेऽतिदेशवाक्यं व्याप्तिग्राहकमित्याशङ्क्य, व्याप्यव्यापकयोर्विपर्ययान्नेदं तद्ग्राहकमित्याह — **विपर्ययादित्यादिना** । एवमतिदेशवाक्यस्य व्याप्तिपरत्वासम्भवमभिधाय लक्षणपरत्वमपि न सम्भवतीत्याह — **तदेति** । अयं भावः — नागरिकप्रश्नस्य लक्षणबुभुत्सापूर्वकत्वे लक्षणस्यासाधारणत्वेन केवलव्यतिरेकिहेतुरूपत्वं वक्तव्यम् । उक्तं च — "असाधारणधर्मत्वाद्व्यतिरेक्येव लक्षणमि" ति । तथा च अतिदेशवाक्यस्याऽप्यर्थान्तरं वाच्यं, "यो न गोसदृशः स न गवयपदवाच्य" इति । तत्र चोदाहरणप्रयोगोऽप्यन्यथाकर्तव्यः । तत्र च हस्त्यादीनां विपक्षबाधकं नास्तीति । नन्वस्य प्रश्नस्य लिङ्गविशेषरूपव्यतिरेकिविषयकत्वासम्भवेऽपि

---

१. प्रतिबन्धः => व्याप्तिः ।

ननु लिङ्गमात्रे प्रश्नो भविष्यति, कीदृक् किं लिङ्गमिति । न । न ह्यनेन लिङ्गमविज्ञाय गवयशब्दस्य वाचकत्वं कस्यचिद्वाच्यत्वं वा ऽवगतं, येन तदर्थं प्रश्नः स्यात् । प्रवृत्तिनिमित्तविशेषलिङ्गे प्रश्नो, येन निमित्तेन गवयशब्दः प्रवर्तते तस्य किं लिङ्गमिति चेन्न । न हि तद्-वश्यमनुमेयमेवेत्यनेन निश्चितं, यत इदं स्यात् । ज्ञानोपायमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न । अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत्, पर्यायान्तरं वा । यथा गवयमहं कथं जानीयामिति प्रश्ने, 'वनं गतो द्रक्ष्यसी' ति यथा वा, कः पिक इत्यत्र कोकिल इति । तस्मान्नि-मित्तभेदप्रश्न एवायं 'गवयो गवयपदवाच्यः' कीदृक् केन निमित्ते-नेति युक्तमुत्पश्यामः । तस्य च निमित्तविशेषस्य साक्षादुपदर्शयितु-मशक्यत्वात् पृष्टस्तदुपलक्षणं किञ्चिदाचष्टे। तच्चोपमानसामग्रीसमुत्थापन-मेव । तस्य च प्रमाणस्य सतस्तर्कः सहायतामापद्यते । सादृश्यस्यैव निमित्ततायां कल्पनागौरवम् ! निमित्तान्तरकल्पने च क्लृप्तकल्प्यविरोध

---

केन लिङ्गेन गवयपदार्थं जानीम इति लिङ्गसामान्यविषयकत्वं कल्प्यत इत्याशङ्क्य गवयपदप्रवृत्तिनिमित्तमविदुषः प्रष्टुर्गवयस्य यल्लिङ्गं तन्मात्रविषयकप्रश्नो न संभव-तीत्याह — न ह्यनेनेत्यादिना । ननु प्रवृत्तिनिमित्तस्य यल्लिङ्गं तद्विषयक एवायं प्रश्नः । केन लिङ्गेन गवयपदप्रवृत्तिनिमित्तं जानीम इतीत्याशङ्क्य, तर्हि प्रवृत्तिनिमित्तं जिज्ञासमानस्य तज्ज्ञानोपायः क इति प्रश्नः स्यात्, न तु तत्र लिङ्गं किमिति तद्विशेषे इत्याह—न हि तदित्यादिना। ननु प्रष्टुर्ज्ञानोपाय एव पृष्टः, समाधात्रा तद्विशेषरूपं लिङ्गमभिहितमित्याशङ्क्य, ज्ञानोपायत्वाविशेषात्कदाचित्प्रत्यक्षं, कदा-चित्पर्यायान्तरमप्युत्तरयेदित्याह — अविशेषादिति । प्रवृत्तिनिमित्तविशेषविषयक एवायं प्रश्न इत्याह-तस्मादिति । ननु प्रवृत्तिनिमित्तमेव कुतो नोपदिष्टमित्यत आह— तस्य चेति । नन्वेतावता उपमानस्य किं सिद्धमित्यत आह — तच्चोपमानसाम-ग्रीमिति ।प्रवृत्तिनिमित्तलक्षणपरं तद्वाक्यमेवोपमानसामग्रीं वाक्यार्थस्मरणसहकृत-सादृश्यप्रत्यभिज्ञारूपामुत्थापयतीति भावः । गवयत्वस्य प्रवृत्तिनिमित्तत्वसिद्धौ लाघवरूपतर्कः सहकारीत्याह — तर्कः सहायतामिति । तर्कस्वरूपमाह — सादृश्यस्यैवेति । एवमुपमानस्य विषयतो भेदमुक्त्वा लक्षणतोऽपि भेदमाह —

इति तदेव निमित्तमवगच्छतीति। लक्षणन्त्वस्याऽनवगतसङ्गतिसंज्ञा-समभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानम्। वाक्यार्थश्च क्वचित् साधर्म्यं, क्वचिद्वैधर्म्यमतो नाव्यापकम्। तस्मान्नियतविषयत्वादेव, न तेन बाधो, न त्वनतिरेकादिति स्थितिः।

शब्दोऽपि न बाधकमनुमानानतिरेकादिति वैशेषिकादयः। तथा हि—यद्यप्येते पदार्था मिथः संसर्गवन्तो, वाक्यत्वादिति व्यधिकरणं, पदार्थत्वादिति चाऽनैकान्तिकं, पदैः स्मारितत्वादित्यपि तथा। यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति, तत्स्मारकत्वादित्यादौ साध्याभावः। न ह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषणविशेष्यभावो वा संभवति। ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते। न च लिङ्गतया ज्ञापकत्वं यल्लिङ्गस्य विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात्। तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति। तथाप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् 'गाम-

---

अनवगतेत्यादिना। अनवगतस्यार्थसङ्गतिर्या संज्ञा—गवयशब्दः, तत्समभिव्याहृतं यद्वाक्यं—अतिदेशवाक्यं, तदर्थस्य संज्ञिनि = गवयादिपिण्डे, यदनुसन्धानं 'अयं गोसदृश' इति प्रत्यभिज्ञानं, तदुपमानमिति। 'अत्रातिदेशवाक्यार्थः त्रिविधः परिगृह्यते। साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदत' इत्यभियुक्तोक्तेः। 'गोसदृशो गवय' इत्यस्य, 'गोविलक्षणः केसरादिमानश्व' इत्यस्य, 'दीर्घग्रीवः कठोरतीक्ष्णकण्टकाशी करभ' इत्यस्य सङ्ग्रह इत्याह—**वाक्यार्थश्चेति**। उपसंहरति—**तस्मान्नियतेति**। शब्दस्याप्यबाधकत्वं वक्तुकामस्तस्यादौ प्रमाणान्तरत्वं व्यवस्थापयितुमादौ वैशेषिकमतमुपन्यस्यति—**शब्दोऽपीति**। **न च लिङ्गतयेति**। ननु यस्य लिङ्गस्य यद्विषयस्तदेव तस्य कर्मेति न्यायादाशङ्क्य निराकरोति—**परस्पराश्रयप्रसङ्गादिति**। लिङ्गतया ज्ञापकत्वस्योपलम्भे सति

---

१. निराकाङ्क्षादिभिः। २. तैरेवानैकान्तिकम्। ३. न पदार्थसंसर्गाणां पदेषु समवायः। ४. स हि पदार्थानां मिथोऽन्वयो, न पदधर्मः।

भ्याजे ' ति पदार्थवदिति स्यात् । न च विशेषासिद्धिर्दोषः, संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात् । यद्वा, एतानि पदानि स्मारितार्थ-संसर्गज्ञानपूर्वकानि, आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात्, गामभ्या-जेति पदवत् । न चैवमर्थासिद्धिः, ज्ञानावच्छेदकतयैव तत्सिद्धेः । तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति । अत्रोच्यते –

अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥

एते पदार्था मिथः संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः, सम्भावितसंसर्गा इति वा? । न प्रथमः, अनाप्तोक्तपदकदम्बस्मा-रितैरनैकान्तात् । आप्तोक्त्या विशेषणीयमिति चेन्न । वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः । न ह्यविप्रलम्भकत्वमात्रमिहाप्तशब्देन विवक्षितं, तदु-क्तेरपि पदार्थसंसर्गव्यभिचारात् । अपि तु तदनुभवप्रामाण्यमपि । न चैतच्छक्यमसर्वज्ञेन सर्वदा सर्वविषये सत्यज्ञानवानयमिति निश्चेतुम् ।

तेन सह तत्स्मारकत्वादित्यस्य लिङ्गस्य व्याप्तिनिश्चयः । तन्निश्चये च लिङ्गतया ज्ञाप-कत्वसिद्धिरिति परस्पराश्रयप्रसङ्ग इति भावः । नन्वेतावता सामान्यतः संसर्गसिद्धा-वपि न तद्विशेषसिद्धिरित्याशङ्क्य पदार्थविशेषपक्षीकरणे सोऽपि सिद्ध्यतीत्याह– **न च विशेषासिद्धिरि**त्यादिना । पदपक्षकानुमाने संसर्गविशेषसिद्धिं दर्शयति– **न चैवमर्थासिद्धिरि**त्यादिना । वैशेषिकमतं निराकरोति–**अनैकान्त** इत्यादिना । पदार्था मिथः संसर्गवन्त एवेति परिच्छेदस्य=नियमस्य, साधने अनाप्तोक्तपदस्मा-रितैरनैकान्तो हेतुः, तेषां तन्नियमाभावात् । योग्यतामात्रसाधने वाक्यस्य यत्फलं संसर्गनिश्चयः तन्न सिद्ध्यतीत्यर्थः । एवं प्रथमप्रयोगं निराकृत्य द्वितीयं निराकरोति– **आकाङ्क्षे**त्यादिना । प्रतिपत्तुर्जिज्ञासारूपा आकाङ्क्षा सत्तयैव हेतुः । तथा च तेन हेतुर्न विशेषयितव्यः । योग्यतासत्तिमत्त्वविशेषितश्च हेतु 'रथमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि ' त्यत्र वाक्यद्वयगतराजपुरुषयोरन्वयाभावात् व्यभिचारान्न तावन्मात्रमन्वयप्रतीतौ नियामकमिति कारिकार्थः । एतदेव विवृणोति–**एत** इत्या-

भ्रान्तः पुरुषधर्मत्वात् । तत्र कश्चिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः । ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम् । न चैतत् संसर्गविशेषमप्रतीत्य शक्यम् ; बुद्धेरर्थभेदमन्तरेण निरूपयितुमशक्यत्वात् । पदार्थमात्रे चाऽभ्रान्तत्वसिद्धौ न किञ्चित्, अनाप्तसाधारण्यात् । एतेषां संसर्गेऽयमभ्रान्त इति शक्यमिति चेन्न । एतेषां संसर्गे इत्यस्या एव बुद्धेरसिद्धेः । अननुभूतचरे स्मरणायोगात्, तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति ।

नापि द्वितीयः, योग्यतामात्रसिद्धावपि संसर्गानिश्चयात्, वाक्यस्य च तदेकफलत्वात्, योग्यतामात्रस्य प्रागेव सिद्धेः । अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुः स्यात् । तथाच 'अग्निना सिञ्चेदि' त्यादिना स्मारितैरनैकान्तः, तथाविधानां सर्वथा संसर्गायोग्यत्वादिति । द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति । तत्र केयमाकाङ्क्षा नाम? न तावद्विशेषणविशेष्यभावः, तस्य संसर्गस्वभावतया साध्यत्वात् । नाऽपि तद्योग्यता, योग्यतयैव गतार्थत्वात् । नाप्यविनाभावः, नीलं सरोजमित्यादौ तदभावेऽपि वाक्यार्थप्रत्ययात् । तत्रापि विशेषाक्षिप्तसामान्ययोरविनाभावोऽस्तीति चेन्न । 'अहो विमलं जलं नद्याः कच्छे महिषश्चरती'त्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात् । नापि प्रतिपत्तुर्जिज्ञासा, पटो भवतीत्यादौ शुक्लादिजिज्ञासायां 'रक्तः पटो भवती' त्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात् । गुणक्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षा । पट

---

दिना । **विशेषणासिद्धत्वेनेति** । आप्तोक्तत्वरूपलिङ्गविशेषणासिद्धेरित्यर्थः । द्वितीयप्रयोगं दूषयति—द्वितीयेऽपीत्यादिना । **विशेषाक्षिप्तसामान्ययोरिति** । गुणद्रव्ययोरित्यर्थः । **वाक्यभेदाऽनुपपत्तिप्रसङ्गादिति** । जलान्वितनद्याश्रयीभूतकच्छे साकाङ्क्षतया एकवाक्यतापातादिति भावः । **रक्तः पट इति** । यथा 'रक्तः पटो भवती' त्यत्र रक्तान्वयं विना वाक्यस्यापर्यवसितत्वमेवं पटो भवतीत्यत्राप्यपर्यवसानं स्यादित्यर्थः । **गुणक्रियादीति** । अयं भावः—पट इत्युक्तौ गुणविशेषस्य क्रिया-

इत्युक्ते किं रूपः कुत्र किं करोतीत्यादिरूपजिज्ञासा। तत्र भवतीत्युक्ते किं करोतीत्येषैव पदस्मारितविषया, न तु किं रूप इत्यादिरपि। यदा तु रक्त इत्युच्यते तदा किं रूप इत्येषापि स्मारितविषया स्यादिति न किञ्चिदनुपपन्नमिति चेत्; एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान्, किमस्यां जातायामन्वयप्रत्ययोऽथ ज्ञातायामिति।

तत्र प्रथमे नाऽनया व्यभिचारव्यावर्तनाय हेतुर्विशेषणीयः, मनःसंयोगादिवत् सत्तामात्रेणोपयोगात्। आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चितोऽपि न गमकः; 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'त्यादौ व्यभिचारात्। द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत्तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्वयप्रत्ययो न जायते। न त्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्। निवृत्ताकाङ्क्षस्य च तदभावात्।

कथमेष निश्चयः, साकाङ्क्ष एव प्रत्येति, न तु ज्ञाताकाङ्क्ष इति चेत्; तावन्मात्रेणोपपत्तावनुपलभ्यमानज्ञानकल्पनाऽनुपपत्तेः। अन्यत्र तथा दर्शनाच्च। यदा हि दूरात् दृष्टसामान्यो जिज्ञासते कोऽयमिति, प्रत्यासीदँश्च स्थाणुरयमिति प्रत्येति. तदाऽस्य ज्ञातुमहमिच्छामीत्यनुव्यसायाभावेऽपि स्थाणुरयमित्यर्थप्रत्ययो भवति, तथेहाप्यविशेषात् विशेषोपस्थानकाले संसर्गावगतिरेव जायते, न तु जिज्ञासावगतिरिति। न च विशेषोपस्थानात्प्रागेव जिज्ञासावगतिः प्रकृतोपयोगिनी, तावन्मात्रस्यानाकाङ्क्षत्वात्। न चैवम्भूतोऽप्ययमैकान्तिको हेतुः यदा 'ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि' ति वक्ता

---

विशेषस्य चाकाङ्क्षा जायते। तत्र भवतीत्युक्ते क्रियाविशेषस्य, रक्त इत्युक्ते गुणविशेषस्य चाकाङ्क्षा निवर्तते। एवं च यत्र पदविशेषस्मारिता या विशेषविषया सैवाऽऽकाङ्क्षेत्यङ्गीक्रियत इति। **तावन्मात्रस्येति**। पदस्मारितविशेषजिज्ञासाया एवाऽऽकाङ्क्षात्वेन तत्प्राग्भाविन्याः गुणक्रियादिसाधारणायास्तस्या अनाकाङ्क्षात्वादिति भावः। आकाङ्क्षाया ज्ञाताया हेतुत्वाङ्गीकारेऽपि भवदुक्तहेतुर्व्यभिचारीत्याह — **न चैवं भूतोऽपीत्यादिना**। एवं वैशेषिकमतं निराकृत्य वैदिकस्य

उच्चारयति, श्रोता च व्यासङ्गादिना निमित्तेनाऽयमेति पुत्र इत्यश्रुत्वैव 'राज्ञः पुरुषोऽपसार्यतामि'ति शृणोति, तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वं, न च स्मारितार्थसंसर्गज्ञानपूर्वकत्वमिति ।

स्यादेतत् । यावत्समभिव्याहृतत्वेन[1] विशेषिते हेतौ नायं दोषः, तथाविधस्य व्यभिचारोदाहरणासंस्पर्शात् । कुतस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः[2]? । अलिङ्ग एव लिङ्गत्वाध्यारोपात् । एतावानेवायं समभिव्याहार इति तत्र श्रोतुरभिमानः । न । तत्सन्देहेऽपि श्रुतानुरूपसंसर्गावगमात् । भवति हि तत्र प्रत्ययो, न जाने किमपरमनेनोक्तमेतावदेव श्रुतं, यद्राज्ञः पुरुषोऽपसार्यतामिति । भ्रान्तिरसाविति चेत्; न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात् । न लिङ्गाऽऽभासजा, लिङ्गाभिमानाभावेऽपि जायमानत्वात् । एतादृक्पदकदम्बप्रतिसंधानमेव तां जनयतीति चेत्; यद्येवमेतदेवादुष्टं सद्भ्रान्तिं जनयत् केन वारणीयम् । व्याप्तिप्रतिसन्धानं[3] विनाऽपि तस्य संसर्गप्रत्यायने सामर्थ्याऽवधारणात्, चक्षुरादिवत् ।

नास्त्येव तत्र संसर्गप्रत्ययः, असंसर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्; तर्हि यावत्समभिव्याहारेणापि विशेषणेनाप्रतिकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वाभावात् असंसर्गाग्रहपूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत्; एवं तर्हि संसर्गो न सिद्ध्येत् । आप्तवाक्येषु सेत्स्यतीति चेन्न । सर्वविषयाऽऽप्तत्वस्यासिद्धेः । यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात् । प्रकृतविषये चाऽऽप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम् । न च सर्वत्र जिज्ञासा निबन्धनं, अजिज्ञासोरपि वाक्यार्थप्रत्ययात् । आकाङ्क्षापदार्थस्तर्हि कः? । जिज्ञासां प्रति योग्यता । सा च स्मारिततदाक्षिप्तयोरविनाभावे

पृथक्प्रामाण्यं, लौकिकस्यानुमानेऽन्तर्भाव इति वदतो मतं निराकर्तुमुपन्यस्यति—

१. यावत्समभिव्याहृतत्वसन्देहेऽपि । २. कतिपयपदश्राविणः यः संसर्गप्रत्ययः। ३. शब्दो न लिङ्गतया ज्ञापकः व्याप्त्यादिज्ञानरहितस्यापि दोषवत्, अविपर्ययहेतुत्वात् चक्षुर्वत् इति ।

सति श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः । न चैषोऽपि ज्ञानमपेक्षते, प्रतियोगिनिरूपणाधीननिरूपणत्वात्, तदभावनिरूपणस्य च विषयनिरूप्यत्वादिति ।

प्राभाकरास्तु, लोकवेदसाधारणव्युत्पत्तिबलेनाऽन्विताभिधानं प्रसाध्य वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वातन्त्र्येण प्रामाण्यमास्थिषत । लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरन्विताभिधानबलायातेऽपि प्रतिपादकत्वे अनुवादकतामात्रं वाक्यस्येति निर्णीतवन्तः । तदतिस्थवीयः ।

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥

यावती हि वेदे सामग्री तावत्येव लोकेऽपि भवन्ती कथमिव नार्थं गमयेत् । न ह्यपेक्षणीयान्तरमस्ति, लिङ्गे तु परिपूर्णेऽप्यवगते व्याप्तिस्मृतिरपेक्षणीयाऽस्तीति विलम्बेन किं निर्णेयम्? । अन्वयस्य प्रागेव प्रतीतेः । लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति चेन्न । तद्रहितस्यापि स्वार्थप्रत्यायने शब्दस्य शक्तेरवधारणात् । अन्यथा वेदेऽप्यर्थप्रत्ययो न स्यात्, तदभावात् । न[1] च लोके अन्यान्येव पदानि, येन

---

प्राभाकरास्त्विति । अयं भावः – वैदिकानां लौकिकानां च भेदाभावाल्लौकिकानां व्यवहारादन्विताभिधायित्वस्य निश्चयात्सर्वेषामपि शब्दानामन्विताभिधायित्वमेव । किन्तु वेदे कर्तुरभावात्संसर्गांशे शब्दस्यैव प्रामाण्यम् । लोके तु संसर्गांशे वाक्यस्यानुवादकत्वमेव । स च संसर्गः अनुमानेन वक्तृज्ञाने विशेषणतया सिद्ध्यतीति । एतन्मतं दूषयति – तदतिस्थवीय इति । अयं भावः– लोकवेदसाधारणव्युत्पत्तिबलेन वैदिकवल्लौकिकवाक्यादपि वक्तृज्ञानानुमानात्प्रागेवाऽर्थनिर्णये जाते सति व्याप्तिस्मृतिसापेक्षस्य लिङ्गस्यैवानुवादकत्वं युक्तमिति । ननु यथा स्थाणुपुरुषसंशये चक्षुर्निश्चायकमेवमाप्तोक्तत्वसंशये लोकवेदतुल्याऽपि

---

१. "य एव लौकिकास्त एव वैदिकास्त एवामीषामर्थाः" इत्यभ्युपगमात् ।

शक्तिवैचित्र्यं स्यात् । अनाप्तोक्तौ व्यभिचारदर्शनात् तुल्याऽपि सामग्री सन्देहेन शिथिलायते इति चेन्न । चक्षुरादौ व्यभिचारदर्शनेन शङ्कायामपि सत्यां ज्ञानसामग्रीतस्तदुत्पत्तिदर्शनात् । ज्ञायमानस्यार्थं विधिर्यत्सन्देहे सति निश्चायकं, यथा लिङ्गं, चक्षुरादि तु सत्तयेति चेन्न । वाक्यस्य निश्चितत्वात् फलप्रामाण्यसन्देहस्य च फलोत्तरकालीनत्वात् । आप्तोक्तत्वस्य चार्थप्रत्ययं प्रत्यनङ्गत्वात् । लोकेऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः । भवति हि वेदानुकारेण पठ्यमानेषु मन्वादिवाक्येषु अपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयः । न चासौ भ्रान्तिः, पौरुषेयत्वनिश्चयदशायामपि तथा निश्चयादिति ।

स्यादेतत् । नाऽऽप्तोक्तत्वमर्थप्रतीतेरङ्गमिति ब्रूमः । किन्त्वनाप्तोक्तत्वशङ्कानिरासः । स च क्वचिदपौरुषेयत्वनिश्चयात्, क्वचिदाप्तोक्तत्वावधारणादिति चेत्; तत्किमपौरुषेयत्वस्याप्रतीतौ सन्देहे वा वेदवाक्याद्विदितपदार्थसङ्गतेरर्थप्रत्यय एव न भवेत्; भवन्नपि वा न श्रद्धेयः? । प्रथमे सत्यादय एव प्रमाणम् । न चासंसर्गाग्रहे तदानीं संसर्गव्यवहारो बाधकस्यात्यन्तमभावात् । तथापि तत्कल्पनायामन्वयोच्छेदप्रसङ्गात् ।

---

सामग्री न लौकिके निश्चायिकेत्याशङ्क्य, यथा चक्षुरादावप्रमाजनकत्वसन्देहेऽपि भिन्नविषयकप्रत्यक्षोत्पत्तिरेवमनाप्तोक्तत्वसन्देहेऽपि वाक्याच्छाब्दनिश्चयोत्पत्तिरविरुद्धेत्याह – चक्षुरादावित्यादिना । ननु चक्षुः सत्तयैव हेतुः, पदं तु ज्ञायमानतया । तथा च सन्देहे सति लिङ्गवन्न फलोपधायकमित्याशङ्क्य, शब्दस्वरूपस्य निश्चितत्वात्प्रामाण्यसंशयस्याप्रतिबन्धकत्वान्न शाब्दबोधानुपपत्तिरित्याह— वाक्यस्येत्यादिना । प्रथमे सत्यादय इति । प्रत्ययस्याभावशपथादिनैवेत्यर्थः । ननु तादृशस्थले बाधनिश्चयाभावेनासंसर्गाग्रहे संसर्गव्यवहारमात्रं भवतीत्याशङ्क्य, एवं यदि सर्वत्रापि संसर्गोच्छेद इत्याह– तत्कल्पनायामिति । ननु तत्राप्यर्थप्रत्ययो भवत्येव, किन्त्वश्रद्धाकलङ्कितः । सा चाऽश्रद्धा वेदे अपौरुषेयत्वनिश्चयान्निवर्तेत इत्याशङ्क्य, तर्हि लोकेऽप्यादौ प्रत्ययो भवति । तत्र चाऽश्रद्धा आप्तोक्तत्वनिश्चाया-

द्वितीये त्वश्रद्धा प्रत्यक्षवन्निमित्तान्तराभिव्यक्त्यर्थेतीति वेदे यदि, लोकेऽपि तथा स्यादविशेषात् । अन्यथा वेदस्याप्यनुवादकताप्रसङ्गः । तदुच्यते—

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात्पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत्कुतः ॥१५॥

यदा ह्यपौरुषेयत्वनिश्चयात् प्राक् वेदो न किञ्चिदभिधत्ते इति पक्षः, तदाऽऽप्तोक्तत्वनिश्चयोत्तरकालं लोकवत् वेदेऽप्यपौरुषेयत्वनिश्चयात् पश्चादनुमानावतारः । इयांस्तु विशेषो यदत्र पदार्थानेव पक्षीकृत्य निरस्तपुंदोषाशङ्कैराकाङ्क्षादिमद्भिः पदैः स्मारितत्वादाप्तोक्तपदकदम्बकस्मारितपदार्थवत् संसर्ग एवाहत्य[2] साध्यो, बुद्धिव्यवहितास्त्वितरत्रेति फलतो न कश्चिद्विशेष इति । तथा चान्विताभिधानेऽपि जघन्यत्वाद्वेदस्यानुवादकत्वप्रसङ्गः[1] । न चैवं सति तत्र[3] प्रमाणमस्ति । विशिष्टप्रतिपत्त्यन्यथानुपपत्त्या हि शब्दस्य तत्र शक्तिः परिकल्पनीया ।

न्निवर्तत इत्याह — **द्वितीयेत्विति** । एवमाप्तोक्तत्वनिश्चयात्प्रागेव लौकिकानामर्थबोधकत्वं निरूप्य वेदेऽप्यपौरुषेयत्वनिश्चयात्प्रागेवाऽर्थावधारणम् । अन्यथा वेदस्याप्यनुवादकत्वापत्तिरित्याह — **अन्यथेति** । निरस्तपुंदूषणाशङ्कैः पदैः स्मारितत्वादमी पदार्था अन्विता इति संसर्गे निर्णीते वेदस्याप्यनुवादकत्वं कुतो न स्यादिति कारिकार्थः । **इयांस्त्विति** । वेदे वक्तुरभावात्पदार्थेषु संसर्ग एव साक्षात्साध्यः । लोके तु पदानां वक्तृतात्पर्यविषयीभूतपदार्थसंसर्गज्ञानपूर्वकत्वाद्वक्तृज्ञानविशेषणतया तत्सिद्धिरिति । **फलत इति** । संसर्गस्यानुमानिकत्वे इत्यर्थः । किञ्च वेदस्यानुवादकत्वप्राप्तावन्विताभिधानमपि प्रमाणाभावान्न सिद्ध्यतीत्याह — **तथाचेति** । अन्विताभिधानमङ्गीकृत्य लोकवेदयोस्तुल्यत्वमुक्त्वा, अधुना तदेव

१. अङ्गीकृते च वेदस्याप्यनुवादकत्वे शब्दः प्रमाणमेव न स्यात्, सर्वत्रानुमानादेव वाक्यार्थप्रमोत्पत्तेः । २. साक्षात् । ३. अन्वितेशक्तौ ।

सा चानुमानेनैवोपपन्नेति वृथा प्रयासः। तस्माल्लोके शब्दस्यानुवादकतेति विपरीतकल्पनेयमायुष्मताम् ।

किं चेदमन्विताभिधानं नाम ? । न तावदन्वितप्रतिपादनमात्रं, अविवादात् । नापि स्वार्थाभिधायास्तत्र तात्पर्यम्, अविवादादेव । नापि सङ्गतिबलेन तत्प्रतिपादनं, वाक्यार्थस्यापूर्वत्वात् । नापि स्वार्थसङ्गतिबलेन, तस्य स्वार्थ एवोपक्षयात् । नापि सैव सङ्गतिरुभयप्रतिपादिका, प्रतीतिक्रमानुपपत्तेः । यौगपद्याभ्युपगमे तु योग्यत्वादिप्रतिसन्धानशून्यस्यापि पदार्थप्रत्ययवत् वाक्यार्थप्रत्ययप्रसङ्गात् । नापि सैव सङ्गतिः स्वार्थे निरपेक्षा, वाक्यार्थे तु पदार्थप्रतिपादनाऽवान्तरव्यापारेति युक्तं, तस्याः स्वयमकरणत्वात् । सङ्गतानि पदानि हि

---

निराकरोति – **किं चेदमित्यादिना** । **अविवादादिति** । अस्माभिरप्यन्वितार्थप्रतिपादनाङ्गीकारात्, तदभिधान एव विवादादिति भावः । **अविवादादेवेति** । पदान्यन्वितप्रतिपादनोद्देशेनैव स्वार्थानभिदधतीत्यत्रास्माकमविवादादिति भावः । वाक्यार्थस्यापूर्वत्वात्तच्छक्तिग्रहबलेनान्वयप्रतिपादनं न सम्भवतीत्याह–**नापि सङ्गतिबलेनेति** । नन्वेकैव सङ्गतिः क्रमिकयोः पदार्थवाक्यार्थप्रतीत्योः हेतुरित्याशङ्क्य, अपेक्षणीयान्तराभावात्पदार्थस्मृतिकाल एवाऽन्वितमपि प्रतिपादयेदित्याह-**प्रतीतिक्रमानुपपत्तेरिति** । **तस्याः– अकरणत्वादिति** । कारणानामेवावान्तरव्यापारापेक्षत्वादिति भावः । ननु वाक्यार्थप्रतिपत्त्यनुकूलसङ्गतिशालिनां पदानां करणत्वात्करणकुक्षिनिविष्टायाः सङ्गतेरस्ति व्यापारापेक्षेत्याशङ्क्य, भवन्मते सङ्गतेः सामान्याश्रयत्वेनाऽस्मन्मते जात्यालिङ्गितव्यक्त्याश्रयत्वेन च न वाक्यार्थाश्रयत्वेन तत्प्रति-

---

१. विशिष्टप्रतिपत्तिः । २. वैपरीत्यमत्र द्वेधा सम्भवेत् – बोधकस्य शब्दस्यानुवादकत्वमनुवादकस्य च लिङ्गस्य बोधकत्वमिति व्यवहाराल्लौकिका एव अन्विताभिधायित्वे निश्चायकाः, त एव चानुवादका इति वा ।

३. सङ्गतिः = शक्तिग्रहः। सा किं प्रत्याय्ये वाक्यार्थे, उत पदार्थमात्रे?। यदि पूर्वः पक्षस्तदा वाक्यार्थस्यापूर्वत्वेनानुपस्थितत्वात् कथं तत्र शक्तिग्रहः ? । स हि उपस्थिते स्यात् । यदि चान्त्यः पक्षस्तदा पदार्थशक्त्या तन्मात्रमुपस्थापयेत्, न त्वन्वितमिति । तदेवाह — " वाक्यार्थस्यापूर्वत्वा " दिति, " तस्य स्वार्थ एवोपक्षयादि " ति च ।

करणं, न तु सङ्गतिः । तथापि तत्प्रतिपादनानुगुणसङ्गतिशालीनि पदानीति चेत्; न तावद्वाक्यार्थप्रतिपादनानुगुणता सङ्गतेस्तदाश्रयत्वेन, सामान्यमात्रगोचरत्वात्। तद्वन्मात्रगोचरत्वाद्वा नाऽपि तदनुगुणव्यापारवत्त्वेन, अकरणत्वादित्युक्तम् । तदनुगुणकरणव्यापारोत्थापकत्वात्तदनुगुणत्वे न नो विवादः । अन्वित एव शक्तिरिति चेत्; उक्तमत्र वाक्यार्थस्यापूर्वत्वात् प्रतीतिक्रमानुपपत्तेश्चेति स्मृतक्रियान्विते कारके स्मृतकारकान्वितायाश्च क्रियायां सङ्गतिरतो नोक्तदोषावकाशः । नाऽपि पर्यायतापत्तिः, प्राधान्येन नियमात् । नापि पौनरुक्त्यं, विशेषान्वये तात्पर्यात् । नापीतरेतराश्रयत्वम्, स्वार्थस्मृतावनपेक्षणात् । नापि वाक्यभेदापत्तिः, परस्परपदार्थस्मृतिसन्निधौ तदितरानपेक्षणादिति चेन्न । अन्विते सङ्गतिग्रह इति कोऽर्थः ? । यदि यत्र सङ्गतिस्तद्वस्तुगत्या पदार्थान्वितं, न किञ्चित प्रकृतोपयोगि । न हि यत्र चक्षुषः सामर्थ्यमवगतं तद्वस्तुगत्या स्पर्शवदिति तद्वत्ताऽपि तस्य

---

पादनं संभवतीत्याह – सामान्यमात्रेति । वाक्यार्थप्रतीत्यनुगुणपदार्थोपस्थित्युत्थापकतया सङ्गतेरुपयोगे तु नास्माकं विवाद इत्याह- न नो विवाद इति । व्यवहारादन्वित एव शक्तिरित्याशङ्क्य निराकरोति – अन्वित इति । नन्वन्वयविशेषे न शक्तिः, किन्तु तत्सामान्ये। अन्वयविशेषस्य वाक्यार्थत्वात्तस्यापूर्वत्वमपि सङ्गच्छते । क्रियापदेन कारकस्य, कारकपदेन क्रियाया अभिधानेऽपि न तयोः पर्यायतापत्तिः । क्रियापदस्य कारकविशिष्टक्रियावाचित्वेन, कारकपदस्य क्रियाविशिष्टकारकवाचित्वेन चार्थभेदात् । नापि पौनरुक्त्यं, क्रियाकारकसामान्यज्ञानेऽपि तद्विशेषज्ञानाय तत्तत्पदोपादानावश्यात् । ननु कारकपदेन कारकोपस्थितौ तद्विशिष्टा क्रिया क्रियापदेनोच्यते । क्रियापदेन क्रियोपस्थितौ तद्विशिष्टं कारकं कारकपदेनोच्यत इति परस्पराश्रयोऽपि नास्ति। अभिहितेनान्वितस्याभिधाने निरुक्तदोषावकाशेऽपि स्मृतेनान्वितस्याभिधाने तदसम्भवात् । ननु "घटमानये" त्यत्र घटान्वितानयनस्य, आनयनान्वितघटस्य च प्रतीत्या वाक्याभेदापत्तिरित्यपि न । यत्रैकवाक्यार्थे पर्यवसन्नेऽपरवाक्यार्थप्रत्ययस्तत्रैव वाक्यभेदः । प्रकृते विशेषणविशेष्यभावमात्रस्यैव भेदो, न वाक्यार्थस्येति प्राभाकरशङ्कां निराकरोति—न, अन्विते कोऽर्थ इति । व्युत्पत्तिरिति।

विषयः। अथाऽन्वितत्तयैव तत्र व्युत्पत्तिरित्यर्थः। तदसत्, प्रमाणाभावात्। अन्वितार्थप्रतिपत्त्यन्यथानुपपत्तिरिति चेन्न। अनन्विताभिधानेनाप्युपपत्तेः। आकाङ्क्षाऽनुपपत्तिरस्तु। न हि सामान्यतोऽन्वितानवगमेऽन्वयविशेषे जिज्ञासा स्यात्। न। दृष्टे फलविशेषे रसविशेषजिज्ञासावदाक्षेपतोऽप्युपपत्तेः, शब्दमहिमानमन्तरेण यतः कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीतिः स्यात्। न चैवम्। ततः शब्दशक्तिरवश्यं कल्पनीयेति चेत्;

कुतस्तर्हि कविकाव्यानि विलसन्ति। न हि संसर्गविशेषमप्रतीत्य वाक्यरचना नाम। न च स्वोत्प्रेक्षायां प्रत्यक्षमनुमानं शब्दस्तदाभासा वा संभवन्ति, अन्यत्र चिन्तावशेन पदार्थस्मरणेभ्यः। असंसर्गाग्रहोऽसाविति चेत्; मम तावत् संसर्गग्रह एवासौ। तवाऽपि सैव पदावली क्वचिद्-

---

सङ्गतिग्रह इत्यर्थः। अन्विताभिधानेऽर्थापत्तिं प्रमाणमाशङ्क्य निराकरोति — **अनन्विताभीति**। आकाङ्क्षादिसहकृतपदज्ञानादेवान्वितपदार्थप्रतीत्युपपत्तेरित्यर्थः।

ननु पचतीति क्रियापदश्रवणे किमोदनं, किं वा मोदकमिति विशेषजिज्ञासोदयाद्विशेषजिज्ञासायाश्च सामान्यज्ञानमन्तराऽनुपपत्तेः क्रियापदस्य कारकसामान्यान्वितक्रियाबोधकत्वमेवं कारकपदस्य क्रियासामान्यान्वितकारकबोधकत्वं च सिद्ध्यतीत्याशङ्क्य निराकरोति — **न, दृष्टे आक्षेपतोऽप्युपपत्तेरिति**। यथा चक्षुषा रूपे दृष्टे रससामान्यजिज्ञासा जायते तयोरविनाभावादेवमत्र क्रियाकारकयोरप्यविनाभावात् क्रियाश्रवणे कारकसामान्यजिज्ञासा भवतीत्याक्षेपादेव जिज्ञासोपपत्तिरिति भावः। ननु शब्दस्मृतेष्वेव पदार्थेष्वन्वयप्रतीतिर्जायते, न प्रकारान्तरेण। ततश्च शब्दानामन्वयगोचरप्रतीतिजनकत्वमङ्गीकार्यमित्याशङ्क्य, हेत्वन्तरप्रतीतेष्वपि पदार्थेष्वन्वयप्रतीतिरस्त्येवेति समाधत्ते — **कुतस्तर्हीत्यादिना**। नन्वेतादृशस्थले नान्वयप्रतिपत्तिः, किन्त्वसंसर्गाऽग्रहमात्रमित्याशङ्क्य अस्मन्मतेऽत्रापि संसर्गग्रह एव। किञ्च क्वचिदन्वयप्रतीतिः, क्वचिदसंसर्गाग्रह इत्यत्र नियामकमपि नास्तीत्याह — **तवापीति**। नियामकं

न्वये पर्यवस्यति, क्वचिदनन्वयाग्रहे इति कुतो विशेषात्। आप्तानाप्तवक्तृकतयेति चेत्; किं तथाविधेन वक्त्रा तत्र कश्चिद्विशेष आहितः? आहो वक्त्रैवावच्छेदकतया विशेषः?। प्रथमे अभिहितान्वयवादिनामिव तवापि शक्तिकल्पनागौरवम्। द्वितीये तु वक्तुरिव पदानामप्यवच्छेदकतयैव विशेषकत्वमस्तु। एवं तर्हि पदानामप्यन्वयप्रतीतावस्त्युपयोगः। कः सन्देहः। परं पदार्थाभिधानेन, न त्वन्यथा। यथा तवैवाप्तस्य संसर्गपरतया पदसमभिव्याहारमात्रेण, न त्वन्यथा। अन्यथा गुरुमतविदामेव श्लोक आप्तपदप्रक्षेपेण पठनीयः —

"प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि।
आप्तानामेव सा शक्तिर्वरमभ्युपगम्यताम्" इति॥

तस्मात्प्रकारान्तरेण संसर्गप्रत्ययो भवतु मा वा, पदार्थानामा-

---

विकल्प्य दूषयति — किमित्यादिना। अयं भावः — प्रथमे यद्याप्तेन पदेष्वन्वयप्रतीत्यनुगुणः कश्चिदतिशय आधीयते तदाऽभिहितान्वयवादिनां पदस्मारितेषु पदार्थेष्वन्वयानुगुणा काचिच्छक्तिरङ्गीकृता यथा, तथा पदेष्वपि वक्त्राहिता अन्वयानुगुणा काचिच्छक्तिरङ्गीकर्तव्या। द्वितीये यथा वक्तुरवच्छेदकत्वेन पदविशेषकत्वमेवं पदानां पदार्थावच्छेदकत्वेनैव तद्विशेषकत्वमस्तु, कृतमाधेयशक्तिकल्पनयेति।

ननूक्तदिशा पदानामन्वयं प्रत्युपयोगित्वेऽन्विताभिधानवादाङ्गीकारापत्तिरित्याशङ्क्य, अन्वयोद्देशेन पदार्थाभिधाने तेषामुपयोगः, न त्वन्विताभिधानेऽपीत्याह — परं पदार्थेत्यादिना। पदेष्वाप्ताहितशक्त्यङ्गीकारे दोषान्तरमाह — प्राथम्यादिति। पदार्थापेक्षया पदानां प्राथम्यादभिधातृत्वेनोभयवादिसम्प्रतिपन्नत्वादभिहितान्वयवादिभिरपि तेषां वाक्यार्थे तात्पर्याभ्युपगमादन्वयांशेऽपि पदानामेव शक्तिरभ्युपगम्यतामित्यन्विताभिधानवादिनामयं श्लोकः। पदेषु यद्याप्ताभिधेया शक्तिरङ्गीक्रियते तदा पदापेक्षया तेषामेव प्राथम्यादित्यादिहेतुभिरन्वयप्रतिपत्त्यनुकूला शक्तिरङ्गीकर्तव्या स्यादिति भावः। उपसंहरति — तस्मादिति।

काङ्क्षादिमत्त्वे सति अभिहितानामवश्यमन्वय इति कुतोऽतिप्रसङ्गः । न चैवं सति पदाऽर्था एव करणं, तेषामनागतातिरूपतया कारकत्वानुपपत्तौ तद्विशेषस्य करणत्वस्यायोगात् । तत्संसर्गे प्रमाणान्तरासङ्कीर्णोदाहरणाभावाच्च । पदानां तु पूर्वभावनियमेव पदार्थस्मारणाऽवान्तरव्यापारवत्तया तदुपपत्तेः, व्यापारस्याव्यवधायकत्वादिति कृतं प्रसक्तानुप्रसक्त्या । अस्तु तर्हि शब्द एव बाधकं सर्वज्ञे कर्तरि । तथा हि–

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते," इत्यादि पठन्ति ।

अस्यायमर्थः – न पारमार्थिकं चेतनस्य कर्तृत्वमस्ति, आभिमानिकं तु तत् । न च सर्वज्ञस्याभिमानो, न चासर्वज्ञस्य जगत्कर्तृत्वमस्ति । उच्यते –

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥

यदि हि सर्वज्ञकर्त्रभावावेदकः शब्दो नाप्तोक्तः, न तर्हि प्रमाणम् । अथाप्तोऽस्य वक्ता, कथं न तदर्थदर्शी । अतीन्द्रियार्थदर्शीति चेत्; कथमसर्वज्ञः ? । कथं वा न कर्ता ? । आगमस्यैव प्रणयनात् । न च नित्यागमसम्भवो विच्छेदादित्यावेदितम् । अपि च,

---

तत्संसर्ग इति । शब्दादिप्रमाणव्यतिरेकेण पदार्थैरेवान्वयप्रतीतिरित्युदाहरणाऽभावादित्यर्थः । "पश्यतः श्वेतिमा रूप" मित्यादावपि व्याप्त्याद्यनुसन्धानेनैव पदार्थैरन्वयप्रतिपत्तिरिति भावः । ननु पदानामपि व्यापारेण व्यवहितत्वान्न पूर्वभावित्वमित्याशङ्क्य निराकरोति – व्यापारस्येति । शब्दस्यैव जगत्कर्तरि बाधकत्वमाशङ्कते – अस्त्विति । निराकरोति – उच्यत इति । अनाप्तोक्तस्याप्रमाणत्वात् सर्वज्ञकर्त्रभावबोधकः शब्द आप्तोक्त इति वक्तव्यम् । तस्य च तदर्थदर्शित्वमन्तरा नाप्तत्वम् । तदर्थदर्शित्वे तस्यैव सर्वज्ञत्वमागमप्रणेतृत्वेन कर्तृत्वमपि सिद्धमिति भवदुक्तिरसङ्गतेति भावः । किञ्चेश्वरसद्भावावेदकाऽऽगमसत्त्वादपि न

न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरङ्कुनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥

न ह्यसत्त्वपक्ष एवाऽऽगमो नियतः । ईश्वरसद्भावस्यैव भूयःसु प्रदेशेषु प्रतिपादनात् । तथा चाग्रे दर्शयिष्यामः । तथा च सति क्वचिद-सत्त्वप्रतिपादनमनेकान्तं न बाधकम् । सत्त्वप्रतिपादनमपि तर्हि न साधनमिति चेत्;आपाततस्तावदेवमेतत् । यदा तु निःशेषविशेषगुणशू-न्यात्मस्वरूपप्रतिपादनार्थत्वमकर्तृकत्वागमानामवधारयिष्यते, तदा न तन्निषेधे तात्पर्यममीषामिति सत्त्वप्रतिपादकानामेवाऽऽगमानां प्रामाण्यं भविष्यतीति । न च तेषामप्यन्यत्र तात्पर्यमिति वक्ष्यामः । अस्त्वर्था-पत्तिस्तर्हि बाधिका । तथाहि – यद्यभविष्यन्नोपादेक्ष्यत्, न ह्यसा-वनुपदिश्य प्रवर्तयितुं न जानाति । अत उपदेश एवान्यथानुपपद्यमान-स्तथाविधस्याभावमौदासीन्यं वाऽऽवेदयति । न । अन्यथैवोपपत्तेः ।

हेत्वभावे फलाभावात्प्रमाणेऽसति न प्रमा ।
तदभावात्प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः ॥ १८ ॥

बुद्धिपूर्वा हि प्रवृत्तिर्न बुद्धिमनुत्पाद्य शक्यसम्पादना । न च प्रकृते बुद्धिरप्युपदेशमन्तरेण शक्यसिद्धिः ; तस्यैव तत्कारणत्वात् ।

---

शब्दस्य बाधकत्वमित्याह – **न चाऽसाविति** । अधुनाऽर्थापत्तेर्बाधकत्वमाशङ्कते– **अस्त्विति** । यदि सर्वज्ञो जगत्कर्ता स्यात् तर्ह्युपदेशमन्तरेणैवास्मान्प्रवर्तयितुं च शक्तः स्यादित्युपदेशान्यथाऽनुपपत्त्या तदभावो निश्चीयत इति भाव. । निराक-रोति — **न, अन्यथेति** । जगत्कर्तृसत्त्व एवोपदेशोपपत्तेरिति भावः । तदेवो-पपादयति — **हेत्वभाव इति** । "कारणाभावे कार्याभावादि" ति व्याप्त्या उपदेशरूपप्रमाणाभावे यागादीनां स्वर्गसाधनत्वप्रमाऽपि न स्यात्, तदभावे यागादौ प्रवृत्तिर्न स्यात् । किञ्चेश्वरस्य जगत्कर्तृत्वमनङ्गीकृत्य कर्मोपचिताऽदृष्टादेव प्रवृत्तिरिति वादेऽप्युपदेशानर्थक्यमित्ययं पर्यनुयोगोऽपरिहार्य एवेति कारिका-र्थः । तदेव विवृणोति — **बुद्धिपूर्वेत्यादिना** । अस्मन्मते नित्योऽयमुपदेशो, न

---

१. पूर्णग्रन्थत्वात् वेदस्य सर्वज्ञकर्त्रभावावेदकः शब्दः पूर्वपक्षपर इति हार्दोऽभिप्रायः ।

भूतावेशन्यायेन प्रवर्तयेदिति चेत्; प्रवर्तयेदेव यदि तथा फलसिद्धिः स्यात्। न त्वेवम्। कुत एतदवसितम्?। उपदेशान्यथानुपपत्त्यैव। यस्यापि मते अदृष्टवशादेव भूतानां प्रवृत्तिस्तस्याऽपि तुल्यमेतत्। यद्यस्ति प्रवृत्तिनिमित्तमदृष्टं, किमुपदेशेन। तत एव प्रवृत्तिसिद्धेः। न चेत्; तथापि किमुपदेशेन। तदभावे तस्मिन् सत्यप्यप्रवृत्तेः। नित्यः स्वतन्त्र उपदेशो, न पर्यनुयोज्य इति चेत्; यूयं पर्यनुयोज्याः, ये तमवधानतो धारयन्ति विचारयन्ति चेति। न चार्थापत्तिरनुमानतो भिद्यते, लोके तदसंकीर्णोदाहरणाभावात्। प्रकारान्तराभावाच्च। तथाहि —

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः॥ १९॥

'जीवंश्चैत्रो गृहे नास्ती'त्यनुपपद्यमानमसति बहिःसद्भावे तमापादयतीत्युदाहरन्ति। तत्र चिन्त्यते, किमनुपपन्नं जीवतो गृहाभावस्येति। न ह्यनियम्यस्यानियामकं विना किञ्चिदनुपपन्नम्, अतिप्रसङ्गात्। ननु स्वरूपमेव तत्, न तावद्बहिःसत्त्वेन कर्तव्यं, तदकार्यत्वात्तस्य।

---

पर्यनुयोज्य इत्याशङ्क्य, निरर्थकमुपदेशं पर्यालोचयन्तो यूयं पर्यनुयोज्या इत्याह — नित्य इत्यादिना। एवमर्थापत्तेः प्रमाणान्तरत्वेऽप्यबाधकत्वमुक्त्वाऽधुनाऽनुमाने अन्तर्भावात्तस्याः पृथक्प्रामाण्यमेव नास्तीत्याह— तदसङ्कीर्णेति। अनुमानागोचरविषयाभावादित्यर्थः। प्रकारान्तरेति। सामग्रीभेदाभावादित्यर्थः। अनियम्यस्य=व्याप्यस्य, अयुक्तिः=अनुपपत्तिः, व्यापकं विना नेत्यर्थः। अनियन्ता=अव्यापकः, उपपादको न भवति। तथा चोपपादकोपपाद्ययोर्व्याप्तिरस्तीति व्याप्तिज्ञानमूलकं कल्पनं नानुमानाद्भिद्यत इति भावः। प्रमाणद्वयविरोधेऽविरोधोपपादनमपि नार्थापत्तिः, तस्यासम्भवात्। अर्थापत्तेरनुमानभिन्नत्वे प्रसिद्धवह्निधूमादिस्थलेऽप्यनुमानोच्छेदप्रसङ्ग इति कारिकार्थः। ननु गृहासत्त्वस्वरूपमेव बहिःसत्त्वमन्तराऽनुपपन्नमित्याशङ्क्य तस्योत्पादानुपपत्तिर्नास्ति, तस्याकार्यत्वादित्याह — न तावदिति। गृहासत्त्वस्थितिरेव बहिःसत्त्वमन्तराऽनुपपन्नेति चेत्तर्हि

---

१. असति बहिःसद्भावे जीवंश्चैत्रो गृहे नास्तीत्यनुपपद्यमानं तमापादयतीति वाक्यं युज्यते।

स्थितिरेवास्य तेन विना न स्यादित्यस्य स्वभाव इति चेत्; एवं तर्हि तन्नियतस्वभाव एवासौ व्याप्तेरेव व्यतिरेकमुखनिरूप्यायास्तथा व्यपदेशात्। कथं वा बहिःसत्त्वमस्योपपादकम्?। न हि अनियामको भवन्नप्यनियम्यमुपपादयति, अतिप्रसङ्गादेव। स्वभावोऽस्य यदनेन बहिःसत्त्वेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति चेत्; सेयं व्याप्ति-रेवान्वयमुखनिरूप्या तथा व्यपदिश्यते इति। न वयमविनाभावमर्था-पत्तावपजानीमहे, किन्तु तज्ज्ञानम्। न चाऽसौ सत्तामात्रेण तदनु-मानत्वमापादयतीति चेन्न। अनुपपत्तिप्रतिसन्धानस्यावश्याभ्युपगन्तव्य-त्वात्। अन्यथा त्वतिप्रसङ्गात्। अर्थापत्त्याभासाऽनवकाशाच्च।

यदा ह्यन्यथैवोपपन्नमन्यथाऽनुपपन्नमिति मन्यते तदाऽस्य विपर्ययो, न त्वन्यथेति। तथापि कथमत्र व्याप्तिर्गृह्यतेति चेत्; यदाऽहमिह तदा नान्यत्र, यदाऽन्यत्र तदा नेहेति सर्वप्रत्यक्षसिद्धमेतत्। का तत्रापि कथन्ता?। सर्वदेशाप्रत्यक्षत्वे तत्राभावो दुरवधारण इत्यपि नास्ति, तेषामेव संसर्गस्याऽऽत्मनि प्रतिषेधात्। अयोग्यानां प्रतिषेधे का वार्तेति

---

व्याप्तिरेवोक्ता भवति। साध्येन विना साधनेन न भवितव्यमिति व्यतिरेकव्याप्तिव्यपदे-शादित्याह — स्थितिरेवेत्यादिना। सेयं व्याप्तिरेवेति। साध्येन सहैव साधनेन भवितव्यमित्यन्वयव्याप्तेर्व्यपदेशादित्यर्थः। अनुमाने व्याप्तिज्ञानमपेक्षितं, अर्थापत्तौ तु तत्सत्तामात्रमित्याशङ्क्य, अत्रापि तज्ज्ञानमावश्यकम्। अन्यथाऽनुपपत्तिज्ञानं विना-ऽपि कल्पनापातादित्याह—अतिप्रसङ्गादिति। ननु गृहाभावबहिःसत्त्वयोर्व्यधिकर-णत्वात्कथं व्याप्तिग्रह इत्याशङ्क्य, आत्मन्येव तयोर्व्याप्तिः सुग्रहेत्याह — यदा-ऽहमित्यादिना। का तत्रापीति। आत्मन्यपि कथमिति पर्यनुयोगो नास्ति खल्वित्यर्थः। ननु नान्यत्रेति सर्वदेशेष्वात्मनिषेधो न घटते। तेषामसन्निकृष्टत्वे-नाप्रत्यक्षत्वादित्याशङ्क्य, आत्मन्येव तेषां स्मर्यमाणानां निषेध इत्याह—तेषामेवेति। अयोग्यानां कथं निषेध इत्याशङ्क्य योग्यकार्यारम्भकायोग्यानां तत्कार्यसंसर्गा-भावात्संसर्गनिषेधो गम्यः। अतद्रूपाणामयोग्यानां निषेधस्तु निष्प्रमाणक एवेत्याह— अयोग्यानामित्यादिना। अर्थापत्तौ व्याप्तिनिश्चयापेक्षायामपि न पक्षधर्मत्वापेक्षे-

चेत्; तदवयवानां तत्संसर्गप्रतिषेधादेवानुमानादन्येषां न काचित्। न ह्यकारणीभूतेन परमाणुना नेदं संसृष्टमिति निश्चेतुं शक्यमिति। न चाऽविनाभावनिश्चयेनापि गमयन्नपक्षधर्मोऽर्थापत्तिरिति युक्तम्; पक्षधर्मताया अनिमित्तत्वप्रसङ्गात्, अविशेषात्। व्यधिकरणेनाविनाभावनिश्चयायोगाच्च। यत् यत्र यदेति प्रकारानुपपत्तेः।

प्रमाणयोर्विरोधे अर्थापत्तिरविरोधोपपादिका, न त्वेवमनुमानमित्यपि नास्ति। विरोधे हि रज्जुसर्पादिवदेकस्य बाध एव स्यान्नतूभयोः प्रामाण्यम्। प्रामाण्ये वा न विरोधः। स्थूलमिदमेकमितिवत् सहसंभवात्। चैत्रोऽयमयं तु मैत्र इतिवद्वा विषयभेदात्। प्रकृते क्वाप्यस्तीति सामान्यतो गेहस्यापि प्रवेशादेकविषयताऽप्यस्तीति चेत्; यद्येवं क्वचिदस्ति क्वचिन्नास्तीतिवन्न विरोधः। अत्रापि विरोध एवेति चेत्; एकं तर्हि भज्येत। न भज्येत, अर्थापत्त्या उभयोरप्युपपादनादिति चेत्; किमनुपपद्यमानम्। विरोध एवान्यथानुपपद्यमानो विभिन्नविषयतया व्यवस्थापयतीति चेत्; अथाऽभिन्नविषयतयैव किं न व्यवस्थापयेत्?। व्यवस्थापनमविरोधापादनम्। एकविषयतयैव चाऽनयोर्विरोधः! स कथं तयैव शमयितव्यः?। न हि यो याद्विषमूर्च्छितः स तेनैवोत्थाप्यते इति चेत्; एकविषयतया अनयोर्विरोध इत्येतदेव कुतः?। विभिन्नदेशस्वभावतयैव सर्वत्रोपलम्भादिति चेत्; नन्वियं व्याप्तिरेव। तथा च

---

त्याशङ्क्य, अनुमानेऽपि पक्षधर्मत्वापेक्षा न स्यादित्याह — अविशेषादिति। अर्थापत्तावपि पक्षधर्मत्वमावश्यकमित्याह — व्यधिकरणेनेति। यत्साधनं यत्र देशे यदा अस्ति, तत्र देशे तत्काले तत्साध्यमिति व्याप्तेर्देशकालनिरूपणीयत्वाच्च पक्षधर्मत्वापेक्षेत्याह — यद्यत्रेति। ननु क्वचिदस्तीत्यत्र क्वचित्त्वेन गेहस्यापि विषयत्वात् 'गेहे नास्ती' त्यत्र तन्निषेधात्प्रमाणयोर्विरोधे शङ्किते, क्वचिदित्यस्य गेहातिरिक्तविषयकल्पनया विरोधशङ्कानिरासकत्वेनार्थापत्तेरुपयुज्यत इत्याशङ्कते— प्रमाणयोरिति। विरुद्धयोर्भिन्नदेशत्वव्याप्त्यैव प्रमाणव्यवस्थासिद्धेर्नार्थापत्तिः प्रमाणान्तरमित्याह — नन्वियमिति। यदि व्याप्तिपक्षधर्मतयोः सत्त्वेऽप्यर्थापत्ति-

घट्टकुटयां प्रभातमिति । धूमोऽपि वा अनुपपद्यमानतयैव वह्निं गमयेत्। न हि तेन विना असावुपपद्यते । विरोधोऽपि धूमाद्वह्निना भवितव्यम्, अनुपलब्धेश्च न भवितव्यमिति । तथा चानुपलब्धेरर्वाग्भागव्यवस्थापनं, धूमस्य च व्यवधानेनानुपलभ्यवह्निविषयत्वास्थितिरर्थापत्तिरिति कुतोऽनुमानम्? । वह्निमानयमित्यनुमानं व्याप्तेः । अन्यथाऽनुमानाभावे विरोधासिद्धेः । अर्वाग्भागानुपलब्धिविरोधेन परभागेऽस्य वह्निरित्यर्थापत्तिरेवेति चेन्न । व्याप्तिग्राहकेन प्रमाणेन विरोधस्योक्तत्वात्।

नाप्युत्तरार्थापत्तिः । अन्यथा पाण्डरत्वस्याऽपालालत्वविरोधेन पालालत्वस्थितिरप्यर्थापत्तिरेव स्यात् । तद्विशिष्टस्य तेनैव व्याप्तेर्नैवमिति चेत्; यद्येवमर्वाग्भागानुपलभ्यमानवह्नित्वेन विशिष्टस्य धूमस्य तेनैव व्याप्तेः कथमेवं भविष्यतीति तुल्यम् । केवलव्यतिरेक्यनुमानं पराभिमतमर्थापत्तिरन्वयाभावादिति चेत्; एवमेतावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः । तत्रानुमानव्यवहारः कुत इति चेत्; अविनाभूतलिङ्गसमुत्पन्नत्वात् । साध्यधर्मेण विना अभवनमन्वयिन इव व्यतिरेकिणोऽप्यविशिष्टं, तन्निश्चयश्चाऽन्वयव्यतिरेकाभ्यामन्यतरेण वेति । तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयं, तद्विशेषवचनं वा

---

रङ्गीक्रियते तदाऽनुमानमात्रोच्छेद इत्याह – धूमोऽपि वेत्यादिना । प्रमाणद्वयविरोधोऽपि तत्र सम्भवतीत्याह – विरोधोऽपीति । धूमाद्वह्निमानित्यनुमानाभावे अनुपलब्धेर्विरोध एव न स्यादिति नानुमानोच्छेद इत्याशङ्क्य 'यत्र यत्र धूमस्तत्र तत्राग्निरि' ति व्याप्तिग्राहकेणानुपलब्धेर्विरोधकथनादनुमानोच्छेद एवेत्याह — व्याप्तिग्राहकेनेति । परभागे वह्नेरवस्थापनमपि नार्थापत्तिः । तथा सति पाण्डरधूमस्यापलालविरोधात्पलालवह्निसिद्धिरप्यर्थापत्तिः स्यादित्याह — नाऽप्युत्तरेत्यादिना । ननु केवलव्यतिरेकिणि हेतोः पक्षधर्मत्वं साध्याभावसाधनाभावयोर्व्याप्तिरिति न व्याप्यस्य पक्षधर्मत्वमिति भवति तत्रार्थापत्तिरित्याशङ्क्य तत्राऽप्यविनाभूतलिङ्गज्ञानमेवोपयोगीत्यनुमानमेवेत्याह – व्यतिरेकीत्यादिना ।

पूर्ववदादिवादात् युक्तम् । अनुपलब्धिस्तु न बाधकात् चिन्तिता । न च प्रत्यक्षादेरतिरिच्यते । तदुच्यते –

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।

अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥

या हि साक्षात्कारिणी प्रतीतिः सेन्द्रियकरणिका, यथा रूपादिप्रतीतिः। तथेह भूतले घटो नास्तीत्यपि । साक्षात्कारित्वमस्या असिद्धमिति चेन्न। एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः। न हि तस्मिन्नेव कार्ये तदेव करणमेकदा ज्ञातमज्ञातञ्चैकदोपयुज्यते, लिङ्गेन्द्रिययोरपि व्यत्ययप्रसङ्गात्, ज्ञानस्याकारणत्वप्रसङ्गाच्च। न हि तदतिपत्यापि भवतस्तत्कारणत्वम्, व्याघातात् । तस्माज्ज्ञातानुपलब्धिजन्यस्यासाक्षात्कारित्वात्, तद्विपरीतकारणकमिदं तद्विपरीतजातीयमिति न्याय्यम्।

ननु क्व नाम ज्ञातानुपलब्धिरसाक्षात्कारिणीमभावप्रतीतिं जनयति? । तद्यथा निपुणतरमनुसृतो मया मन्दिरे चैत्रो न चोपलब्ध

---

**पूर्ववदिति।** पूर्ववच्छेषवत्सामान्यतोदृष्टञ्चेत्यादिरीत्येर्थः। अनुपलब्धेरबाधकत्वं प्रागेव चिन्तितम्। इदानीं तस्याक्लृप्तप्रमाणेष्वन्तर्भाव एव चिन्तयितव्य इत्याशयेनाह– **न च प्रत्यक्षादेरिति** । तत्रानुपलब्धेः प्रत्यक्षेऽन्तर्भावसाधकहेतूनाह – **प्रतीति।** आद्यं हेतुं विवृणोति – **या हीति** । हेतोः प्रतिवाद्यसिद्धिमाशङ्क्य निराकरोति – **एकजातीयत्व इति** । कासाञ्चिदभावबुद्धीनामज्ञातकरणकत्वेन कासाञ्चित् ज्ञातकारणकत्वेन च तासां सर्वासामेकजातीयत्वे कारणवैजात्यं न स्यादित्यर्थः। किञ्चाज्ञातकरणकमपि ज्ञानं ज्ञातकरणकजातीयमेव स्यात्तदा ज्ञानस्य करणत्वमपि न स्यात् । अन्वयव्यतिरेकयोर्मध्ये व्यतिरेकाभावादित्याह – **ज्ञानस्येति** । ज्ञातानुपलब्धेरसाक्षात्कारकरणत्वमेवासिद्धमित्याशङ्क्य सोदाहरणं दर्शयति – **यथा निपुणतरमिति** । एवं प्रातःकालिकानुपलब्धेर्मध्यन्दिनेऽनुसन्धी-

---

१. जन्यापरोक्षज्ञानस्येन्द्रियजन्यत्वानियमात् । तत्र चान्वयव्यतिरेकितया योग्यानुपलब्धेः सहकारित्वं न वारयामः ।

इति श्रुत्वा श्रोतोऽनुमिमोति, नूनं नासीदेवेति। एतेन प्राङ्नास्तिता-ऽपि व्याख्याता। ननु तथाप्यवान्तरजातिभेदोऽस्तु, अज्ञातानुपलब्धि-जन्ये साक्षात्कारस्तु कुत इति चेत्; कारणविरोधात् कार्यविरोधेन भवितव्यमित्युक्तमेव। अनन्यत्रोपक्षीणेन्द्रियव्यापारानन्तरभावित्वाच्च। अधिकरणग्रहणे तदुपक्षीणमिति चेन्न। अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात्। अस्ति हि तस्याधिकरणग्रहणम्, अस्ति च प्रतियोगिस्मरणम्, अस्ति च श्यामे रक्तत्वस्य योग्य-स्याभावोऽनुपलब्धिश्च। अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेन्न। प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युप-गमात्। ममापि प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेन्न। वायौ त्वगिन्द्रियोपनीते रूपाभावप्रती-त्यनुदयप्रसङ्गात्। तथापि तत्तत्र सन्निकृष्टमिति चेत्; हन्तैवमनन्यत्र चरितार्थमिन्द्रियमवश्यमपेक्षणीयं रूपाभावानुभवेन।

स्यादेतत्। तथापि वस्त्वन्तरग्रह एव तस्योपयोग इति चेन्न। तस्य तं प्रत्यकारणत्वात्। कारणत्वे वा महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्याभावं न प्रतीयात्। प्रतीयाच्च पुरोविस्फारिताक्षः पृष्ठलग्नस्याऽश्यामत्वम्। आर्जवावस्थानमप्यधिकरणस्योपयुज्यते इति चेत्; तर्हि नयनसन्निकर्षोऽप्युपयोक्ष्यते। तदेकसहकारि

---

यमानाया जाताप्यभावप्रतीतिरपि ज्ञातानुपलब्धिसाध्यैवेत्याह— एतेनेति। नन्व-ज्ञातानुपलब्धिजन्यस्य साक्षात्कारत्वं कुत इत्याशङ्क्य विधाद्वयव्यतिरेकेण ज्ञाना-वान्तरजातेरभावादित्याह—कारणविरोध इति। द्वितीयं हेतुमाह— अनन्यत्रेति। वायोश्चक्षुर्ग्राह्यत्वाभावेऽपि तयोः सन्निकर्षोऽस्ति। तत्र रूपस्यानुपलब्ध्या रूपाभाव-प्रत्यक्षमित्याशङ्क्य, अन्धस्य रूपाभावप्रत्यक्षाभावादवश्यापेक्षणीयं चक्षुरित्याह — हन्तैमिति। इन्द्रियस्याधिकरणग्रहे उपक्षयाभावेऽप्यन्यत्रोपक्षयमाशङ्क्य निराक-रोति — तस्येति। तस्य = वस्त्वन्तरग्रहस्य। तं प्रति, अभावग्रहं प्रतीत्यर्थः। न प्रतीयादिति। कारणस्य वस्त्वन्तरग्रहस्याभावादिति भावः। तदेकसहका-

प्रभासन्निकर्षापेक्षणात्। अन्यथा वातायनविवरविसारिकरपरामृष्टेऽप्य-धिकरणे तदुलम्भप्रसङ्गाच्च । तथापि योग्यताऽऽपादनोपक्षीणश्चक्षुः । यदितरसामग्रीसाकल्ये ह्यनुपलभ्यमानस्याभावो निश्चीयते। तच्च चक्षु-र्व्यधिकरणसन्निकृष्टे सति स्यादिति चेत्; ननु परिपूर्णानि कारणान्येव साकल्यम्। तथाच किं कुत्रोपक्षीणम्?। अथान्योन्यमेलकं मिथः प्रत्या-सत्त्यादिशब्दवाच्यं तदुपक्षयः, न तर्हि क्वचिच्चक्षुः कारणं स्यादिति। न हि रूपाद्युपलब्धिमप्यसन्निकृष्टमेतदुपजनयति । अथाऽधिकरणसमवेत किञ्चिदुपलम्भोऽपि तद्विषयाभावग्रहेऽनुपलब्धेरपेक्षणीयः । ततस्तत्रेदं चरितार्थम्। वाय्वादिषु तु रूपाद्यभावप्रतीतिरानुमानिकी ।

तथाहि – अनुपलब्ध्या ह्यनुमीयते, अयं नीरूपो वायुरिति। न। असिद्धेः । न ह्युपलम्भाभावो भवतामभावोपलम्भः, उपलम्भस्याती-न्द्रियत्वाभ्युपगमात् । प्राकट्याभावेनानुमेय इति चेन्न। वायौ रूपवत्ता-प्राकट्याभावस्याप्यसिद्धेः। रूपाभावेन समानत्वात्। व्यवहाराभावे-नानुमेय इति चेन्न। कायवाग्व्यापाराभावेऽप्युपेक्षाज्ञानाभावाभ्युपगमात्। मूकस्वभोपपत्तेश्च । न च व्यवहाराभावमात्रेणाऽनुमातुमपि शक्यते। अनैकान्तिकत्वादसिद्धेश्च। तद्विषयस्तु व्यवहारस्तद्विषयज्ञानजन्यो वा?।

---

रीति । नयनसहकारिणः प्रभासन्निकर्षस्याभावप्रत्यक्षेऽपेक्षणादित्यर्थः । ननु योग्यानुपलब्धिरभावज्ञाने हेतुः । योग्यता च प्रतियोगिव्यतिरिक्ताभावज्ञानकारण-साकल्यरूपा । तच्च साकल्यं चक्षुस्सन्निकर्षेण सिद्ध्यतीति साकल्यसम्पादनोप-क्षीणं चक्षुरित्याशङ्क्य निराकरोति – ननु परिपूर्णानीत्यादिना । नन्वभावा-धिकरणसमवेतस्य वस्त्वन्तरस्य ग्रहोऽनुपलब्धेः सहकारी, तत्र चेन्द्रियस्योपक्षय इत्याशङ्क्य निराकरोति – न, असिद्धेरिति । असिद्धेस्तत्राप्रत्यक्षत्वादित्यर्थः । व्यवहाराभावेन प्राकट्याभावोऽनुमेय इत्याशङ्क्य मूकादिषु व्यवहाराभावेऽपि ज्ञानाभावानङ्गीकारान्नैवमित्याह – कायवागित्यादिना । ननु यद्विषयकस्य ज्ञानस्य प्राकट्याख्यधर्मस्य वाऽभावोऽनुमित्सितः तत्र तद्विषयकव्यवहाराभावो लिङ्गमित्याशङ्क्य निराकरोति – तद्विषयस्त्विति । अयं भावः तद्विषयकव्य-

**तद्विषयज्ञानजनको वा? तदाश्रयधर्मजनको वा? । तदभावश्च तज्ज्ञानतदाश्रयधर्माभावान्तर्भूत एवेत्यशक्यनिश्चय एव । आत्माश्रयेतरेतराश्रयचक्रकप्रवृत्तिप्रसङ्गात् । न चाऽज्ञातस्योपलम्भाद्यभावस्य लिङ्गता । न च प्राकट्याभावः सत्तामात्रेणोपलम्भाभावमावेदयतीति युक्तम्; लिङ्गाभावस्य तथात्वेऽतिप्रसङ्गात् । अविनाभावबलेन तु नियमे तत्प्रतिसन्धानापत्तेः । न ह्यविनाभावः सत्तामात्रेण ज्ञानहेतुं नियमयति, धूमादावपि तथाभावप्रसङ्गादिति। ज्ञानप्रत्यक्षत्वेन त्वद्दिशा भविष्यतीति चेन्न । शब्दध्वंसादिनोक्तोत्तरत्वात् ।**

---

वहारस्तद्विषयकज्ञानं, तन्निष्ठप्राकट्यलक्षणधर्मं वा पुरस्कृत्य तज्जन्य इति वा तज्जनक इति वा निरूपणीयः। तादृशव्यहाराभावश्च तादृशज्ञानाद्यभावेन निरूपणीयः। तच्चाशक्यमात्माश्रयादिप्रसङ्गात् । तथाहि – तद्विषयकज्ञानजन्यव्यवहाराभावेन तद्विषयकज्ञानाभावसाधने, तत्र तादृशज्ञानजन्यव्यवहारान्तराभावेन तद्विषयकज्ञानमेव तद्विषयकव्यवहार इति पर्यवस्यति । तथाच तद्विषयकज्ञानाभावेन तद्विषयकज्ञानाभावसाधने स्वज्ञप्त्यधीनस्वज्ञप्तिकत्वमात्माश्रयः। यदि च तद्विषयकज्ञानजनकव्यवहाराभावात्तद्विषयकज्ञानाभावः साध्यते तदा अन्योन्याश्रयः । तथाहि— तद्विषयकज्ञानजनकं चक्षुरादिकं, तच्च कार्यगम्यं, तदभावोऽपि कार्याभावगम्यः। तथा च तद्विषयकज्ञानाभावात्तज्जनकस्य चक्षुरादेरभावस्य सिद्धिः । तत्सिद्धौ तद्विषयकज्ञानाभावसिद्धिरिति । तदाश्रितधर्माभावज्ञानात्तद्विषयकव्यवहाराभावसिद्धौ चक्रकम् । तथाहि — तद्विषयकव्यवहाराभावात्तद्विषयकज्ञानाभावसिद्धिः। तस्माच्च प्राकट्यरूपधर्माभावसिद्धिः। तत्सिद्धौ च व्यवहाराभावसिद्धिरिति ।

अज्ञातस्य लिङ्गतया गमकता नास्तीत्याह — **न चाज्ञातस्येति । लिङ्गाभावस्येति** । लिङ्गाभावमात्रेण लिङ्ग्यभावसिद्धौ धूमाभावेन वह्न्यभावस्यापि सिद्धिप्रसङ्ग इति भावः। **तथाभावप्रसङ्गादिति** । सत्तामात्रेणैव नियामकत्वप्रसङ्गादित्यर्थः। ननु नैयायिकमतवत् ज्ञानप्रत्यक्षं तदभावप्रत्यक्षं चाङ्गीकृत्य ज्ञानाभावेन हेतुना वायौ रूपाभावानुमानमित्याशङ्क्य, तर्हि रूपाभावस्य वायौ प्रत्यक्षत्वमेवाङ्गीक्रियताम् । अधिकरणस्याप्रत्यक्षत्वेऽपि शब्दध्वंसप्रत्यक्षवत्तदुपपत्तेरित्याह — **ज्ञानप्रत्यक्षत्वेनेत्यादिना** । एवं प्रतियोगिग्राहकेणेन्द्रियेणाधिकरण-

अपि च प्रतियोगिग्राहकेन्द्रियेणाधिकरणधर्मप्रतीतिरनुपलब्धेरङ्गमिति, तद्रहितायास्तस्याः कार्यव्यभिचाराद्व्यवस्थाप्येत, व्याप्तिबलाद्वा[1]। न तावदुक्तरूपानुपलब्धिस्तां विना अभावप्रत्ययमजनयन्ती दृश्यते। नापि व्याप्तेः। तथा सति वायौ रूपाभावप्रत्ययस्तामाक्षिपेत्, एवम्भूतत्वात्। अनाक्षेपे वा, न तत्कारणको भवेत्, न वा भवेत्। ततो न भवत्येव, लिङ्गात्तदुत्पत्तिरिति चेत्; ननु लिङ्गमपि सैवं, न तत्त्वान्तरम्। यथा योनिसम्बन्धोऽलिङ्गदशायामिन्द्रियसन्निकर्षमपेक्षते, लिङ्गदशायां तु तदनपेक्ष एव ब्राह्मण्यज्ञाने, तथैतत् स्यादिति चेन्न। कार्यजातिभेदात्तदुपपत्तेः। प्रकृते च तदनभ्युपगमात्। पारोक्ष्यापारोक्ष्ये विहायान्यथाऽप्यसौ भविष्यतीति चेन्न। अनुपलम्भात्। सम्भाव्यते तावदिति चेत्; सम्भाव्यतां, न त्वेतावताऽपि तमाश्रित्य करणनियमनिश्चयः।

अज्ञातकरणत्वाच्च। यदज्ञायमानकरणजं ज्ञानं तत्साक्षादिन्द्रियजं,

---

समवेतधर्मान्तरोपलम्भस्यानुपलब्धिसहकारित्वे वायौ रूपाभावप्रत्यक्षानुपलब्धिप्रसङ्ग इति दूषणमभिधायाऽधुना तत्रैव दूषणान्तरमाह — **अपि चेति**। तद्रहितायाः = तादृशोपलब्धिरहितायाः। तस्याः = अनुपलब्धेः। तां = धर्मान्तरप्रतीतिम्। न वा भवेत्, नैवोत्पद्येतेत्यर्थः। नन्वर्थापत्तितो वायौ न रूपाभावप्रत्ययः, किन्तु लिङ्गादिति न वस्त्वन्तरप्रतीत्यपेक्षेत्याशङ्क्य, अनुपलब्धेर्लिङ्गतासामर्थापत्तितायां च समानत्वात्कदाचित्प्रतीत्यपेक्षा, कदाचिन्नेति व्यवस्थादुःशकेत्याह — **ततो न भवत्येवे**त्यादिना।

ननु यथा विशुद्धब्राह्मणजन्यत्वमलिङ्गदशायामिन्द्रियसन्निकर्षमपेक्षते, लिङ्गसद्भावे च नापेक्षते तद्वदिहापीत्याशङ्क्य तत्रापरोक्षत्वपरोक्षत्वरूपकार्यवैजात्यात्तदुपपत्तिरित्याह — **यथे**त्यादिना। ननु वस्त्वन्तरप्रत्ययसहकृतानुपलब्धिबलात्तत्र परोक्षापरोक्षविलक्षणज्ञानं सम्भाव्यत इत्याशङ्क्य, तथापि सम्भावितजातिभेदमाश्रित्य कुत्रचिदनुपलब्धेर्वस्त्वन्तरप्रत्ययापेक्षा, कुत्रचिन्नेति नियमः कर्तुमशक्य इत्याह — **पारोक्ष्ये**त्यादिना। तृतीयहेतुं व्याचष्टे — **अज्ञाते**त्यादिना। ज्ञानाकरणकं ज्ञानमैन्द्रियकमेवेति व्याप्तिर्भाकि-

---

1. अनुपलब्धिरेव।

यथा रूपप्रत्यक्षम् । तथा चेह भूतले घटो नास्तीति ज्ञानमिति । यथा वा स्मरणमज्ञायमानकरणजं साक्षान्मनोजन्म । कुतस्तर्हि न साक्षा[1]त्कार्यनुभवरूपम् ? । संस्का[2]रातिरिक्तसन्निकर्षाभावादिति वक्ष्यामः ।

तथापि भावविषये इयं व्यवस्था, अभावज्ञानं त्वज्ञातकरणत्वेऽपि न साक्षादिन्द्रियजं भविष्यतीति चेन्न । उत्सर्गस्य बाधकाभावेन सङ्कोचानुपपत्तेः । अन्यथा सर्वव्याप्तीनां भावमात्रविषयत्वप्रसङ्गोऽविशेषात् । तथापि विपक्षे किं बाधकमिति चेत्; नन्विदमेव तावत् । अन्यदप्युच्यमानमाकर्णय । तद्यथा — अकारणककार्यप्रसङ्गो, रूपाद्युपलब्धीनामपि वाऽनिन्द्रियकरणत्वप्रसङ्गः । न ह्यनुमित्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्, अपि त्वनुपलभ्यमानकरणिकाभी रूपाद्युपलब्धिभिरेव । यद्यपि साक्षात्कारिताऽपि तत्रैव पर्यवस्यति, तथापि प्रथमतोऽनुपलभ्यमानकरणत्वमेव प्रयोजकं चक्षुरादि-

---

विषयेत्याशङ्कते — तथापीत्यादिना । ज्ञानाकरणकज्ञानस्यानैन्द्रियकत्वे किं बाधकमित्याशङ्क्य, उत्सर्गस्येत्यादिना उक्तमेव बाधकमित्याह — नन्विदमेवेति । दोषान्तरमाह — अन्यदपीति । अज्ञातकरणकस्येन्द्रियकरणकत्वनियमेनाज्ञातकरणकस्याभावज्ञानस्येन्द्रियकरणकत्वाभावेऽकारणककार्योत्पत्तिप्रसङ्ग इति भावः । किञ्च रूपाद्युपलब्धीनामिन्द्रियकरणकत्वेऽज्ञातकरणकत्वमेव निबन्धनम् । इदानीं तासामपि तन्न स्यादित्याह — रूपादीति । उपलभ्यमानकरणकेष्वनुमित्यादिष्विन्द्रियस्य करणत्वाकल्पनादनुपलभ्यमानकरणकेष्वेव रूपादिज्ञानेषु तस्य करणत्वं पर्यवस्यतीत्याह — न ह्यनुमित्यादीत्यादिना । ननु रूपादिबुद्धीनां साक्षात्कारित्वमेवेन्द्रियकरणकत्वकल्पकमित्याशङ्क्य कार्यदर्शनसमये कारणापेक्षायामनुपलभ्यमानकरणकत्वमेव कल्पकमित्याह — यद्यपीति । एतदेव व्यतिरेकमुखेन

---

१. साक्षादिन्द्रियसन्निकर्षजन्यस्य प्रत्यक्षत्वव्याप्तत्वात् । २. संस्कारान्यः सन्निकर्षः प्रत्यक्षत्वप्रयोजकः । स्मरणे तु स एव सन्निकर्षः । प्रत्यभिज्ञाने तु तत्तास्मृत्युपनीता भासते इति विवेकः ।

कल्पने। न ह्युपलभ्यमाने करणान्तरे साक्षात्कारिणीष्वपि तासु चक्षुराद्यनुपलभ्यमानं कश्चिद्कल्पयिष्यत्। अत एव साक्षात्कारित्वेऽपि स्मृतेर्मन एव करणमुपागमन् धीराः। संस्कारस्त्वर्थविशेषप्रत्यासत्तावुपयुज्यते, इन्द्रियाणां प्राप्यकारित्वव्यवस्थापनात्। भावावेशाच्च चेतसः। सर्वत्र हि बाह्यार्थानुभवे जनयितव्ये भावभूतप्रमाणाविष्टमेव चेत उपयुज्यते, नातोऽन्यथेति व्याप्तिः। तथैव शक्तेरवधारणात्। न ह्यनुपलब्धिमात्रसहायं तदभावेऽप्यनुभवमाधातुमुत्सहते। शब्दलिङ्गादेरपेक्षादर्शनात्। न च यत्र यदपेक्षं यस्य जनकत्वमुपलब्धं, तदेव तस्यैव तदनपेक्षं जनकमिति न्यायसहम्; आर्द्रेन्धनसंबन्धमन्तरेणापि दहनात् धूमसम्भावनापत्तेः। तथाच गतं कार्यकारणभावपरिग्रहव्यसनेन। अपि च—

प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥२१॥

यद्धि प्रमाणं यद्भावावगाहि, तत् तदभावावगाहि, यथा लिङ्गं शब्दो वा। घटाद्यवगाहि चेन्द्रियमिति। अन्यथा हि शब्दादिकमपि नाऽभावमावेदयेत्, भाव एव सामर्थ्यावधारणात्। न चैवमेव न्याय्यम्। 'देवदत्तो गेहे नास्ती'ति शब्दात्, मया तत्र जिज्ञासमाने-

---

दर्शयति — **न ह्यनुपलभ्येत्यादिना**। अज्ञातकरणकत्वमेवैन्द्रियकत्वे प्रयोजकमित्यत्र हेत्वन्तरमाह — **अत एव साक्षादिति**। स्मृतौ संस्कार एव करणं, न मन इत्याशङ्कयाह — **संस्कारस्त्विति**। चतुर्थहेतुं व्याचष्टे — **भावावेशादिति**। स्मरणं सुखादिसाक्षात्कारं च विहाय सर्वत्रानुभवे इन्द्रियलिङ्गादिप्रमाणसहकृतमेव मनः प्रवर्तत इति व्याप्तिसिद्धिरिति भावः। **शब्दलिङ्गादेरिति**। शाब्दलैङ्गिकाभावानुभवे इति शेषः। अभावज्ञाने इन्द्रियाणां करणत्वमित्यत्रापरानपि हेतूनाह— **प्रतियोगिनीत्यादिना**। आद्यहेतुं विवृणोति — **यद्धीत्यादिना**। नन्विन्द्रियमा-

---

१. भावरूपासाधारणकारणसाहित्यानियमात्।

नापि न दृष्टो मैत्र इत्यवगतानुपलब्ध्याऽनुमानादप्यवमतेः । ग्राह्यतु वा ऽऽश्रयमिन्द्रियम् । तथापि न तेनेदं व्यवधीयते व्यापारत्वात् । अन्यथा सर्वसविकल्पकानां प्रत्यक्षत्वाय दत्तो जलाञ्जलिः स्यात् ।

नन्वेवं सति धूमोपलम्भोऽप्यस्य व्यापारः स्यात् । तथा च गतमनुमानेनापीति चेन्न । यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात् । न च धूमाद्युपलब्धिमन्तरेण चक्षुषो वह्निज्ञानकारणत्वं न निर्वहति, संयोगवदिति ।

अस्ति च भावाभावविपर्ययः । सोऽयं यस्य दोषमनुविधत्ते, तदेवात्र करणमिति न्याय्यम् । न चानुपलब्धिः स्वभावतो दुष्टा, नाप्यधिकरणग्रहणं प्रतियोगिस्मरणं वा स्वभावतो दुष्टम् । अनुत्पत्तिदशायामनुत्पत्तेरुत्पत्तिदशायाश्च स्वार्थप्रकाशनस्वभावताया अपरावृत्तेः । असंसृष्टयोरधिकरणप्रतियोगिनोः संसृष्टतया प्रतिभानं दुष्टम् । संसृष्टयोश्चासंसृष्टतयेति चेत्; नन्वयमेव विपर्ययः । तथाच आत्माश्रयो दोषः । तस्मात् दुष्टेन्द्रियस्य तद्विपर्ययसामर्थ्ये अदुष्टस्य तत्समीचीनज्ञानसामर्थ्यमपि । तथाच प्रयोगः – इन्द्रियमभावप्रमाकरणं, तद्विपर्ययकरणत्वात् । यत् यद्विपर्ययकरणं तत् तत्प्रमाकरणं, यथा रूपप्रमाकरणं चक्षुरिति ।

---

श्रयेण व्यवहितमित्याशङ्क्य, आश्रयस्य तद्व्यापारत्वेन न व्यवधायकत्वमित्याह—**ग्राह्यतु वेति** । वह्निज्ञाने वह्नीन्द्रियसंयोगस्यैव व्यापारत्वं, न तु धूमज्ञानस्येत्याह—**अस्ति चेत्यादिना** । यस्मिन्दुष्टे सति विद्यमानेऽपि वस्तुनि नास्तीति विपरीतबुद्धिरुदेत्यभावभ्रमात्मिका, तदेवादुष्टं तत्प्रमामपि जनयति । दुष्टत्वादुष्टत्वयोरिन्द्रियधर्मत्वादिन्द्रियमेवाभावबुद्धिमपि जनयति । विपर्ययोत्पादे हेत्वन्तरमाशङ्क्य निराकरोति — **असंसृष्टयोरित्यादिना** – **आत्माश्रयदोष** इत्यन्तेन । तुरीयं

---

१. इन्द्रियस्य निर्विकल्पकेनान्यथासिद्धेः । २. सम्योगवदिति व्यतिरेकदृष्टान्तः । यथा संयोगं व्यापारं विना चक्षुषो वह्निसाक्षात्कारकारणत्वं न निर्वहति न तथा धूमपरामर्शं विनेत्यर्थः ।

विकल्पनात् खल्वपि । 'अघटं भूतलमि' ति हि विशिष्टधीरवश्य-मिन्द्रियकरणिका स्वीकर्तव्या, प्रमाणान्तरं वा सप्तममास्थेयम् । यथा हि विशेष्यमात्रोपक्षीणामिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणा अनुपलब्धिरपि न करणं स्यात् । स्वस्वविषयमात्रप्रवृत्तयोः प्रमाणयोः समाहारः कारणमिति चेन्न । विषयभेदे फलवैजात्ये च तदनुपपत्तेः । न हि मृत्सु तन्तुषु च व्याप्रियमाणयोः कुलालकुविन्दयोः समाहारः स्यात् । नापि घटपटाधिकारिणां चक्रवेमादीनां समाहारः क्वचिदुपयुज्यते । तत्र कर्बुरकार्याभावान्न तथा । प्रकृते तु विशिष्टप्रत्ययस्य परोक्षापरोक्षरूपस्य दर्शनात्तथेति चेन्न । विरुद्धजातिसमावेशाभावात् । भावे वा करम्बित एव कार्ये द्वयोरपि शक्तिरभ्युपगन्तव्या, दर्शनबलात् । न हि नियतविषयेण सामर्थ्येन कर्बुरकार्यसिद्धिः ; अन्यत्रापि तथाप्रसङ्गात् । ननूभयोरप्युभयत्र सामर्थ्ये कोऽर्थो मिथः सन्निधानेनेति चेन्न । तत्सहितस्यैव तस्य तत्र सामर्थ्यादिति । एतेन 'सुरभिचन्दनमि'त्यादयो व्याख्याताः । तथा चाभावविषयेऽपीन्द्रियसामर्थ्यस्य दुरपह्नवत्वादलमसद्ग्रहेणेति[१] ।

स्यादेतत् । नागृहीते विशेषणे विशिष्टबुद्धिरुदेति, तत्कार्यत्वात् । न च विशिष्टसामर्थ्ये केवलविशेषणेऽपि सामर्थ्यम् ; केवलसौरभेऽपि

हेतुमाह – विकल्पनादिति । ननूदाहरणे कर्बुरस्य उभयात्मकविचित्रकार्यस्याभावान्न समाहार इत्याशङ्क्य विरुद्धयोः परोक्षत्वापरोक्षत्वयोर्नैकत्र समावेश इत्याह — कर्बुरेत्यादिना । दर्शनबलात्समावेशाङ्गीकारे तु विशिष्टप्रत्ययेऽनुपलब्धेरिन्द्रियस्य च शक्तिरङ्गीकर्तव्या । तथाऽङ्गीकारे प्रत्यभिज्ञावत्तदपि प्रत्यक्षफलमिति जितमस्माभिरित्याशयेनाह — भावे वेति । अन्यत्रापीति । घटपटसामग्रीतोऽपि कर्बुरकार्योत्पत्तिप्रसङ्गादिति भाव. । घ्राणजसौरभज्ञानसहकृतचक्षुषा सुरभिचन्दनमिति विशिष्टप्रत्ययोपपत्तिरिति तत्रापि न समाहारः कारणमित्याह – एतेनेति । 'घटाभाववद्भूतल' मिति विशिष्टज्ञानस्यैन्द्रियकत्वेऽपि विशेषणस्य घटाभावस्य ज्ञानमनुपलब्धिजन्यमेवेत्याशयेनाभावप्रत्यक्षमनुपपत्तिचतुष्टयेन पूर्वपक्षी प्रतिक्षि-

१. असद्गवेषणेनेति पाठान्तरम् ।

**चक्षुषो वृत्तिप्रसङ्गात् । अतोऽभावविशेषणग्रहणाय मानान्तरसम्भवः । अपि च कथमनालोचितोऽर्थ इन्द्रियेण विकल्प्येत ? न च मानान्तरस्याप्येषा रीतिः ; अनुमानादिभिरनालोचितस्याप्यर्थस्य विकल्पनात् , अप्राप्तेश्च । न ह्यभावेनेन्द्रियस्य संयोगादिः संभवति । न च विशेषणत्वं, संबन्धान्तरपूर्वकत्वात्तस्य । अवश्याभ्युपगन्तव्यत्वाच्चानुपलब्धेः । न हि तदुपलब्धौ तस्याभावोपलम्भ इति चेत् ; उच्यते –**

अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥

---

पति — **स्यादेतदित्यादिना** । द्वितीयामनुपपत्तिमाह — **अपि चेति** । अयं भावः — ऐन्द्रियकज्ञानस्य सर्वस्यापि सविकल्पकत्वादभावग्रहस्यैन्द्रियकत्वे सोऽपि सविकल्पको वाच्यः । सविकल्पकस्य निर्विकल्पकपूर्वकत्वात्तदर्थं पूर्वं तस्य निर्विकल्पकं वाच्यम । तच्च न सम्भवति, अभावस्य प्रतियोग्यवच्छिन्नस्यैव ग्रहादिति । तृतीयानुपपत्तिमाह – **अप्राप्तेश्चेति** । अभावस्येन्द्रियेण संयोगादिसम्बन्धो नास्ति, विशेषणविशेष्यभावस्यापि दण्डी, नीलोत्पलमित्यादौ संयोगसमवायादिपूर्वकत्वात्सोऽपि नास्तीति भावः । तुरीयामाह – **अवश्येति** । भवतापीन्द्रियसहकारितया अनुपलब्धिरङ्गीकर्तव्या । तथा चोभयवादिसिद्धा सैव हेतुरस्त्विति भावः ।

निराकरोति—**उच्यत इति** । अवच्छेदस्य=प्रतियोगिनो ग्रहस्य, ध्रौव्यं =अवश्यंभावः । अभावस्य प्रतियोगिना निरूपणीयत्वादिति यावत् । अयं भावः—विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्वनियमो नास्ति । किन्त्ववच्छेद्यानियतज्ञानजन्यस्यैव । एवञ्चाभावस्य विशेषणत्वेऽपि तस्य ग्रहणं पूर्वं नापेक्षितम् । यदि चाभावग्रहस्यावच्छेदग्रहध्रौव्यं नाङ्गीक्रियते तदानीं तस्य पूर्वं ग्रहणमस्माभिरप्यङ्गीक्रियत एवेति सिद्धसाधनम् । विशेषणविशेष्यभावसम्बन्धस्यापि सम्बन्धान्तरापेक्षायां तस्यापि सम्बन्धान्तरापेक्षेत्यनवस्था । एवमनङ्गीकारे प्रमाणान्तरस्वीकारेऽपि नोपपत्तिरिति कारिकार्थः ।

---

१. इन्द्रियाणां हि प्राप्तार्थग्राहकत्वमिति नियमः । नास्ति चाभावेन सह तेषां प्राप्तिरित्याह – अप्राप्तेश्चेति ।

स ह्यर्थविशेषणीभविष्यन् केवलोऽपि विस्फुरेत्, यस्यावच्छेदकज्ञानं न व्यञ्जकम्। स च विकल्पयितव्य आलोच्यते, यो विशेषणज्ञाननिरपेक्षेणेन्द्रियेण विज्ञाप्यते । यस्तु तत्पुरःसर एव प्रकाशते, तत्र तस्य विकल्पसामग्रीसमवधानवत एव सामर्थ्यान्नायं विधिः। स्वभावप्राप्तौ सत्यामप्यधिका प्राप्तिः प्रतिपत्तिबलेन रूपादावभ्युपगता । इह त्वनवस्थादुस्थतया न तदभ्युपगमो, न तु स्वभावप्रत्यासत्तिरेतावतैव विफलायते । न चेदेवं, प्रमाणान्तरेऽपि सर्वमेतद्दुर्घटं स्यात् । तथाहि—सर्वमेव मानं साक्षात्परंपरया वा निर्विकल्पकविश्रान्तम् ! न ह्यनुमानादिकमप्यनालोचनपूर्वकम्। ततोऽनालोचितोऽभावः कथमनुपलब्ध्याऽपि विकल्प्येत। न च तया तदालोचनमेव जन्यते, प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात् । शक्यत्वे वा किमपराद्धमिन्द्रियेण । तथा, सम्बन्धान्तरगर्भत्वनियमेन विशेषणत्वस्य, मानान्तरेऽपि कः प्रतीकारः? तदभावस्य तदानीमपि समानत्वात् ।

---

**स ह्यर्थविशेषणीभविष्यन्निति** । अयं भावः - येषां घटपटाद्यर्थानां स्वस्य ज्ञानैरर्थान्तरनिरपेक्षैरेव परस्परव्यवच्छेदः शक्यक्रियस्तेषां क्वचिद्विशेषणत्वं क्वचिच्च स्वातन्त्र्येण भानं च सम्भवति । येषामभावादीनां स्वमात्रगोचरं ज्ञानं न व्यवच्छेदकं । प्रतियोगिज्ञाननैरपेक्ष्येणेतरव्यवच्छिन्नतया न प्रतीयन्ते च तेषां केवलस्फुरणमन्तरेणैव विशिष्टज्ञानगोचरत्वमिति । द्वितीयामनुपपत्तिं निराकरोति — **रूपादाविति** । रूपादिस्थले स्वाभाविकस्य विशेषणविशेष्यभावस्य सत्त्वेऽपि दृश्यमानत्वादधिकः समवायोऽप्यङ्गीक्रियते । अभावस्थले तु तथादर्शनाभावादनवस्थाभयाच्च न सम्बन्धान्तरकल्पना । **निर्विकल्पकविश्रान्तमिति** । मानान्तराणां प्रत्यक्षपूर्वकत्वात्तस्य च निर्विकल्पकपूर्वकत्वात्सर्वप्रमाणानां निर्विकल्पकपूर्वकत्वमावश्यकमिति भावः । **कः प्रतीकार इति** । विशेषणविशेष्यभावस्य सम्बन्धान्तराधीनत्वेऽनवस्थाया अपरिहार्यत्वादिति भावः । नन्वस्मन्मते तादात्म्यं सम्बन्धान्तरमस्तीत्याशङ्क्य, तादात्म्यं

---

१. अनुपलब्ध्याद्यमानान्तरस्वीकारेऽपि ।

परस्य तादात्म्यमस्तीति चेत्; ननु यद्यसावस्ति, अस्त्येव, न चेन्नैव। न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्तन्ते इति। अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिद्ध्येत्, न तु मानान्तरत्वम्। अन्यथा भावोपलम्भेऽप्यभावानुपलब्धिरेव प्रमाणं स्यात्, नेन्द्रियम्। अभावोपलम्भे भावानुपलम्भवत् भावोपलम्भे अभावानुपलम्भस्यापि वज्रलेपायमानत्वादिति।

प्रत्यक्षादिभिरेभिरेवमपरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥



॥ इति श्रीन्यायकुसुमाञ्जलौ तृतीयस्तबकः ॥

---

वस्तुतो नास्ति। यद्यस्ति, अस्माकमप्यस्तीति नानुपपत्तिरित्याह — **ननु यद्य-सावित्यादिना**। अवश्याभ्युपेयत्वमात्रेण प्रमाणान्तरत्वे इन्द्रियस्य प्रमाणत्वं भज्येतेत्याह — **अन्यथेत्यादिना**। परमेश्वरं स्तुवन् परिच्छेदार्थमुपसंहरति — **प्रत्य-क्षादिभिरिति**। परमेश्वराधीनोत्पत्तिकानां प्रत्यक्षादीनां यस्मिन्नबाधकत्वं तं प्रपद्यामह इति सम्बन्धः।

इति श्रीमद्राममूर्तिबुधेन्द्रचरणकमलसेवासमासादितन्यायविद्यावैशद्येन श्रीमद्वरदाचार्यवर्यव्यवस्थापितनारासिंहसंस्कृतकलाशाला-न्यायालङ्कारपण्डितेन सोमशेखरशास्त्रिणा निर्मि-तायां कुसुमाञ्जलिटिप्पण्यां तृतीयः स्तबकः।

॥ शुभमस्तु ॥



श्रीगणेशाय नमः

# सामोदे न्यायकुसुमाञ्जलौ

## चतुर्थः - स्तबकः



ननु सदपीश्वरज्ञानं न प्रमाणम्; तल्लक्षणायोगात्। अनधिगतार्थगन्तुस्तथाभावात्। अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात्। न च नित्यस्य सर्वविषयस्य चानधिगतार्थता; व्याघातात्। अत्रोच्यते—

अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।
यथार्थानुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

न ह्यधिगतेऽर्थे अधिगतिरेव नोत्पद्यते, कारणानामप्रतिबन्धात्। न चोत्पद्यमानाऽपि प्रमातुरनपेक्षितेति न प्रमा; प्रामाण्यस्याऽतदधीनत्वात्। नापि पूर्वाविशिष्टतामात्रेणाप्रामाण्यम्; उत्तराविशिष्टतया पूर्वस्याप्यप्रामाण्यप्रसङ्गात्। तदनपेक्षत्वेन तु तस्य प्रामाण्ये तदुत्तरस्यापि तथैव स्यादविशेषात्। छिन्ने कुठारादीनामिव परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति; फलोत्पादानुत्पादाभ्यां विशेषात्।

---

तुरीयां विप्रतिपत्तिं निराकर्तुमुपक्रमते — **नन्वित्यादिना**। **अनधिगतेति**। अनधिगतार्थबोधकस्यैव प्रमाणत्वादित्यर्थः। समाधत्ते — **उच्यत इति**। धारावाहिकबुद्धावव्याप्तिप्रसङ्गाद्भ्रमे चातिव्याप्तिप्रसङ्गाच्च यथार्थत्वाविशेषितमनधिगतार्थगोचरत्वं न प्रमालक्षणम। किन्तु स्वसमानविषयकानुभवसापेक्षस्मृतिव्यावृत्तं प्रमालक्षणमबाधितार्थगोचरानुभवत्वमेवेति कारिकार्थः। प्रमालक्षणेऽनधिगतत्वोपादानं न घटत इत्याह — **न ह्यधिगत इत्यादिना**। **अतदधीनत्वादिति**। अपेक्षानधीनत्वादित्यर्थः। **पूर्वाविशिष्टतामात्रेणेति**। पूर्वज्ञानसमानविषयकत्वमात्रेणेत्यर्थः। **फलोत्पादेति**। छिन्ने छेदनं न सम्भवति, ज्ञाते तु ज्ञानान्तरं भवतीति भेदादित्यर्थः। गृहीतग्राहिणो ज्ञानस्य यथार्थानुभवत्वनिषेधे बाधः।

तत्फलं प्रमैव न भवति, गृहीतमात्रगोचरत्वात्, स्मृतिवदिति चेन्न। यथार्थानुभवत्वनिषेधे साध्ये बाधितत्वात्। अनधिगतार्थत्वे सिद्धसाधनात्, साध्यसमत्वाच्च। व्यवहारनिषेधे तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च। न चानधिगतार्थत्वमेव तन्निमित्तम्; विपर्ययेऽपि प्रमाव्यवहारप्रसङ्गात्।

नाऽपि यथार्थत्वविशिष्टमेतदेव; धारावहनबुद्ध्यव्याप्तेः। न च तत्तत्कालकलाविशिष्टतया तत्राप्यनधिगतार्थत्वमुपपादनीयम्; क्षणोपाधीनामनाकलनात्। न चाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टता प्रकाशते इति कल्पनीयम्; स्वरूपेण तज्जननेऽनागतादिविशिष्टताऽनुभवविरोधात्। तज्ज्ञानेन तु तज्जनने सूर्यगत्यादीनामज्ञाने तद्विशिष्टताऽनुत्पादात्। न चैतस्यां प्रमाणमस्ति। नन्वनुपकार्यानुपकारकयोर्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः? । व्यवच्छित्तिप्रत्यायनेन व्यवच्छित्तौ स्वभावेन। अन्यथा तत्राप्यनवस्थानादिति।

---

अनधिगतार्थत्वनिषेधे सिद्धसाधनमित्याह – **यथार्थेत्यादिना**। **साध्यसमत्वाच्चेति**। भवन्मते प्रमात्वाभावस्य गृहीतग्राहित्वरूपत्वादिति भावः। प्रमाशब्दवाच्यत्वनिषेधे साध्ये प्रमापदप्रवृत्तिनिमित्तरहितत्वस्य घटादौ साध्यव्यापकस्य पक्षे साधनाव्यापकस्य चोपाधित्वमित्याह – **व्यवहारनिषेधेत्यादिना**। उपाधेः साधनव्यापकत्वमाशङ्क्य निराकरोति – **न चानधिगतेति**। **तन्निमित्तमिति**। प्रमाशब्दप्रवृत्तिनिमित्तमित्यर्थः। धारावाहिकबुद्धीनामपि पूर्वपूर्वाज्ञातकालगोचरतयाऽनधिगतार्थत्वमस्त्वित्याशङ्क्य कालोपाधीनामज्ञाततया तादृशकालभानोपगमो न सम्भवतीत्याह – **क्षणोपाधीनामिति**। किञ्च कालोपाधीनां सत्तया भासकत्वे अनागतादिभानं न स्यात्। तदुपाधीनामिदानीमभावादित्याह – **स्वरूपेणेति**। एतस्यां – विशिष्टतायाम्। विशेषणविशेष्यभावानुपपत्तिरेव तां गमयतीत्याशङ्क्य विशेषणविशेष्ययोः परस्परसम्बन्धं नैवेतरव्यावृत्तिसिद्धौ विशिष्टता नापेक्षणीयेत्याह – **नन्वित्यादिना**। **अनवस्थानादिति**। विशेषणविशेष्यभावार्थं वैशिष्ट्यम्। तस्यापि विशेषणत्वात्तेन विशेषणविशेष्यभावसिद्ध्यर्थं वैशिष्ट्यान्तरमित्यनवस्था।

ज्ञाततैवोपाधिरिति चेन्न। निराकरिष्यमाणत्वात्। तत्सद्भावेऽपि वा स्मृतेरपि तथैव प्रामाण्यप्रसङ्गात्। जनकागोचरत्वेऽप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञातताऽवभासनात्। अस्तु वा प्रत्यक्षे यथा तथा, गृहीतविस्मृतार्थश्रुतौ का वार्ता। अप्रमैवाऽसाविति चेत्; गतमिदानीं वेदप्रामाण्यप्रत्याशया। न ह्यनादौ संसारे 'स्वर्गकामो यजेते'ति वाक्यार्थः केनचिन्नावगतः। सन्देहेऽपि प्रामाण्यसन्देहात्। न च तत्रापि कालकलाविशेषाः परिस्फुरन्ति। न चैकजन्मावच्छेदपरिभाषयेदं लक्षणम्।[1] तत्राप्यनुभूतविस्मृतवेदार्थं प्रति अप्रामाण्यप्रसङ्गात्। कथं तर्हि स्मृतेर्व्यवच्छेदः? । अननुभवत्वेनैव। यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्यन्ति। 'तत्त्वज्ञानात्' इति सूत्रणात्। 'अव्यभिचारि ज्ञानमि'ति च।

ननु स्मृतिः प्रमैव किं न स्यात्? यथार्थज्ञानत्वात्, प्रत्यक्षाद्यनुभूतिवदिति चेन्न। सिद्धे व्यवहारे निमित्तानुसरणात्। न च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्; अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात्। न च स्मृतिहेतौ प्रमाणाभियुक्तानां महर्षीणां प्रमाणव्यवहारोऽस्ति, पृथगनुपदेशात्। उक्तेष्वन्तर्भावादनुपदेश इति चेन्न। प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः, लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्यसाधनत्वादिति।

---

प्रसङ्ग इति भावः। ननु धारावाहिकबुद्धौ पूर्वपूर्वज्ञानोत्पादितज्ञातताविशिष्टं भासत इत्यनधिगतार्थत्वसिद्धिरित्याशङ्क्याह — **निराकरिष्येति**। **जनकेति**। स्मृतेः स्वसमानविषयकानुभवजन्यत्वेन प्राथमिकस्मृतौ तदभानेऽपीत्यर्थः। भवन्मते वेदस्याप्यधिगतार्थगोचरतया प्रामाण्यं दुरुपपादमित्याह — **अस्तु वे**त्यादिना। स्वमते स्मृतिव्यवच्छेदं सूचयति — **अननुभवत्वेनैवे**ति। एवञ्च लक्षणे अनुभवत्वं निविष्टमिति भावः। अत्रार्थे सूत्रकारसंमतिमाह — **तत्त्वज्ञानेति**। ज्ञानपदमनुभवपरम्। ननु यथार्थज्ञानत्वमेव प्रमापदप्रवृत्तिनिमित्तमस्तु, किमनुभवत्वनिवेशेन? । एवञ्च स्मृतेरपि प्रमात्वं निर्बाधमित्याशङ्क्य निराकरोति — **ननु स्मृतिरित्यादिना**। स्मृतेः प्रमात्वेऽपि तत्करणस्य प्रत्यक्षादिष्वन्तर्भावान्न पृथगुपदेश इत्याशङ्क्य निराकरोति — **प्रत्यक्षस्येत्यादिना**। स्मृतिः न प्रमा,

---

1. एकजन्मनि।

एवं व्यवस्थिते तर्क्यतेऽपि । यदियमनुभवैकविषया सती तन्मुखनिरीक्षणेन तद्यथार्थत्वायथार्थत्वे अनुविधीयमाना तत्प्रामाण्यमव्यवस्थाप्य न यथार्थतया व्यवहर्तुं शक्यते इति । व्यवहारेऽपि पूर्वानुभव एव प्रमितिरनपेक्षत्वात् । न तु स्मृतिः, नित्यं तदपेक्षणात् । असमीचीने ह्यनुभवे स्मृतिरपि तथैव ।

नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात् । न । विषयभेदात् । आगमस्तर्हि न प्रमाणं, तद्विषयमानान्तरानुविधानात् । न । प्रमातृभेदात् । धारावाहिकबुद्धयस्तर्हि न प्रमाणम्, आद्यप्रमाणानुविधानात् । न । कारणविशुद्धिमात्रापेक्षया प्रथमवदुत्तरासामपि पूर्वमुखनिरीक्षणाभावात् कारणबलायातं काकतालीयं पौर्वापर्यमिति ।

---

स्वान्यूनानतिरिक्तविषयकस्वजनकानुभवगत प्रामाण्यव्याप्तप्रामाण्यकत्वादित्यनुमानेऽनुग्राहकं तर्कमाह— **एवं व्यवस्थित** इत्यादिना । स्मृतिर्यदि प्रमा स्यात्तर्हि स्वान्यूनानतिरिक्तविषयकस्वजनकानुभवगतप्रामाण्यव्याप्तप्रामाण्यका न स्याद्व्यतिरेकेणेच्छादिवदिति तर्कोऽत्रानुसन्धेयः । अत्र प्रमापदं यथार्थानुभवपरम् । प्रामाण्यपदद्वयं यथार्थानुभवत्वपरम् । तेनेच्छादेः दृष्टान्तत्वसिद्धिः ।

नन्वनुमानस्यापि कारणीभूतव्याप्तिप्रत्यक्षप्रामाण्याधीनप्रामाण्यकतया अप्रामाण्यं स्यादित्याशङ्क्य, व्याप्तिज्ञाने लिङ्गलिङ्गिनोर्भानम् । अनुमितौ तु पक्षतावच्छेदकस्यापीति न समानविषयकानुभवप्रामाण्यापेक्षेत्याह— **विषयभेदादिति** । ननु शाब्दबोधस्य वक्तृगतशब्दप्रयोगमूलीभूतज्ञानप्रामाण्याधीनप्रामाण्यकतया न प्रमात्वमित्याशङ्क्य, तत्र वक्तृश्रोतृरूपप्रमातृभेदोऽस्ति । स्मृतौ तु तन्नास्तीत्याह—**प्रमातृभेदादिति** । तथाच स्वजनकानुभवस्य सामानाधिकरण्यं निवेशनीयमिति भावः । धारावाहिकबुद्धिस्थले तूत्तरोत्तरबुद्धीनां न पूर्वपूर्वमुखनिरीक्षणम् । किन्तु मूलकारणपारिशुद्ध्यादेव तासामुत्पत्तिरित्याह — **कारणविशुद्धी**त्यादिना । यद्यपि धारावाहिकस्थले क्रमान्यथानुपपत्त्या पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेषणज्ञानविधया कारणत्वमङ्गीकर्तव्यम् । तथापि तदतिरिक्तस्यैव परमुखनिरीक्षकस्याप्रामाण्याङ्गीकारान्न दोषः । ननु स घट इत्याकारकस्मृतावतीतानुभववैशिष्ट्यरूपतत्तावगाहिन्य

यदि हि स्मृतिर्न प्रमितिः पूर्वानुभवे किं प्रमाणम्। स्मृत्यन्यथाऽनुपपत्तिरिति चेन्न। तया कारणमात्रसिद्धेः। न तु तेनानुभवेनैव भवितव्यमिति नियामकमस्ति। अननुभूतेऽपि तर्हि स्मरणं स्यादिति चेत्; किं न स्यात्। न ह्यत्र प्रमाणमस्ति। पूर्वानुभवाकारोल्लेखः स्मृतेर्दृश्यते, सोऽन्यथा न स्यादिति चेत्; तत्किं बौद्धवद्विषयाकारान्यथाऽनुपपत्त्या विषयसिद्धिस्त्वयाऽपीष्यते, तथाभूतं ज्ञानमेव वा तत्सिद्धिः?। आद्ये तद्वदेवानैकान्तिकत्वम्। न हि यदाकारं ज्ञानं तत्पूर्वकत्वं तस्येति नियमः, अनागतज्ञाने विभ्रमे च व्यभिचारात्।

द्वितीये तु स्मृतेप्रामाण्यमवर्जनीयम्। मा भूत्पूर्वानुभवसिद्धिः, किं नश्छिन्नमिति चेत्; न तर्हि स्मृत्यनुभवयोः कार्यकारणभावसिद्धिरिति। न। तदप्रामाण्येऽपि पूर्वापरावस्थावदात्मप्रत्यभिज्ञानप्रामाण्यादेव तदुपपत्तेः। 'योऽहमन्वभवममुमर्थं सोऽहं स्मरामी' ति मानसप्रत्यक्षमस्तीति। न च गृहीतग्राहित्वमीश्वरज्ञानस्य; तदीयज्ञानान्तरागोचरत्वादीश्वरस्य। न च तदेव ज्ञानं कालभेदेनाप्रमाणम्; अनपेक्षत्वस्यापरावृत्तेः। तथापि वा अप्रामाण्येऽतिप्रसङ्गादिति।

---

सत्यामतीतानुभवः प्रतीयत इति स्मृतेरनधिगततत्ताऽवगाहितया प्रमात्वं सिद्ध्यतीत्याशङ्कते — यदीत्यादिना — तर्हीत्यन्तेन। तथाभूतं ज्ञानमेवेति। विषयगोचरं ज्ञानमेव तत्सिद्धिरित्यर्थः। द्वितीयेत्विति। तत्तागोचरं ज्ञानमेव तत्तासिद्धिः। तच्च ज्ञानं स्मृतिरेव। तथाच स्मृतेरनधिगतार्थगोचरत्वेन प्रमात्वमवर्जनीयमिति भावः। अतीतानुभवविशिष्टे आत्मनि स्मृतिवैशिष्ट्यावगाहिप्रत्यभिज्ञाप्रामाण्यादेव स्मृत्यनुभवयोः कार्यकारणभावसिद्धौ न स्मृतेः प्रमात्वं सिद्ध्यतीत्याह — न, तदप्रामाण्येऽपीत्यादिना। ईश्वरज्ञानस्य नित्यतया तस्याऽप्यगृहीतग्राहित्वं सूपपादमेव। पुरुषान्तरज्ञानमादायाधिगतार्थत्वे कुत्रापि प्रमा न स्यादित्याह — न चेत्यादिना। नन्वीश्वरज्ञानस्य नित्यत्वेऽपि पूर्वक्षणगृहीतस्यैव द्वितीयक्षणे ग्रहणात् गृहीतग्राहित्वमित्याशङ्क्य स्मृतिवदनुभवस्य पूर्वग्रहणापेक्षा नास्तीति प्रागेवोक्तमित्याह — अनपेक्षत्वस्येति। अतिप्रसङ्गादिति। ज्ञानानां द्विक्षणावस्था-

**स्यादेतत्! अनुपकारकं विषयस्य, तदीयमेतदीयं वा न भवितुमर्हत्यविशेषात् । न च तस्येत्यनियतं तत्र प्रमाणमतिप्रसङ्गात् । न च तदभिन्नमन्तरेण तदुपकारस्योत्पत्तिः, तथाऽनभ्युपगमात् । अभ्युपगमे वा, कार्यत्वस्यानैकान्तिकत्वात् । अत्रोच्यते –**

**स्वभावनियमाभावादुपकारोऽपि दुर्घटः ।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥**

**विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः । स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः । अवश्यश्चैतदनुमन्तव्यम्, अतीतादिविषयत्वानुरोधात् । न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्, असत्त्वात् । न च तद्धर्मसामान्याधारं**

---

यित्वेन द्वितीयक्षणे प्रथमक्षणगृहीतग्राहित्वेनाप्रमात्वप्रसङ्गादित्यर्थः । 'अर्थेनैव विशेषो हि निराकारतया धियामि' त्यभियुक्तोक्तेर्ज्ञानस्य विषयनियम्यत्वं वाच्यम् । तच्च ज्ञानेन विषये विशेषाधानमन्तरा दुर्घटम् । स च विशेषः ज्ञाततारूपः । तथा च ज्ञानजन्यज्ञातताश्रयत्वमेव वस्तुनः ज्ञानविषयत्वम् । एवञ्च ज्ञाततारूपधर्मस्योपादानज्ञानजन्यत्वं न सम्भवति । तदुत्पत्तेः प्रागर्थस्य तदुपादानस्य ज्ञानविषयत्वाभावात् । तस्य तदजन्यत्वाङ्गीकारे च क्षित्यादीनां सकर्तृकत्वसाधकः कार्यत्वहेतुस्तत्र व्यभिचरतीत्याशङ्कते — **स्यादेतदित्यादिना** ।

निराकरोति – **उच्यत इति** । ज्ञाततोत्पत्तेः पूर्वं घटस्य ज्ञानविषयत्वाभावे घटज्ञानेन घट एव ज्ञाततोत्पाद्यते । न तु पट इति व्यवस्था दुःशका, नियामकाभावात् । स्वभावादेव तथेति चेत्; ज्ञाततानङ्गीकारेऽपि स्वभावादेव घटस्य विषयत्वमङ्गीक्रियताम् । किञ्च वर्तमाने घटे यथाकथञ्चित् ज्ञाततोत्पत्तिरस्तु । अतीतेऽनागते वा घटादौ ज्ञाततोत्पत्तिर्दुर्घटा, आश्रयाभावादिति निराकर्तुराशयः । नन्वतीतानागतादौ घटत्वे ज्ञाततोत्पत्तिरिति चेत्तर्हि घटस्याविषयत्वापत्तिः। घटत्वघटयोस्तादात्म्याद्घटस्य विषयत्वमिति चेद्घटरसयोरपि तादात्म्याद्घटज्ञाने रसस्यापि भानापत्तिरित्याह – **न हि तत्र ज्ञानेनेत्यादिना** । ननु धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम् । एवञ्च

किञ्चित् क्रियते इति युक्तम्; तेन तस्यैव विषयत्वप्राप्तेः। तादात्म्या-द्विशेषस्यापि सैव ज्ञाततेति चेत्; तत्किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्। घटाकारेण ज्ञायत एवासौ रसः इति चेत्; अथ रसाकारेण किं न ज्ञायते?। तेन रूपेण ज्ञातताऽनाधारत्वादिति चेत्; न तर्हि, वर्तमानसामान्यज्ञानेऽप्यतीतानागतादिज्ञानम्, तेनाकारेण प्राकट्यानाधारत्वादिति।

ननु क्रियया कर्मणि किञ्चित् कर्तव्यमिति व्याप्तेरस्त्वनुमानम्?। न।

अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके॥ ३॥

धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनेकान्तात्। न हि शरसंयोगेन गगने किञ्चित् क्रियते, अन्त्यशब्दाभिव्यक्त्या वा। स्पन्दाभिप्रायेणासिद्धेः। व्यापाराभिप्रायेण शब्दलिङ्गेन्द्रियव्यापारैर्व्यभिचारात्। न हि तैः प्रमेये किञ्चित् क्रियते, अपि तु प्रमातर्येव। फलाभिप्रायेणापि तथा। अन्ततस्तेनैवानेकान्तात्, अनवस्थानाच्च।

---

'घटं जानाती' त्यादौ घटस्य ज्ञानक्रियाकर्मत्वेन ज्ञानजन्यज्ञातताख्पफलाश्रयत्वात् ज्ञातता सिद्धिरित्याशङ्क्य निराकरोति — न, **अनैकान्त्या**दित्यादिना। अधिके = ज्ञातताख्पधर्मे। क्रिया लिङ्गं न भवति, अनैकान्त्यादसिद्धेश्च। भवद्भिर्ज्ञाततायां प्रमाणत्वेनोपन्यस्तोऽपि घटानुभवः घटे ज्ञानवैशिष्ट्यमवगाहत इति सोऽपि न तत्र प्रमाणमिति कारिकार्थः। धात्वर्थमात्रस्य क्रियापदार्थत्वे गगने, अन्त्यशब्दे च व्यभिचारमाह — **धात्वर्थमात्रेति**। स्पन्दस्य क्रियापदार्थत्वे ज्ञानस्पन्दयोर्भेदादसिद्धो हेतुः। व्यापारमात्रस्य तथात्वे दोषमाह — **व्यापारेति**। ननु यद्यत्फलं तत्तत्प्रमेये किञ्चिज्जनकमिति फलमेवात्र क्रियेत्युक्तिरपि न सङ्गच्छते। फलपरम्पराभ्युपगमेऽनवस्था। क्वचिद्विश्रामे चरमफलस्याकिञ्चित्करत्वेन तत्रैव व्यभिचार इत्याह — **फलाभिप्रायेणेति**। ननु क्रियाया आशुविनाशित्वादाशुविनाशी क्रियापदार्थ इत्यपि न। चतुःक्षणानवस्थायित्वरूपाऽऽशुविनाशित्वस्य

आशुविनाशिधर्माभिप्रायेण द्वित्वादिभिरनियमात् । आशुकारकाभिप्रायेण कर्मण्यसिद्धेः। कर्मण्याशुकारकं ज्ञानमित्येव हि साध्यम् ! कर्तर्याशुकारकत्वस्य कर्मोपकारत्वेनाव्याप्तेः । शब्दादिव्यापारैरेवानेकान्तात् ।

स्यादेतत् । अनुभवसिद्धमेव प्राकट्यम् । तथाहि – ज्ञातोऽयमर्थ इति सामान्यतः, साक्षात्कृतोऽयमर्थ इति विशेषतो विषयविशेषणमेव किञ्चित् परिस्फुरतीति चेत् ; तदसत् । यथा हि –

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
तथा–
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥

किं न पश्यसि, घटक्रिया पटक्रियेतिवत् कृतो घटः, करिष्यते घट इत्यादि । तथैव गृहाण, घटज्ञानं पटज्ञानमितिवत् ज्ञातो घटो ज्ञास्यते ज्ञायते इति । कथमसम्बद्धयोर्धर्मधर्मिभाव इति चेत् ; ध्वस्तो घट इति यथा । एतदपि कथमिति चेत् ; नूनं ध्वंसेनापि घटे किञ्चित् क्रियते इति वक्तुमध्यवसितोऽसि । तन्निरूपणाधीननिरूपणो ध्वंसः स्वभावादेव तदीय इति किमत्र सम्बन्धान्तरेणेति चेत् ; प्रकृतेऽप्येवमेव । एतेन फलानाधारत्वादर्थः कथं कर्मेति निरस्तम् । विनाश्यवत् करणव्यापारविषयत्वेन तदुपपत्तेः । स्वाभाविकफलनिरूपकत्वञ्च तुल्यम् ।

---

द्वित्वादिसाधारण्यादित्याह — आशुविनाशीति । आशुकारकत्वं क्रियात्वमित्यपि न साधु । कर्मण्याशुकारकत्वस्य साध्याविशिष्टतया न हेतुत्वम् । कर्तर्याशुकारकत्वं प्रकृतानुपयोगि । शब्दलिङ्गादिव्यापारे पदार्थोपस्थितिपरामर्शादौ व्यभिचारि चेत्याह – आशुकारकेत्यादिना । ज्ञानानां निराकारतया घटाद्यर्थैरेव घटज्ञानमित्यादौ ज्ञानस्य विशेषरूपेण भानम् । एवमेव 'ज्ञातो घट' इत्यादौ ज्ञानक्रिययैव घटाद्यर्थानां विशिष्टतया भानम्, न तु तत्र ज्ञाने घटे वा आधेयमतिशयान्तरमस्तीत्याशयेन कारिकोत्तरार्धं व्याकुरुते – स्यादेतदित्यादिना । क्रियाजन्यफलाश्रयत्वं न कर्मत्वं, किन्तु करणव्यापारगोचरत्वमेव । तथाच क्रियाजन्यफलानाश्रयत्वाद्घटादीनां कर्मत्वं न स्यादिति शङ्का निरस्तेत्याह — एतेनेति । स्वाभाविकेति । कर्तृव्यापारफलस्य विनाशस्य प्रतियोगिनिरूप्यत्ववत् करणव्यापार-

ननु ज्ञानमतीन्द्रियत्वादसाधारणकार्यानुमेयं तदभावे कथमनुमीयेत?। अप्रतीतञ्च कथं व्यवहारपथमवतरेदिति ज्ञानव्यवहारान्यथाऽनुपपत्त्या ज्ञाततकल्पनम्। तदप्यसत्। परस्पराश्रयप्रसङ्गात्। ज्ञाततया हि ज्ञानमनुमीयेत, ज्ञाते च तद्व्यवहारान्यथाऽनुपपत्तिस्तां ज्ञापयेत्। कुतश्च ज्ञानमतीन्द्रियम्?। इन्द्रियेणानुपलभ्यमानत्वादिति चेन्न। अनुमानोपन्यासे साध्याविशिष्टत्वात्। अनुपलब्धिमात्रोपन्यासे तु योग्यताऽविशेषिताऽसौ कथमैन्द्रियकोपलम्भाभावं गमयेत्। तद्विशेषणे तु कथमतीन्द्रियं ज्ञानमिति। तथाविधज्ञाततानाश्रयत्वादिति चेन्न। आश्रयासिद्धेः। व्यवहारान्यथाऽनुपपत्त्यैव सिद्ध आश्रय इति चेन्न। ज्ञानहेतुनैव तदुपपत्तेः। तस्याऽऽत्ममनःसंयोगादिरूपस्य सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेन्न। तावन्मात्रस्य व्यवहाराहेतुत्वात्। अन्यथा ज्ञानस्वीकारेऽपि तुल्यत्वात्। स्मरणान्यथाऽनुपपत्त्येति चेन्न। तस्याप्यसिद्धेः।

अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत्; किमतः?। न ह्येतावता ज्ञानं तदिति सिध्यति, तस्यैवासिद्धेः। तथापि नियतस्य

---

फलस्य ज्ञानस्यापि विषयनिरूप्यत्वं स्वाभाविकमित्यर्थः। प्रकारान्तरेण ज्ञाततासिद्धिमाशङ्क्य निराकरोति—**परस्परेति**। ज्ञाने सिद्धे तद्व्यवहारः, तदनुपपत्त्या ज्ञाततासिद्धिः। ज्ञाततासिद्धौ ज्ञानसिद्धिरिति परस्पराश्रयप्रसङ्ग इति भावः। इदानीं ज्ञानस्यातीन्द्रियत्वमेव नास्तीत्याह—**कुतश्चेत्यादिना**। इन्द्रियेणानुपलभ्यमानत्वेनातीन्द्रियत्वे साध्ये साध्यहेत्वोरैक्यात्सन्दिग्धासिद्धिर्दोषः। अनुपलब्धिमात्रेणाभावो न सिद्ध्यति। योग्यानुपलब्ध्या तत्साधने ज्ञानस्यैन्द्रियकत्वमङ्गीकर्तव्यमेवेत्याह — **तद्विशेषणे त्विति**। ज्ञाततानाश्रयत्वेन तदभावसाधने दोषमाह — **आश्रयासिद्धेरिति**। आश्रयस्य ज्ञानस्य प्रमाणान्तरेणासिद्धेरित्यर्थः। ज्ञानस्यातीन्द्रियत्वे तत्सिद्धिरेव न स्यात्प्रमाणाभावादिति भावः। **तावन्मात्रस्येति**। अयं भावः — सुषुप्तौ ज्ञानोत्पत्तिप्रसङ्गादात्ममनःसम्योगमात्रस्य यथा न ज्ञानहेतुत्वं तथा न व्यवहारहेतुत्वमपीति। **तस्याप्यसिद्धेरिति**। स्मरणस्यापि ज्ञानत्वेन प्रमाणाभावादसिद्धेरित्यर्थः। **तस्यैवासिद्धेरिति**। ज्ञानस्यैवासिद्ध्या व्यवहारे तस्य निमित्तत्वं न सम्भवतीति

कर्तुः प्रवृत्तेः कर्तृधर्मेणैव केनचित्प्रवृत्तिहेतुना भवितव्यमिति चेत्, अस्त्विच्छा प्रत्यक्षसिद्धा, न तु ज्ञानम् । सैव कथं नियताधिकरणे उत्पद्यतामिति चेन्न । ज्ञानाभ्युपगमेऽपि तुल्यत्वात् । स्वहेतोः कुतश्चिदिति चेत्; तत एव इच्छा अस्तु, किं ज्ञानकल्पनयेति ।

स्यादेतत् । प्रकाशमाने खल्वर्थे तदुपादित्सादिरुपजायते, न तु सुषुप्त्यवस्थायामप्रकाशमानेऽप्यर्थे इत्यनुभवसिद्धम् । तत इच्छायाः कारणं विलक्षणमेव किञ्चित्परिकल्पनीयं, यस्मिन् सति सुष्वापलक्षणमौदासीन्यमर्थविषयमात्मनो निवर्तते इति चेत्; हन्तैवं सुष्वापनिवृत्तिमनुभवसिद्धां प्रतिजानानेन ज्ञानमेवापरोक्षमिष्यते । अचेतयन्नेव हि सुषुप्त इत्युच्यते, अचैतन्यनिवृत्तिरेव हि चैतन्यं ज्ञानमिति । तथाच कालात्ययापदिष्टो हेतुः ।

एतेन क्षणिकत्वादिति निरस्तम् । अपिच – किमिदं क्षणिकत्वं नाम? । यद्याशुतरविनाशित्वं, तदाऽनैकान्तिकम् । अथैकक्षणावस्थायित्वं, तदसिद्धं प्रमाणाभावात् ।

ननु स्थायिविज्ञानं यादृशमर्थक्षणं गृह्णदुत्पद्यते, द्वितीयेऽपि क्षणे किं तादृशमेव गृह्णाति, अन्यादृशं वा, न वा कमपीति । न प्रथमः, तस्य क्षणस्यातीतत्वात् । प्रत्यक्षज्ञानस्य च वर्तमानाभत्वात् । न चातीतमेव वर्तमानाभतयोल्लिखति; भ्रान्तत्वप्रसङ्गात् । न द्वितीयः, विरम्य-

---

भावः । कर्तुः प्रवृत्त्यन्यथाऽनुपपत्त्या ज्ञानसिद्धिरित्याशङ्क्य, इच्छया तदुपपत्तिरित्याह – **अस्त्वित्यादिना** । ननु सुषुप्तिलक्षणौदासीन्यनिवृत्तिमन्तराऽर्थप्रकाशाभावादौदासीन्यनिवर्तकमिच्छाकारणं किञ्चित्सिद्धम् । तदेव ज्ञानमिति चेत्तर्हि ज्ञानस्य प्रत्यक्षत्वमेव सिद्ध्यतीति समाधत्ते – **स्यादेतदित्यादिना** । ज्ञानस्याऽतीन्द्रियत्वसाधने बाधोपन्यासेन क्षणिकत्वहेतुरपि निरस्त इत्याह – **एतेनेति** । **अनैकान्तिकमिति** । इच्छादाविति शेषः । स्थायित्वानुपपत्त्या क्षणिकत्वं सिद्ध्यतीति बौद्धमतमाशङ्कते – **नन्वित्यादिना** । **वर्तमानाभत्वादिति** । वर्तमानविषयत्वादित्यर्थः । अनागतस्यापि प्रत्यक्षत्वापत्त्या एकदा निखिलक्षणावभासित्व-

व्यापारायोगात्। प्रथमतोऽपि तथाऽभ्युपगमेऽनागतावेक्षणप्रसङ्गात्। न तृतीयः, ज्ञानत्वहानेरिति महाव्रतीयाः।

तदसत्। ज्ञानं गृह्णातीत्यस्यैवार्थस्याऽनभ्युपगमात्। अपि तु तदेव ग्रहणमित्यभ्युपगमः। तथाच ज्ञानं प्रथमे क्षणे यमर्थमालम्ब्य जातं, द्वितीयेऽपि क्षणे तदालम्बनमेव तन्न वेति प्रश्नार्थः। तत्र तदालम्बनमेव तदिति परमार्थः। न चैवं भ्रान्तत्वम्; विपरीतानवगाहनात्। तथापि ज्ञेयनिवृत्तौ कथं ज्ञानाऽनुवृत्तिः?। तदनुवृत्तौ वा कथं ज्ञेयनिवृत्तिरिति चेत्; किमस्मिन्ननुपपन्नम्?। न हि ज्ञानमर्थश्चेत्येकं तत्त्वमेकायुष्कं वेति।

सत्यपि वा क्षणिकत्वे कथमप्रत्यक्षम्?। इत्थं, यथोच्यते — न स्वप्रकाशं, वस्तुत्वादितरवस्तुवत्। न च ज्ञानान्तरग्राह्यम्; ज्ञानयौगपद्यनिषेधेन समानकालस्य तस्याभावात्। ग्राहककाले ग्राह्यस्यातीतत्वेन वर्तमानाभत्वानुपपत्तेः। ग्राह्यकाले च ग्राहकस्यानागतत्वादिति चेत्; नन्वेवं ज्ञातताऽपि न प्रत्यक्षा स्यात्, क्षणिकत्वात्। कथम्?। इत्थम्— न स्वप्रकाशा, वस्तुत्वात्। न जनकग्राह्या; अनागतत्वात्, विरम्य व्यापारायोगाच्च। न समसमयज्ञानग्राह्या; ज्ञानजनकेन्द्रियसम्बन्धाननुभवात्। न च तदुत्तरज्ञानग्राह्या; तदानीमतीतत्वादिति। क्षणिकत्वमेव तस्याः कुत इति चेत्; त्वदुक्तयुक्तेरेव। तथाहि — यं क्षणमाश्रित्य जाता ततः परमपि तमेवाऽऽश्रयतेऽन्यं वा?। न वा कमपीति। तत्र न प्रथमः, तस्य तदानीमसत्त्वात्। न

---

मपि न सम्भवतीत्याह — प्रथमतोऽपीति। निराकरोति — तदसदित्यादिना। ज्ञानार्थयोर्यौगपद्येऽनुपपत्तिर्नास्ति। तयोरैक्याभावेनान्यतरविगमेऽप्यनुपपत्तिर्नास्तीत्याह—किमस्मिन्नित्यादिना। एवं ज्ञानस्य स्थायित्वे नानुपपत्तिरित्युक्त्वा क्षणिकत्वेऽपि नातीन्द्रियत्वमिति वक्तुं शङ्कते — सत्यपि वेत्यादिना। न स्वप्रकाशमिति। न स्वेन ग्राह्यमित्यर्थः। ज्ञानस्य क्षणिकत्वेनातीन्द्रियत्वे ज्ञातताया अप्येषा दुरवस्थेत्याह — नन्वेवं ज्ञातताऽपीत्यादिना। ननु ज्ञानं ज्ञाततां जनयित्वा पश्चात् तां गृह्णातीत्यत आह — विरम्येति। ज्ञाततायाः क्षणिकत्वं साधयति — तथा-

द्वितीयः, अप्रतिसंक्रमात् । एकक्षणावगाहिनि च ज्ञाने तदन्यक्षणाऽऽश्रयज्ञाततताफलत्वेन भ्रान्तत्वप्रसङ्गात् । रजतावगाहिनि पुरोवर्त्तिवृत्तिज्ञाततताफल इव । न चान्यमपि क्षणं ज्ञानमवगाहते; तदानीं तस्याऽसत्त्वात् । न तृतीयः, निःस्वभावताप्रसङ्गात् । न ह्यसौ तदानीं तदीया अन्यदीया वेति । अतीतेनापि तेनैव क्षणेनोपलक्षिताऽनुवर्तते इति चेत्; एवं तर्हि वर्तमानार्थता प्रकाशस्य न स्यात् । अन्यथा ज्ञानस्यापि तथाऽनुवृत्तेः को दोषः ? । न हि वर्तमानार्थप्रकाशसम्बन्धमन्तरेण ज्ञानस्यान्या वर्तमानावभासता नाम । अर्थनिरपेक्षप्रकाशनानुवृत्तिमात्रेण तथात्वे भूतभाविविषयस्यापि ज्ञानस्य तथाभावप्रसङ्गात् । अथ माभूदयं दोष इति स्थूल एव वर्तमानः प्रकाशेनाऽऽश्रीयते इत्यभ्युपगमः, तदा तज्ज्ञानस्यापि स एव विषय इति तस्यापि न क्षणिकत्वमिति ।

ननु ज्ञानमैन्द्रियकं चेत्; विषयसञ्चारो न स्यात्, सञ्ज्ञातसम्बन्धत्वात् । न च जिज्ञासानियमान्नियमः; तस्याः संशयपूर्वकत्वात् । तस्य च धर्मिज्ञानपूर्वकत्वात् । धर्मिणश्च सन्निधिमात्रेण ज्ञाने जिज्ञासाऽपेक्षणे वा उभयथाऽप्यनवस्थानादिति । तन्न ।

---

हीत्यादिना । वर्तमानार्थता, वर्तमानावगाहितेत्यर्थः । वर्तमानार्थनिरपेक्षस्याप्यवभासस्य वर्तमानार्थतास्वीकारे दोषमाह—भूतभाविविषयस्यापीति । तथाभावप्रसङ्गादिति । वर्तमानार्थताप्रसङ्गादित्यर्थः । ज्ञाततायाः क्षणिकत्वापत्तिवारणार्थं वर्तमानस्थिरपदार्थाश्रयत्वाङ्गीकारे ज्ञानस्यापि स एव विषय इति न क्षणिकत्वमित्याह – मा भूदयमित्यादिना । ज्ञानस्यैन्द्रियकत्वे दोषमाशङ्कते—नन्विति । विषयसञ्चारो न स्यादिति । मनःसम्युक्तसमवायरूपस्य सन्निकर्षस्य सार्वदिकत्वेन ज्ञानपरम्पराया एव ग्राह्यत्वादिति भावः । ज्ञानसन्निकर्षस्य सार्वदिकत्वेऽपि जिज्ञासारूपकारणान्तरविरहान्न ज्ञानप्रवाहस्यापत्तिरित्याशङ्क्य निराकरोति — अनवस्थानादिति । सामान्यतोज्ञाते विशेषतश्चाज्ञाते जिज्ञासा जायत इति ज्ञानजिज्ञासार्थं सामान्यतोज्ञानस्यानुभवो वाच्यः । तस्य च जिज्ञासानिरपेक्षसन्निकर्षमात्राधीनत्वे तद्ग्रहणपरम्पराया अविच्छेदादनवस्था

ज्ञाततापक्षेऽपि तुल्यत्वात् । तस्या अपि हि ज्ञेयत्वे तत्परम्पराज्ञानापाताज्जिज्ञासानियमस्य च तद्वदनुपपत्तेः । न च इन्द्रियसम्बन्धविच्छेदाद्विराम इति युक्तम् ; आत्मप्राकट्याव्यापनात् । स्वभावत एव काचिदसावजिज्ञासिताऽपि ज्ञायते, न तु सर्वेति चेत्तुल्यम् । प्रागुत्पन्नज्ञाततास्मरणजनितजिज्ञासः समुन्मीलितनयनः सञ्जातज्ञानसमुत्पादितप्राकट्यं जिज्ञासुरेव प्रतिपद्यते इत्यतो नानवस्थेति चेत् ; तुल्यमेतत् ।

ननु ज्ञानं न सविकल्पकग्राह्यं, तस्य निर्विकल्पकपूर्वकत्वात्, निर्विकल्पकगृहीतस्य तावत्कालानवस्थानात्, तस्य तेनैव विनाशात् । नाऽपि केवलनिर्विकल्पकवेद्यम् ; तस्य सविकल्पकोन्नेयत्वेन तदभावे प्रमाणाभावात् । न च समवायाभाववन्निर्विकल्पकनिरपेक्षसविकल्पकगोचरत्वं ज्ञानस्येति साम्प्रतम् ; तयोर्विशेषणांशस्य प्राग्ग्रहणादनुमानादिवत्तदुपपत्तेः । प्रकृते तु ज्ञानत्वादेरनुपलब्धेरगृहीतविशेषणायाश्च

---

जिज्ञासासापेक्षत्वे तत्रापि धर्मिज्ञानं, तत्र च जिज्ञासेत्युभयथाऽप्यनवस्थेति भावः । किञ्चित् ज्ञानमजिज्ञासितमेव ज्ञायते, किञ्चिज्जिज्ञासितम्, किञ्चिच्च न ज्ञायत एवेति समाधातुमादौ प्रतिबन्दीं तावदाह—**ज्ञाततापक्षेऽपीति** । **आत्मप्राकट्याव्यापनादिति** । चक्षुरादीन्द्रियसम्बन्धस्य विच्छेदेऽप्यात्ममनःसंयोगस्याविच्छेदादिति भावः । ननु प्रागुत्पन्नज्ञाततायाः सामान्यतोज्ञाने इदानींतनाऽपि ज्ञातता ज्ञातैवेति तत्संस्कारात् ज्ञाततासामान्यजिज्ञासावशादिदानीन्तनी ज्ञातता ज्ञायत इत्याशङ्क्य ज्ञानस्थलेऽप्येतत्तुल्यमित्याह — **प्रागुत्पन्नेत्यादिना** । प्रकारान्तरेण ज्ञानस्य प्रत्यक्षासम्भवमाशङ्कते — **ननु ज्ञानमिति** । **तस्य तेनैव विनाशादिति** । योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविशेषगुणनाश्यत्वादिति भावः । **समवायाभाववदिति** । समवायाभावयोरिवेत्यर्थः । **अनुमानादिवदिति** । यथा पूर्वं गृहीतस्यैव साध्यस्य पक्षेण सह वैशिष्ट्यमनुमितौ भासते तद्वदित्यर्थः । सर्वस्यापि सविकल्पकविषयस्य निर्विकल्पकज्ञानविषयत्वनियमो नास्तीत्यतो निर्विकल्पकज्ञानाविषयस्यैव सविकल्पकस्य ज्ञानान्तरवेद्यत्वमित्याशयेन समाधत्त

बुद्धेर्विशेष्यानुपसंक्रमात्कथमेवं स्यात्। न। उत्पन्नमात्रस्यैव बाह्यविषय-ज्ञानस्यालोचनात्। ततस्तत्पुरःसरं प्रथमत एव तज्जातीयस्य ज्ञानान्तरस्य विकल्पनात्। इन्द्रियसन्निकर्षस्य तदैव विशेषणग्रहणलक्षणसहकारिसम्पत्तेः। व्यक्त्यन्तरसमवेतमपि हि सामान्यं तदेवेत्युपयुज्यते। अन्यथा अनुमानादिविकल्पानामनुत्पादप्रसङ्गः। तद्गतस्य विशेषणस्याग्रहणात्, अन्यगतस्य चानुपयोगात्, किं लिङ्गग्रहणसहकारि स्यादिति। एतेन शब्दादिप्रत्यक्षं व्याख्यातमिति।

स्यादेतत्। विषयनिरूप्यं हि ज्ञानमिष्यते। न चातीन्द्रियस्य परमाण्वादेर्मनसा वेदनमस्ति। न चाऽगृहीतस्य विशेषणत्वम्। न च नित्यपरोक्षस्यापरोक्षविशिष्टबुद्धिविषयत्वम्; व्याघातादिति। न। बाह्येन्द्रियग्राह्यस्याग्राह्यस्य वा पूर्वज्ञानोपनीतस्यैव मनसा वेदनात्। अन्यथाऽतीन्द्रियस्मरणस्याप्यनुत्पत्तिप्रसङ्गात्। इयांस्तु विशेषः— तस्मिन् सति तद्बलादेव, असति तु तज्जनितवासनाबलात्। न चैवं

---

**उत्पन्नमात्रस्यैवे**त्यादिना। अयं भावः — आदौ सविकल्पकज्ञानम्, ततस्तद्गतज्ञानत्वस्य निर्विकल्पकम्, तदनन्तरं सविकल्पकान्तरम्, तदनन्तरं तस्यानुव्यवसाय इति। ननु व्यक्त्यन्तरवृत्तितया गृहीतं सामान्यं तज्जातीयव्यक्त्यन्तरे कथं विशिष्टज्ञानं जनयतीत्याशङ्क्य, महानसे गृहीतस्य वह्नेः पर्वतादौ विशिष्टानुमितिजनकत्ववदुपपद्यत इति समाधत्ते — **व्यक्त्यन्तरसमवेतमपी**त्यादिना। एवमेकगकारगततया गत्वनिर्विकल्पकाद्व्यक्त्यन्तरे गकारे गत्वविशिष्टबुद्ध्युपपत्तिरित्याह — **एतेनेति**। प्रकारान्तरेण ज्ञानस्याप्रत्यक्षत्वमेवेति शङ्कते — **विषयनिरूप्यमि**त्यादिना। अयं भावः — विषयावच्छिन्नमेव ज्ञानं मानसे भासते। तथाचातीन्द्रियगोचरं ज्ञानं न मानसम्, परमाण्वादेर्मनसा सन्निकर्षाभावात्। एवञ्च तद्वदेवान्यस्यापि मनसा सन्निकर्षाभावादिति। मनसा स्वसंयुक्तसमवेतविशेषणतारूपसन्निकर्षस्य परमाण्वाद्यतीन्द्रियसाधारण्यान्नातीन्द्रियज्ञानस्य मानसत्वानुपपत्तिरिति समाधत्ते — **न, बाह्येन्द्रिये**त्यादिना। विषयसन्निधाने मानसं प्रत्यक्षम्, अन्यथा स्मरणमिति मानसप्रत्यक्षस्मरणयोर्भेदमाह — **इयांस्त्विति**।

सति स्मरणमेतत् , अगृहीतज्ञानगोचरत्वात् । न च विषयांशे तत्तथा स्यादिति युक्तम् ; अवच्छेदकतया प्रागवस्थावदवभासनात् । न च प्रत्यभिज्ञानमपि ग्रहणस्मरणाकारम् ; विरोधात् । अथ ग्रहणस्मरणयोः कियती सामग्री ? । अधिकोऽर्थसन्निकर्षो ग्रहणस्य, संस्कारमात्रं सन्निकर्षः स्मरणस्य ।

अथ ग्रहणत्वेऽपि कुत एतदपरोक्षाकारम् ? । कारणान्तरनिरपेक्षेण संस्काराधिकसन्निकर्षवतेन्द्रियेण जनितत्वात् । अथ कः सन्निकर्षः? । ज्ञानेन संयुक्तसमवायः, तदर्थेन संयुक्तसमवेतविशेषणत्वमिति । मनसो निरपेक्षस्य बहिर्व्यापारेऽन्धबधिराद्यभावप्रसङ्ग इति चेत् ; ज्ञानावच्छेदकं प्रति नाऽयं दोषः । न च ज्ञानापेक्षया बहिरित्यस्ति । नाऽपि तद्विषयापेक्षया निरपेक्षत्वम् ; तस्यैव ज्ञानस्यापेक्षणात् । अथाऽपि ज्ञानं प्रत्यक्षमित्यत्र किं प्रमाणम् ? । प्रत्यक्षमेव । यदसूत्रयत् – 'ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम्' ( न्याय०. ५ - १ - ३१ ) इति ।

ननु नेश्वरज्ञानं प्रमा, नित्यत्वेनाफलत्वात् । नाऽपि प्रमाणम्, अकारकत्वात् । अत एव च न तदाश्रयः प्रमातेति । उच्यते –

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

---

अवच्छेदकतयेति । यथा प्रत्यभिज्ञायां तत्तारूपप्रागवस्था विशेषणतया भासते, तद्वद्विषयोऽपि ज्ञानांशे विशेषणतया भासत इत्यर्थः । तथा च विशेषणांशे गृहीतग्राहित्वेऽपि न स्मृतित्वमिति भावः । प्रत्यभिज्ञायाः प्रत्यक्षत्वं कथमित्याशङ्क्य समाधत्ते – कारणान्तरेति । कारणान्तरनिरपेक्षस्य मनसः बहिर्व्यापारे दोषमाशङ्क्य ज्ञानसापेक्षस्यैव प्रवृत्तिः, न निरपेक्षस्येति समाधत्ते – ज्ञानावच्छेदकं प्रतीति । ज्ञानस्य प्रत्यक्षत्वे सूत्रकारसंमतिमाह – ज्ञानविकल्पानामिति । ज्ञानविशेषाणां प्रत्यक्षादीनां अध्यात्मम् = आत्मनि भावाभावसंवेदनात् ज्ञानं प्रत्यक्षमिति सूत्रार्थः । नन्वीश्वरज्ञानमजन्यत्वेन प्रमा न भवति । व्यापाराभावाकरणमपि न भवतीत्याशङ्कते – नन्विति । निराकरोति – उच्यत इति ।

समीचीनो ह्यनुभवः प्रमेति व्यवस्थितम् । तथाचानित्यत्वेन विशेषणमनर्थकम् । नित्यानुभवसिद्धौ तद्व्यवच्छेदस्यानिष्टत्वात्, असिद्धौ च व्यवच्छेद्याभावात् । न चेदमनुमानम्; आश्रयासिद्धिबाधयोरन्यतराक्रान्तत्वात् ! न तत्प्रमाकरणमिति त्विष्यत एव, प्रमया सम्बन्धाभावात् । तदाश्रयस्य तु प्रमातृत्वमेतदेव, यत् तत्समवायः । कारकत्वे सतीति तु विशेषणं पूर्ववन्निरर्थकमनुसन्धेयम् । यद्येवं, 'आप्तप्रामाण्यात्' (न्याय०. २-२-६७) इति सूत्रविरोधः । तेन ईश्वरस्य प्रामाण्यं प्रतिपाद्यते, न तु प्रमातृत्वमिति चेन्न । निमित्तसमावेशेन व्यवहारसमावेशाविरोधात् । प्रमासमवायो हि प्रमातृव्यवहारनिमित्तं, प्रमया त्वयोगव्यवच्छेदेन सम्बन्धः प्रमाणव्यवहारनिमित्तं, तदुभयश्चेश्वरे । अत्रापि कार्ययेति विशेषणं पूर्ववदनर्थकमूहनीयम् ।

स्यादेतत् । प्रमीयतेऽनेनेति प्रमाणं, प्रमिणोतीति प्रमातेति कारकशब्दत्वमनयोः । तथाच कथमकारकमर्थ इति चेन्न । एतस्य व्युत्पत्तिमात्रनिमित्तत्वात् । प्रवृत्तिनिमित्तं तु यथोपदर्शितमेव, व्यवस्थापनात् । अन्यथा अस्मदादिषु न प्रमातृव्यवहारः स्यात् । सर्वत्र स्वातन्त्र्याभावात् । कारणव्यवहारस्त्वन्यत्र यद्यप्यन्यनिमित्तकोऽपि, तथापीहोक्तनिमित्तविवक्षयैवेति । एवं तर्हि पञ्चमप्रमाणाभ्युपगमेऽपसिद्धान्तः । न हि तत्प्रत्यक्षमनुमानमागमो वा, अनिन्द्रियालिङ्गशब्दकरणत्वात् । न । साक्षात्कारिप्रमावत्तया प्रत्यक्षान्तर्भावात्, इन्द्रियार्थसन्निकर्षोत्पन्नत्वस्य च लौकिकमात्रविषयत्वात् ।

---

ईश्वरज्ञानं न प्रमा, अफलत्वादित्यनुमानमपि ज्ञानासिद्धावाश्रयासिद्ध्या, तत्सिद्धौ बाधेन च दूषितमित्याह– **न चेदमिति** । ईश्वरस्य प्रमाणत्वे पञ्चमप्रमाणापत्तिमाशङ्क्य प्रत्यक्षेऽन्तर्भावमाह – **प्रत्यक्षान्तर्भावादिति** । नन्वीश्वरज्ञानस्य सर्वविषयकत्वेन सविषयकभ्रमविषयकत्वं वाच्यम् । तथा च भ्रमविषयविषयकत्वेनेश्वरज्ञानस्यापि भ्रमत्वापत्तिरित्याशङ्क्य, भ्रमे शुक्तौ रजतत्वं प्रकारः । ईश्वरज्ञाने तु भ्रमे रजतत्वप्रकारकत्वं प्रकार इति नेश्वरज्ञानस्य भ्रमत्वापत्तिरिति परिहरति –

स्यादेतत् । तथापीश्वरज्ञानं न प्रमा, विपर्ययत्वात् । यदा खल्वेतदस्मदादिविभ्रमानालम्बते, तदैतस्य विषयमस्पृशतो न ज्ञानावगाहनसम्भव इति तदर्थोऽप्यालम्बनमभ्युपेयम् । तथाच तदपि विपर्ययः, विपरीतार्थालम्बनत्वात् । तदनवगाहने वा अस्मदादेर्विभ्रमानविदुषस्तदुपशमायोपदेशानामसर्वज्ञपूर्वकत्वमिति । न । विभ्रमस्याप्रामाण्येऽपि तद्विषयस्य तत्त्वमुल्लिखतोऽभ्रान्तत्वात् । अन्यथा भ्रान्तिसमुच्छेदप्रसङ्गः, प्रमाणाभावात् । तथाऽप्यारोपितार्थावच्छिन्नज्ञानाऽऽलम्बनत्वेन कथं न भ्रान्तत्वमिति चेन्न । यत् यत्र नास्ति तत्र तस्यावगतिरिति भ्रान्त्यर्थत्वात् । एतदालम्बनस्य चैवमुल्लिखतः सर्वत्र यथार्थत्वात् । न हि न तद्रजतं, नाऽपि तत्रासत्, नाऽपि तन्नावगतमिति ।

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥



॥ इति श्रीन्यायकुसुमाञ्जलौ चतुर्थस्तबकः ॥ ४ ॥

---

**विभ्रमस्याप्रामाण्येऽपीति** । ननु सविषयकभ्रमालम्बनत्वेन कुतो न भ्रमत्वमित्याशङ्क्य भ्रमलक्षणाभावान्न भ्रमत्वमित्याह — **तथाऽप्यारोपितार्थे**त्यादिना । इदं ज्ञानं शुक्तौ रजतत्वावगाहीत्याकारकमीश्वरज्ञानं तु प्रमैवेत्याह — **एतदालम्बनस्येति** । ईश्वरस्तुत्या स्तबकमुपसंहरति — **साक्षात्कारिणीति** । नित्यसम्बद्धे इतरानपेक्षे यथार्थे प्रत्यक्षानुभवे निविष्टः निखिलानां प्रस्तुतानां वस्तूनां क्रमो यस्य सः । लेशादृष्टिः = विशेषादर्शनं, तन्निमित्ता या दुष्टिः = दूषणं, तस्य विगमेन प्रभ्रष्टः शङ्कातुषः = स्वनिर्मितवेदप्रामाण्यशङ्कालेशः यस्मात्सः । शिवः मे प्रमाणम्, शरण्यमित्यर्थः । शङ्कोन्मेषकलङ्किभिरपरैः किं फलमिति संक्षेपः ।

इति श्रीमद्रामभूर्तिबुधेन्द्रचरणकमलसेवासमासादितन्यायविद्यावैशद्येन
श्रीमद्वरदाचार्यवर्यव्यवस्थापितनारसिंहसंस्कृतकलाशाला-
न्यायालङ्कारपण्डितेन सोमशेखरशास्त्रिणा निर्मि-
तायां कुसुमाञ्जलिटिप्पण्यां चतुर्थः स्तबकः ।

॥ शुभमस्तु ॥

श्रीगणेशाय नमः

# सामोदे न्यायकुसुमाञ्जलौ

## पञ्चमः - स्तबकः



नन्वीश्वरे प्रमाणोपपत्तौ सत्यां सर्वमेतदेवं स्यात्, तदेव तु न पश्याम इति चेत्; न ह्येष स्थाणोरपराधो[1] यदेनमन्धो न पश्यति। तथाहि–

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥ १॥

क्षित्यादि कर्तृपूर्वकं, कार्यत्वादिति।

न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः।
सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना॥२॥

तथाहि – अत्र ये शरीरप्रसङ्गमुद्भाटयन्ति, कस्तेषामाशयः?। किमीश्वरं पक्षयित्वा कर्तृत्वाच्छरीरित्वम्; ततः शरीरव्यावृत्तेरकर्तृत्वम्।

पञ्चमीं विप्रतिपत्तिं निराकर्तुमुपक्रमते – नन्वित्यादिना। हेत्वष्टकेनेश्वरसद्भावमाह–कार्येति। प्रथमहेतुं विवृणोति– क्षित्यादीति। अनुमाने दोषानुद्धरति – न बाध इति। अस्य कार्यत्वस्योपजीव्यत्वान्न बाधः। अयं भावः– व्यापकानुपलब्ध्या बाधः, प्रतिरोधरूपश्चेति बाधो द्विविधः। अत्र चेश्वरं पक्षीकृत्य कर्तृत्वव्यापकशरीरानुपलब्ध्या कर्तृत्वाभावरूपबाधोद्भावनं न सम्भवति। प्रमितसाध्याभाववद्धर्मिण एव बाधत्वेन धर्मिसाधकहेतूनां कार्यतोपजीवनात्। नापि क्षित्यादिकं पक्षीकृत्य शरीराजन्यत्वादिभिरकार्यत्वापादनम्, तेषां दुर्बलत्वात्। नापि परकीयव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युद्भावनेन विरोधः। कार्यत्वे पक्षधर्मत्वसिद्ध्या, परकीयहेतौ तदसिद्ध्या तुल्यबलत्वाभावात्। विपक्षबाधकतर्काभावाद्व्याप्तिग्राहकोपाधिविरहप्रदर्शनाभावाच्च, अनिबन्धना = शिथिला असिद्धिरपि नास्तीति कारिकातात्पर्यार्थः। एतदेव विवृणोति – तथा हीत्यादिना।

१. स्थाणोरीश्वरस्य, अथ च दारुविशेषस्य। अन्धस्तत्र प्रमाणादर्शी, चक्षूरहितश्च।

अथ क्षित्यादिकमेव पक्षयित्वा कार्यत्वाच्छरीरिकर्तृकत्वम्। यद्वा शरीराजन्यत्वादकार्यत्वं, तत एव वाऽकर्तृकत्वं, परव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युपदर्शनमात्रं वेति। तत्र प्रथमद्वितीययोराश्रयासिद्धिबाधापसिद्धान्तप्रतिज्ञाविरोधाः। तृतीये तु व्याप्तौ सत्यां नेदमनिष्टम्। असत्यां तु न प्रसङ्गः। चतुर्थे बाधानैकान्तिकौ। पञ्चमे त्वसमर्थविशेषणत्वम्। षष्ठेऽपि नागृह्यमाणविशेषया व्याप्त्या बाधः। न चागृह्यमाणविशेषव्याप्त्या गृह्यमाणविशेषायाः सत्प्रतिपक्षत्वम्। अस्ति च कार्यत्वव्याप्तेः पक्षधर्मतापरिग्रहो विशेषः। कर्ता शरीरी, विपरीतो न कर्तेति चाऽनयोस्तद्विरहः।

ननु यत् बुद्धिमद्धेतुकं तच्छरीरहेतुकमिति नियमे, यच्छरीरहेतुकं न भवति तद्बुद्धिमद्धेतुकमपि न भवतीति विपर्ययनियमोऽपि स्यात्। तथाच पक्षधर्मताऽपि लभ्यते इति चेन्न। गगनादेः सपक्षभागस्यापि सम्भवात् केवलव्यतिरेकित्वानुपपत्तेः। अन्वये तु विशेषणासामर्थ्यात्।

---

**तत्र प्रथमद्वितीययोरिति।** धर्मिणः ईश्वरस्याग्रहे आश्रयासिद्धिः। तद्ग्रहे तद्ग्राहकमानेन बाधः। ईश्वरस्य शरीराङ्गीकारेऽपसिद्धान्तः। आदौ कर्तृत्वेन शरीरं प्रतिज्ञायाऽधुना तदभावाङ्गीकारे प्रतिज्ञाहानिः। **चतुर्थ इति।** क्षित्यादेः सर्वस्य पक्षत्वे बाधः। कस्यचिदपक्षत्वे तत्रैव व्यभिचार इत्यर्थः। **पञ्चम इति।** अजन्यत्वमात्रस्यैव गमकत्वाच्छरीराजन्यत्वं व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धमिति भावः। परव्याप्तिस्तम्भनमित्यत्र स्तम्भनं बाधः, प्रतिरोधो वा वक्तव्यम्। तच्च न सम्भवतीत्याह — **षष्ठेऽपीति।** ननु क्षित्यादिकं न चेतनजन्यं, शरीराजन्यत्वादित्यत्र यद्यद्बुद्धिमद्धेतुकं तत्तच्छरीरजन्यमिति व्यतिरेकव्याप्तौ पक्षधर्मतालाभसम्भवादस्मदीयहेतुरपि न दुर्बल इत्याशङ्कते — **नन्वित्यादिना।** किमयं हेतुः केवलव्यतिरेकी? उतान्वयव्यतिरेकी?। तत्र गगनादीनां सपक्षत्वात् केवलव्यतिरेकित्वं न सम्भवति। अन्वयव्यतिरेकित्वेऽपि अजन्यत्वस्यैव हेतुत्वसम्भवे शरीराजन्यत्वं व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धम्। तथाचाऽव्याप्तस्य पक्षधर्मतासत्त्वमकिञ्चित्करमिति समाधत्ते—**न, गगनादेरित्यादिना।** क्षित्यादिकमकर्तृकं

हेतुव्यावृत्तिमात्रमेव हि तत्र कर्तृव्यावृत्तिव्याप्तं, न तु शरीररूपहेतुव्यावृत्तिरित्युक्तम्। व्याप्तश्च पक्षधर्म उपयुज्यते, न त्वन्योऽतिप्रसङ्गात्।

एतेन तद्व्यापकरहितत्वादिति सामान्योपसंहारस्यासिद्धत्वं वेदितव्यम्। न हि यद्व्यावृत्तिर्यदभावेऽन्वयव्यतिरेकाभ्यामुपसंहर्तुमशक्या, तत् तस्य व्यापकं नामेति। विशेषविरोधस्तु विशेषसिद्धौ सहोपलम्भेन, तदसिद्धौ मिथोधर्मिपरिहारानुपलम्भेन निरस्तो नाशङ्कामप्यधिरोहतीति।

स्यादेतत्। अस्ति तावत् कार्यस्यावान्तरविशेषो यतः शरीरिकर्तृकत्वमनुमीयते। तथाच तत्प्रयुक्तामेव व्याप्तिमुपजीवेत् कार्यत्वसामान्यमिति स्यात्। न स्यात्। न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्। तथा सति सौरभकटुत्वनीलिमाऽऽदिविशेषे सति न धूमसामान्यमग्निं गमयेत्। किं नाम साधकसामान्ये साध्यसामान्यमाश्रित्य प्रवर्तमाने तद्विशेषः साध्यविशेषव्याप्तिमाश्रयेत्। न तु विशेषे सति सामान्यमकिञ्चित्करम्; तस्यापि विशेषान्तरापेक्षयाऽकिञ्चित्करत्व-

---

तद्व्यापकरहितत्वादित्यपि प्रत्युक्तमित्याह — **एतेनेति**। अयं भावः — सामान्यतः कर्तृव्यापकरहितत्वमप्रसिद्धम्। शरीरजन्यत्वरहितत्वं तु व्यर्थविशेषणघटितमेवेति। एतदेवाह — **न हीति**। यदभावे साध्ये यद्व्यावृत्तिरन्वयव्यतिरेकाभ्यां दृष्टान्ते उपसंहर्तुं शक्यते तदेव तद्व्यापकम्। यथा धूमाभावे साध्ये वह्निव्यावृत्तिस्तादृशीति वह्निर्धूमस्य व्यापकः। प्रकृते च व्यर्थविशेषणघटितत्वेन न व्याप्यव्यापकभावसिद्धिरिति भावः। प्रकारान्तरेण सिद्ध्यसिद्ध्योरिति व्याचष्टे — **विशेषविरोधस्त्विति**। व्याप्तिपक्षधर्मतारूपविशेषविशिष्टयोः शरीरित्वाशरीरित्वयोः सिद्धौ, तयोः कर्तरि सहोपलम्भेन रूपरसयोरिव न विरोधः। तदसिद्धौ — कर्तरि तदुभयासिद्धौ, अन्यत्र परस्परधर्मिप्रतिक्षेपस्यानुपलम्भेन विशेषविरोधो निरस्त इत्यर्थः। ननु कार्यविशेषे घटादौ शरीरजन्यत्वस्य दृष्टत्वात् कार्यसामान्येऽपि शरीरस्य प्रयोजकत्वं सिद्ध्यतीति शरीरजन्यत्वं कार्यत्वहेतावुपाधिरित्याशङ्क्य, कार्यत्वसामान्यस्य कर्तृजन्यत्वव्याप्तौ कार्यविशेषप्रयोजकः शरीराजन्यत्वादिर्नोपाधिरिति परिहरति — **स्यादेतदित्यादिना — बहुलं लोक** इत्यन्तेन। ननु घटादिकार्य-

प्रसङ्गात् । सौरभादिविशेषं विहायापि धूमे वह्निर्दृष्टो, न तु विशेषं विहाय कार्ये कर्तेति चेन्न । कार्यविशेषः कारणविशेषे व्यवतिष्ठते, न तु कार्यकारणसामान्ययोः प्रतिबन्धमन्यथाकुर्यादिति । किं न दृष्टं कार्यं कारणमात्रे, अङ्कुरो बीजे, तद्विशेषो धान्ये, तद्विशेषः शालौ, तद्विशेषः कलमे इत्यादि बहुलं लोके । क्व वा दृष्टमणुद्रव्यारभ्यं द्रव्यं नित्यरूपाद्यारब्धं रूपादि । तथापि सामान्यव्याप्तेरविरोधात्सिद्ध्यत्येव । अवश्यञ्चैतदेवमङ्गीकर्तव्यम् । अन्यथा कार्यत्वस्याकस्मिकत्वप्रसङ्गात्।

स्यादेतत् । अन्वयव्यतिरेकि तावदिदं कार्यत्वमिति परमार्थः । तत्राऽऽकाशादेर्विपक्षात् किं कर्तृव्यावृत्तेः कार्यत्वव्यावृत्तिराहोस्वित् कारणमात्रव्यावृत्तेरिति सन्दिह्यते । तदसत् । कर्तुरपि कारणत्वात् । कारणेषु चान्यतमव्यतिरेकस्यापि कार्यानुत्पत्तिं प्रति प्रयोजकत्वात् । अन्यथा कारणत्वव्याघातात्, करणादिविशेषव्यतिरेकसन्देहप्रसङ्गाच्च ।

---

जाते शरीरजन्यत्वस्य प्रत्यक्षतया कार्यसामान्यस्य शरीरशरीरिसाधारणकर्तृजन्यत्वमिति व्याप्तिर्न सिद्ध्यतीत्याशङ्क्य विशेषव्याप्तिप्रत्यक्षेण सामान्यकार्यकारणभावबाधने द्व्यणुकादीनां परमाणुजन्यत्वं न स्यादित्याह — **क्व वा दृष्टमिति** । कार्यत्वसकर्तृकत्वव्याप्तौ विपक्षबाधकमाह — **अन्यथेति** । कारणान्तरस्येव कर्तुरप्यभावेन कार्यमाकस्मिकं स्यादित्यर्थः । ननु भवदीयकार्यत्वहेतोरप्यन्वयव्यतिरेकितया तत्र व्यतिरेकांशे विशेषसन्देहान्न व्याप्तिनिश्चयः सम्भवतीत्याशङ्कते — **स्यादेतदिति** । कार्यानुत्पादप्रयोजकाभावप्रतियोगित्वं कारणत्वम् । तथा च कर्तुरपि कारणत्वात्कर्तृव्यावृत्तौ न कार्योत्पाद इति तत्र कारणमात्रव्यावृत्तेरनपेक्षणान्नैतादृशशङ्कावकाश इति समाधत्ते — **तदसदिति** । एवमनङ्गीकारे दोषमाह — **करणादीति** । अयं भावः — सन्देहात्कर्तृव्यावृत्त्या कार्यत्वव्यावृत्त्य-

---

१. प्रतिक्षिप्तश्चाकस्मिकत्ववादः प्रथमे । किञ्चान्तर्दृष्ट्या विमृश्य तत्त्वविद्भिराकस्मिकत्ववादोऽज्ञानप्रभव इति निरणायि । ययोः कार्यकारणयोरज्ञानात्कारणतां कार्यताञ्च नोपलभामहे, तत्रेदमाकस्मिकमित्यभिमन्यामहे । अभिमानश्चायं 'कारणाभावात्कार्याभावः' इति पश्यता भगवता कणादेन समूलमुन्मूलितः ।

कथं हि निश्चीयते किमाकाशात् कारणव्यावृत्त्या कार्यत्वव्यावृत्तिः, उत करणव्यावृत्त्या? । एवं किमुपादानव्यावृत्त्या, किमसमवायिव्यावृत्त्या, किं निमित्तव्यावृत्त्येति । कार्यत्वात्करणमुपादानमसमवायि निमित्तं वा बुद्ध्यादिषु न सिद्ध्येत् । कर्तुः कारणत्वे सिद्धे सर्वमेतदुचितम्, तदेव त्वसिद्धमिति चेत्; किं पटादौ कुविन्दादिरकारणमेव कर्ता, प्रस्तुते वोदासीन एव साधयितुमुपक्रान्तः? । तस्माद्यत्किञ्चिदेतदपीति ।

ननु कर्ता कारणानामधिष्ठाता साक्षाद्वा शरीरवत्, साध्यपरम्परया वा दण्डादिवत्? । तत्र न पूर्वः, परमाण्वादीनां शरीरत्वप्रसङ्गात् । न द्वितीयः, द्वाराभावात् । न हि कस्यचित् साक्षादधिष्ठेयस्याऽभावे परम्परया अधिष्ठानं सम्भवति ।

तदयं प्रमाणार्थः – परमाण्वादयो न साक्षाच्चेतनाधिष्ठेयाः, शरीरेतरत्वात् । यत्पुनः साक्षादधिष्ठेयं न तदेवं, यथाऽस्मच्छरीरमिति । नापि परम्परया अधिष्ठेयाः, स्वव्यापारे शरीरानपेक्षत्वात्, स्वचेष्टायामस्मच्छरीरवत् । व्यतिरेकेण वा दण्डाद्युदाहरणम् । एवं क्षित्यादि न चेतनाधिष्ठितहेतुकं, शरीरेतरहेतुकत्वादित्यतिपीडया सत्प्रतिपक्षत्वम् । अपि च – पटादौ कुविन्दादेः किं कारकाधिष्ठानार्थमपेक्षा तेषामचेतनानां स्वतोऽप्रवृत्तेः, आहो कारकत्वेन? । न पूर्वः, तेषां परमेश्वरेणैवाधिष्ठानात् । न ह्यस्य ज्ञानमिच्छा प्रयत्नो वा वेमादीन् न व्याप्नोतीति सम्भवति । न चाधिष्ठितानामधिष्ठात्रन्तरापेक्षा, तदर्थमेव ।

---

नङ्गीकारे करणव्यावृत्त्या, कारणव्यावृत्त्या, समवायिव्यावृत्त्या, असमवायिव्यावृत्त्या, निमित्तव्यावृत्त्या वा कार्यत्वव्यावृत्तिरिति सन्देहाविश्रान्तेः कुत्रापि करणसमवाय्यसमवायिनिमित्तानि न सिद्ध्येरन्निति । कर्तुः कारणत्वमेव नास्तीत्याशङ्क्य कुविन्दादावेतत्प्रत्यक्षसिद्धं नाऽपह्नोतुमित्याह – **कर्तुः कारणत्वे** इत्यादिना । ईश्वरो न क्षित्यादीनां कर्ता, अधिष्ठेयरहितत्वात् । क्षित्यादिकं वा न चेतनाधिष्ठितहेतुकम् ; शरीरेतरहेतुकत्वादिति सत्प्रतिपक्षं शङ्कते – **ननु कर्ते**त्यादिना । कार्यत्वहेतौ सिद्धसाधनमभिधातुमुपक्रमते – **अपि चेति** ।

तथा सत्यनवस्थानादेवाऽविशेषात् । न द्वितीयः, अधिष्ठातृत्वस्याऽनङ्गत्वप्रसङ्गे दृष्टान्तस्य साध्यविकलत्वापत्तेः । न च हेतुत्वेनैव तस्यापेक्षाऽस्त्विति वाच्यम् । एवं तर्हि यत्कार्यं तत्सहेतुकमिति व्याप्तिः, न तु सकर्तृकमिति । तथाच तथैव प्रयोगे सिद्धसाधनात्। किञ्चाऽनित्यप्रयत्नपूर्वकत्वप्रयुक्तां व्याप्तिमुपजीवत् कार्यत्वं न बुद्धिमत्पूर्वकत्वेन स्वभावप्रतिबद्धम्। न ह्यनित्यप्रयत्नोऽपि बुद्ध्या शरीरवत् कारणत्वेनापेक्ष्यते, येन तन्निवृत्तावप्यकार्यंबुद्धिर्न निवर्तते इति।

तदेतत् प्रागेव निरस्तप्रायं नोत्तरान्तरमपेक्षते। तथाहि—साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसङ्ग इति किमिदं शरीरत्वं, यत् प्रसज्यते? । यदि साक्षात्प्रयत्नवदधिष्ठेयत्वं, तादिष्यत एव ।

---

**दृष्टान्तस्य साध्यविकलत्वापत्तेरिति**। क्षित्यादौ चेतनाधिष्ठितहेतुजन्यत्वे साध्ये साध्यविकलः पटादिदृष्टान्त इत्यर्थः । किञ्च क्षित्यादौ बुद्धिमत्पूर्वकत्वसाधने, सकर्तृकत्वसाधने वा अनित्यप्रयत्नस्योपाधित्वाच्च न कार्यत्वहेतुः साध्यसाधक इत्याह—**किञ्चाऽनित्ये**त्यादिना। कार्यमनित्यप्रयत्नप्रयुक्तमित्यनेनोपाधेःसाध्यप्रयोजकत्वमुक्तम्। अनित्यप्रयत्ननिवृत्तावनित्यैव बुद्धिर्निवर्तते, न तु नित्येत्यपि वक्तुं न शक्यते। शरीरस्याऽनित्यबुद्धिं प्रति कारणतया तन्निवृत्तावनित्यैव बुद्धिर्निवर्तते, न तु नित्येति युज्यते । अनित्यप्रयत्नस्तु न बुद्धिं प्रति कारणं, किन्तु व्यापकः । तथाच तन्निवृत्तौ बुद्धिसामान्यस्यैव निवृत्तिरिति साध्यव्यतिरेकस्योपाधिव्यतिरेकानुयायित्वमपि दर्शितम्। तथाच साध्यव्यापकत्वे सति साध्यप्रयोजकत्वादनित्यप्रयत्नस्योपाधित्वं सुस्थमिति भावः। दूषणान्युद्धरति — **तदेतत्प्रागेवे**त्यादिना । परमाण्वादीनां प्रयत्नवदधिष्ठेयत्वं शरीरत्वमित्युक्तावापाद्यापादकयोरैक्यादिष्टापत्तिमाह — **इष्यत एवेति**। अनित्यज्ञानप्रयत्नयोरिन्द्रियापेक्षायामपि नित्यज्ञानप्रयत्नयोस्तदन-

---

१. साक्षात्प्रयत्नवदधिष्ठेयत्वमिति शरीरलक्षणमादायैवेश्वरस्य जगच्छरीरकत्वं श्रुत्युक्तं सङ्गमनीयम्। एवञ्च परमाणुकलेवर ईश इष्टः। ' चेष्टेन्द्रियार्थाश्रयः शरीरमि ' ति सूत्रोक्तशरीरं तु ईश्वरस्य नाङ्गीकुर्मः, तस्य भोगावच्छेदकत्वात् । न च क्लेशकर्मविपाकाशयैरपरामृष्टस्य भोगः सम्भवतीत्याशयः ।

न च ततोऽन्यत्प्रसञ्जकमपि । अथेन्द्रियाश्रयत्वम्? । तन्न । तदवच्छिन्न-प्रयत्नोत्पत्तौ तदवच्छिन्नज्ञानजननद्वारेणेन्द्रियाणामुपयोगात् । अनव-च्छिन्ने प्रयत्ने नाऽयं विधिः, नित्यत्वात् । अत एव नाऽर्थाश्रयत्वम् । न हि नित्यज्ञानं भोगरूपमभोगरूपं वा यत्नमपेक्षते, तस्य कारणविशे-षत्वात् ! न च नित्यसर्वज्ञस्य भोगसम्भावनाऽपि ; विशेषादर्शनाभावे मिथ्याज्ञानानवकाशे दोषानुत्पत्तौ धर्माधर्मयोरसत्त्वात् ।

तस्मात्, साक्षात्प्रयत्नानधिष्ठेयत्वात्, स्वव्यापारे तदनपेक्षत्वा-च्चेति द्वयं साध्याविशिष्टम् । अनिन्द्रियाश्रयत्वादभोगायतनत्वात्, स्वव्यापारे तदनपेक्षत्वाच्चेति त्रयमप्यन्यथासिद्धम् । अभोगायतनत्वा-दनिन्द्रियाश्रयोऽपि, भोक्तृकर्मानुपग्रहादभोगायतनमपि, स्पर्शवद्वेगव-द्द्रव्यानुद्यत्वात्तदनपेक्षमपि स्यात् । अचेतनत्वाच्चेतनाधिष्ठितमपि

---

पेक्षणादिन्द्रियाश्रयत्वं विनाऽपि प्रयत्नवदधिष्ठितत्वं सम्भवतीत्याह — **नाऽयं विधिरिति** । यथा भोगाभावादिन्द्रियाश्रयत्वं नास्ति, एवमेव भोगाभावादर्थाश्रयत्वमपि नास्तीत्याह — **अत एवेति** । एवं शरीरापत्तिप्रसङ्गे दूषणमभिधाय शरीरेतरत्वादित्यादिहेतुदूषणमाह — **तस्मादिति** । भवदुक्तदिशा साक्षात्प्रयत्न-वदनधिष्ठेयत्वं शरीरेतरत्वमिति, सिद्धम् । तथा स्वव्यापारे शरीरानपेक्षत्वमपि प्रयत्नाधेयानपेक्षत्वमेव । तथाच साध्याविशिष्टो हेतुरित्याह — **साध्या-ऽविशिष्टमिति** । यदिचेन्द्रियाश्रयत्वं भोगाश्रयत्वं वा शरीरत्वं तदेन्द्रियाऽनाश्रय-त्वाद्भोगानाश्रयत्वादित्याद्यहेतुः । स्वव्यापारे इन्द्रियाश्रयानपेक्षत्वाद्भोगाश्रयानपेक्ष-त्वादिति च द्वितीयो हेतुश्च पर्यवस्यतः । तथाचाऽन्यथासिद्धिरित्यन्यथासिद्धि-माह — **अभोगायतनत्वादिति** । अयं भावः — परमेश्वरे अदृष्टाभावाद्भोगो नास्ति । भोगानवच्छेदकत्वात्परमाणूनामिन्द्रियाश्रयत्वं नास्ति । स्पर्शवद्वेगवद्द्रव्या-न्तराप्रेर्यमाणत्वात्तेषां क्रियोत्पत्तौ शरीरापेक्षाऽपि नास्ति । अचेतनत्वाच्चेतनाधिष्ठिताश्च भवन्तीति न विरोध इति । क्षित्यादिकं न चेतनाधिष्ठितहेतुकं, शरीरेतरजन्यत्वा-

स्यादिति को विरोधः? । तथाच साक्षात्प्रयत्नाधिष्ठितेतरजन्यत्वादिति साध्यसमः । इन्द्रियाश्रयेतरजन्यत्वात्, भोगायतनेतरजन्यत्वादिति द्वयमप्यन्यथासिद्धम् । कार्यज्ञानाद्यनपेक्षत्वाच्छरीरेतरजन्यमपि स्यात् । अचेतनहेतुकत्वाच्चेतनाधिष्ठितमपीति को विरोधः? । अप्रसिद्धविशेषणश्च पक्षः । न हि चेतनानाधिष्ठितहेतुकत्वं क्वचित्प्रमाणसिद्धम् । न च चेतनाऽधिष्ठितहेतुकत्वनिषेधः साध्यः, हेतोरसाधारण्यप्रसङ्गात् । गगनादेरपि सपक्षाद्व्यावृत्तेः ।

यत्पुनरुक्तं, कुविन्दादेः पटादौ कथमपेक्षेति । तत्र कारकतयेति कः सन्देहः? । किन्तु कारकत्वमेव तस्य ज्ञानचिकीर्षाप्रयत्नवतो न स्वरूपतः । तदेव चाधिष्ठातृत्वम् ।

यत्त्वधिष्ठिते किमधिष्ठानेनेति । तत्किं कुविन्द उद्धार्यते, ईश्वरो वा, अनवस्था वाऽऽपाद्यते? । न प्रथमः, अन्वयव्यतिरेकसिद्धत्वात् । न द्वितीयः, परमाण्वदृष्टाद्यधिष्ठातृत्वसिद्धौ ज्ञानादीनां सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात् । न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः । न तृतीयः, तस्मिन् प्रमाणाभावात् । तथाऽप्येकाधिष्ठितमपरः किमर्थमधितिष्ठतीति प्रश्ने किमुत्तरमिति चेत्; हेतुप्रश्नोऽयं, प्रयोजनप्रश्नो वा? । नाद्यः, ईश्वराधिष्ठानस्य नित्यत्वात् । कुविन्दाद्यधिष्ठानस्य स्वहेत्वधीनत्वात् । न द्वितीयः, कार्यनिष्पादनेन भोगसिद्धेः स्पष्टत्वात् । एकाधिष्ठानेनैव कार्यं स्यादिति चेत्; स्यादेव । तथापि न सम्भेदेऽन्यतरवैयर्थ्यम् । परिमाणं प्रति सङ्ख्यापरिमाणप्रचयवत् प्रत्येकं सामर्थ्योपलब्धौ सम्भूयकारित्वोपपत्तेः । अस्ति तत्र वैजात्यमिति चेत्; इहापि किञ्चिद्भविष्यतीति । न चाकुर्वतः कुलालादेः कायसंक्षो-

---

दित्यत्र शरीरपदार्थविकल्पत्रयेऽपि दोषानाह — **तथा चे**त्यादिना । साध्याप्रसिद्धिमप्याह — **अप्रसिद्धे**ति । **हेतोरि**ति । शरीरेतरजन्यत्वस्य गगनादावभावादिति भावः । **प्रमाणाभावादि**ति । कार्यं प्रति कर्तृत्वेन कारणत्वम्, न द्विकर्तृत्वेनेति नाऽनवस्थेति भावः । **इहापी**ति । यथा परिमाणादौ प्रत्येककारण-

भादिसाध्यो भोगः सिद्ध्येदिति तदर्थमस्य कर्तृत्वमीश्वरोऽनुमन्यते; तदर्थमात्रत्वादैश्वर्यस्येति ।

यस्त्वनित्यप्रयत्नेत्यादि, भवेदप्येवं यद्यनित्यप्रयत्ननिवृत्तावेव बुद्धिरपि निवर्तेत। न त्वेतदस्ति, उदासीनस्य प्रयत्नाभावेऽपि बुद्धिसद्भावात् । हेतुभूता बुद्धिर्निवर्तते इति चेन्न । उदासीनबुद्धेरपि संस्कारं प्रति हेतुत्वात् । कारकविषया बुद्धिर्निवर्तते इति चेन्न । उदासीनस्यापि कारकबोद्धृत्वात् । न हि घटादिकमकुर्वन्तश्चक्रादिकं नेक्षामहे । हेतुभूता कारकबुद्धिर्निवर्तते इति चेन्न । अयतमानस्यापि दुःखहेतुभूताया अपि तद्धेतुकण्टकस्पर्शबुद्धेरभावात् । चिकीर्षाहेतुभूतोऽनुभवो निवर्तते इति चेन्न । केनचिन्निमित्तेनाकुर्वतोऽपि चिकीर्षातद्धेतुबुद्धिसम्भवात्। अनपेक्षकृतिहेतुचिकीर्षाकारणं बुद्धिर्निवर्तते इति चेत्; न तर्हि बुद्धिमात्रम्। तथाचानित्यप्रयत्नहेतुकत्वमयुक्तं विशिष्टप्रयत्नचिकीर्षाहेतुबुद्धिमत्पूर्वकत्वमिति तन्निवृत्तौ तदेव निवर्ततां, न तु बुद्धिमत्पूर्वकत्वमात्रम्। तत्र तस्याप्रयोजकत्वादिति बुद्धिमत्पूर्वकत्वसाध्यपक्षे परीहारः। सकर्तृकमिति प्रयत्नप्रधानपक्षे शङ्कैव नास्ति, तस्यैव तत्रानुपाधित्वात् ।एतेन शरीरसम्बन्धे बुद्धिगतकार्यत्ववत् बुद्धिसम्बन्धे प्रयत्नगतकार्यत्वमुपाधिरिति निरस्तम् । यो हि बुद्ध्या शरीरवच्छरीरनिवृत्त्या बुद्धिनिवृत्तिवद्वा प्रयत्नेन बुद्धिं, बुद्धिनिवृत्त्या प्रयत्ननिवृत्तिं साधयेत्,

---

जन्यव्यावृत्तं वैजात्यमस्ति, एवं प्रत्येककर्तृकपृथिव्यादिव्यावृत्तं वैजात्यं घटादावप्यस्तीति भावः । **तदर्थमात्रत्वादिति** । जीवभोगप्रधानार्थत्वादित्यर्थः । अनित्यप्रयत्नेत्यादिनोद्भावितमुपाधिं निराकरोति – **यस्त्वित्यादिना** । **तद्धेतुकण्टकेति**। दुःखहेतोः कण्टकस्पर्शस्य बुद्धिसत्त्वादित्यर्थः । बुद्धिमद्धेतुकत्वे साध्येऽनित्यप्रयत्नस्योपाधित्वं नास्ति, तत्र तस्याप्रयोजकत्वादित्याह – **तत्र तस्येति** । कृतिविषयत्वसाधनेऽनित्यप्रयत्नस्योपाधित्वशङ्कैव नास्तीत्याह – **सकर्तृकमिति** । अनित्यप्रयत्नस्यानुपाधित्वप्रदर्शनेन शरीरजन्यत्वे साध्ये बुद्धिजन्यत्वं, बुद्धिजन्यत्वे साध्ये अनित्यप्रयत्नस्योपाधिरिति निरस्तमित्याह – **एतेनेति** । कार्यत्कारणाद्

स एवं कदाचिदुपालभ्यः । वयं त्ववगतहेतुभावं कलितसकलशक्तिकारकप्रयोक्तारं कार्यादेवानुमिमाना नैवमास्कन्दनीयाः, तत्र तस्यानुपाधित्वात् । न च प्रयत्न आत्मलाभार्थमेव मतिमपेक्षते; विषयलाभार्थमप्यपेक्षणात् । ततः प्रयत्नाद्बुद्धिः, तन्निवृत्तेश्च प्रयत्ननिवृत्तिः सिद्धयत्येवेति विस्तृतमन्यत्र । कार्यबुद्धिनिवृत्त्या तु कार्य एव प्रयत्नो निवर्तते, न नित्यः । नित्ये च प्रयत्ने नित्यैव बुद्धिः प्रवर्तते, नानित्या । न हि तया तस्य विषयलाभसम्भवः, शरीरादेः प्राक् तदसम्भवे देहानुपपत्तौ सर्वानुपपत्तेः । शरीराजन्यत्ववच्चाऽनित्यप्रयत्नाजन्यत्वमिति संक्षेपः ।

तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥

कारकव्यापारविगमे हि कार्यानुत्पत्तिप्रसङ्गः । चेतनाचेतनव्यापारयोर्हेतुफलभावावधारणात् कारणान्तराभावे इव कर्त्रभावे कार्याऽनुत्पत्तिप्रसङ्गः, कर्तुरपि कारणत्वात् ।

---

मानवादिनामस्माकं नायं दोषः, अनित्यप्रयत्नस्य तत्रानुपाधित्वादित्याह — **वयं त्वित्यादिना** । किञ्चाऽनित्यप्रयत्नः स्वोत्पत्त्यर्थं स्वविषयसिद्ध्यर्थञ्चानित्यां बुद्धिमपेक्षते इत्यनित्यप्रयत्नेनानित्या बुद्धिः सिद्ध्यतीत्याह — **न च प्रयत्न** इत्यादिना । किञ्च शरीराजन्यत्वं यथा व्यर्थविशेषणघटितमेवमेवानित्यप्रयत्नाजन्यत्वमपीत्याह— **शरीराजन्यत्ववदिति** । 'ईश्वरो यदि कर्ता स्यात्तर्हि शरीरी स्यादि' ति परकीयतर्काणामीश्वरसिद्ध्यसिद्धिभ्यां व्याघातेनाऽऽभासत्वम्, स्वमतेऽनुकूलतर्कञ्चाह — **तर्काभासतयेति** । ननु कर्त्रभावेऽपि कारकान्तरव्यापारात्कार्योत्पत्तिरित्याशङ्क्य, अचेतनव्यापारं प्रति चेतनव्यापारस्य कारणत्वात्कर्तुरभावे तन्न सिद्ध्यति । किञ्चैककारणविगमेऽपि कार्यं नोत्पद्यत इत्याह—**कारकव्यापारे**त्यादिना । ननु कृतिसामान्यकार्यमात्रयोरन्वयव्यतिरेकाभ्यां न व्याप्तिसम्भवः, नित्यकृतेर्व्यतिरेकासम्भवात् । कृतिविशेषकार्यविशेषयोर्व्याप्तिसिद्धावपि न तावताऽदृश्यकृतिसिद्धिः । तथा सति धूमेनादृश्यजाठरदहनस्यापि सिद्धिप्रसङ्गात्, शाखाकम्पेन

यस्त्वाह, प्रत्यक्षानुपलम्भाभ्यां तदुत्पत्तिनिश्चयो दृश्ययोरेव, न त्वदृश्ययोः। प्रत्यक्षस्यानुपलम्भस्य च तावन्मात्रविधिनिषेधसमर्थत्वात्. धूमाग्निवत्, कम्पमारुतवच्च। न हि धूमः कार्योऽनलस्येति उदर्यस्यापि, न हि शाखाकम्पो मातरिश्वन इति स्तिमितस्यापि स्यात्, किन्तु भौमस्पृश्ययोरेव। तथेहापि शरीरवत एव कारणत्वमवगन्तुमुचितं, नान्यस्येति। तदसत्। प्रत्यक्षाऽनुपलम्भौ हि दृश्याविषयावुपायस्तदुत्पत्तिनिश्चये, न तु दृश्यतैव तत्रोपेया। किं नाम दृश्याश्रितं सामान्यद्वयम्। तदालीढस्य हि तदुत्पत्तिनिश्चये दृश्यमदृश्यं वा सर्वमेव तज्जातीयं तदुत्पत्तिमत्तया निश्चितं भवति। यथा स्पर्शरूपरसगन्धानामुत्तरोत्तरनिमित्ततायां तव, अस्माकञ्चातीन्द्रियसमवायादिसिद्धौ। न चेदेवमुदाहृतयोरेव दहनपवनयोरालोकरूपवतोस्तदुत्पत्तिनिश्चये कथमनालोकनिरस्तरूपयोः सिद्धिः, यदुदर्यास्तिमितसाधारणी सिद्धिः स्यादिति। तद्भवेदप्येवं यदि शरीरादिकं विना कार्यमिव भौमं स्पर्शवद्वेगवन्तञ्च विनाऽग्निमात्रात्, पवनमात्राद्वा धूमकम्पौ स्याताम्। न त्वेवम्। न चैवं चेतनव्यभिचारोऽपि शक्याभिधान इत्यलं बालप्रलापानां समाधानैः।

---

स्तिमितवायोश्चानुमानप्रसङ्गाच्चेति बौद्धशङ्कामाह – **यस्त्विति**। असति बाधके कृतिविशेषकार्यविशेषयोरेवान्वयव्यतिरेकौ कृतिसामान्यकार्यसामान्ययोरपि व्याप्तिग्राहकौ भवतः, वह्निधूमविशेषयोरन्वयव्यतिरेकौ तत्सामान्ययोरिव। अन्यथाऽनुमानमात्रोच्छेदप्रसङ्गादित्याशयेन समाधत्ते – **प्रत्यक्षानुपलम्भाविति**। क्वचिदन्वयव्यतिरेकाभ्यां कार्यकारणभावस्य, व्याप्यव्यापकभावस्य वाऽवगतौ तद्बलादसति बाधके तज्जातीये दृश्येऽदृश्ये वा तत्सिद्धिरिति तत्र दृश्याश्रये प्रयोजनं नास्तीत्याह– **किं नामेति**। एवमनङ्गीकारे जाठराग्नेः, नीरूपस्य वायोश्च सिद्धिर्न स्यात्। धूमं प्रत्यालोकात्मकभौमस्यैव, कम्पं प्रति रूपवद्द्रव्यस्यैव प्रत्यक्षेण हेतुत्वदर्शनादित्याह – **न चेदेवमित्यादिना**। नन्वेवं धूमेनादृश्यजाठरवह्निसिद्धिः कुतो नेति बौद्धशङ्कायां उत्तरमाह – **भवेदप्येवमित्यादिना**। शरीरं विना कार्योत्पत्त्यसिद्धा-

तदुत्पत्तेरसिद्धावपि तत्तदुपाधिविधूननेन स्वाभाविकत्वस्थितौ यदि कर्तारमतिपत्य कार्यं स्यात्, स्वभावमेवातिपतेदिति कार्यविलोपप्रसङ्ग इति । एतच्च सर्वमात्मतत्त्वविवेके निपुणतरमुपपादितमिति नेह प्रतन्यते। एवञ्च सिद्धे प्रतिबन्धे न प्रतिबन्ध्यादेः क्षुद्रोपद्रवस्यावकाशः। प्रतिबन्धसिद्धाविष्टापादनात्। तदसिद्धौ तत एव तत्सिद्धेरप्रसङ्गादिति।

ननु तस्य सर्वदा सर्वत्राविशेषे कार्यस्य सर्वदोत्पत्तिप्रसङ्ग इति निरपेक्षेश्वरपक्षे दोषः, सापेक्षे उपेक्षणीय एवास्त्विति बालस्य प्रदीपकलिकाक्रीडयैव नगरदाहः । तन्न । स्थेमभाजो जगत एवाकारणत्वप्रसङ्गात्। ॐमिति ब्रुवतः सौगतस्य दत्तमुत्तरं प्राक् ।

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

तमिममर्थमागमः संवदति, विसंवदति तु परेषां विचारम्—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥

अत्र प्रथमेन सर्वज्ञत्वं, चक्षुषा दृष्टेरुपलक्षणात् । द्वितीयेन सर्ववक्तृत्वं, मुखेन वागुपलक्षणात् । तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वोपलक्षणात् । चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात् ।

---

वपि भवदुपदर्शितोपाधिविधूननेन कार्यत्वसकर्तृकत्वव्याप्तिसिद्धौ कार्यस्य कर्त्रतिपाते स्वभावातिपातापत्तिरित्याह— **तदुत्पत्तेरिति** । **प्रतिबन्ध्यादेरिति** । पशुत्वेन हेतुना शशेऽदृश्यशृङ्गापादनमित्यर्थः । तयोरपि व्याप्तिसिद्धौ तदपि स्यादेव। तदभावे न सिद्ध्येदेवेत्याह — **प्रतिबन्धसिद्धाविति** । नन्वीश्वरस्य निरपेक्षस्य कारणत्वे सर्वदा कार्योत्पत्तिप्रसङ्गः । सापेक्षस्य तथात्वेऽस्वतन्त्रतयोपेक्षणीयत्वापत्तिरिति लघुतरशङ्कयैव भवदीयसिद्धान्तहानिरित्याशङ्क्य, ईश्वरस्य कारणत्वानङ्गीकारे जगतो निर्हेतुकत्वप्रसङ्गः । इष्टापत्तौ कादाचित्कत्वहानिरित्याह — **दत्तमुत्तरं प्रागिति** । आगमेनेश्वरसिद्धावपि न्यायस्य सहकारित्वमाह — **आर्षमिति** । स्वमतस्याऽऽगममध्यनुकूलमित्याह — **तमिममिति** ।

पञ्चमेन धर्माधर्मलक्षणप्रधानकारणत्वं, तौ हि लोकयात्रावहनाद्वाहू। षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वं, ते हि गतिशीलत्वात्पतत्रव्यपदेशाः, पतन्तीति। सन्धमति, सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः। तेन संयोजयति समुत्पादयन्नित्यर्थः। द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणं, भूमीत्यधस्तात्, एक इत्यनादितेति। स्मृतिरपि —

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यादि।

एतेन ब्रह्मादिप्रतिपादका आगमा बोद्धव्याः। आयोजनात्खल्वपि —

स्वातन्त्र्ये जडताहानिर्नादृष्टं दृष्टघातकम्।
हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥ ४ ॥

परमाण्वादयो हि चेतनायोजिताः प्रवर्तन्ते, अचेतनत्वात्, वास्यादिवत्। अन्यथा कारणं विना कार्योनुत्पत्तिप्रसङ्गः। अचेतनक्रियायाश्चेतनाधिष्ठानकार्यत्वावधारणात्। क्रियाविशेषविश्रान्तोऽयमर्थो, न तु तन्मात्रगोचरः। चेष्टा हि चेतनाधिष्ठानमपेक्षते इति चेत्;

---

**एतेन ब्रह्मादीति।** ब्रह्मविष्ण्वादिशरीरमास्थायेश्वर एव तत्तत्कार्याणि करोतीति भावः। द्वितीयहेतुं विवृणोति — **आयोजनादिति।** आयुज्यन्ते अनेनेत्यायोजनम्। द्व्यणुकारम्भकसंयोगजनकं परमाणुकर्म अत्राऽऽयोजनमित्युच्यते। तस्मादपीश्वरसिद्धिः। तदेवाह — **स्वातन्त्र्येति।** परमाणूनां स्वातन्त्र्ये चेतनानधिष्ठितानामेव परमाणूनां तत्कर्माङ्गीकारे जडताहानिः। अदृष्टविशेषात्तदङ्गीकारे अदृष्टादेव द्व्यणुकाद्युत्पत्तिरपि स्यादिति हेत्वन्तरोच्छेदापत्तिः। एतावता सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यम्, कर्मत्वाच्चेष्टावदित्यनुमानमीश्वरे मानमुक्त्वा विपक्षे बाधकतर्कमाह— **हेत्वभाव इति।** हेतोश्चेतनव्यापारस्याभावे क्रियारूपफलस्याप्यभावप्रसङ्गः। ननु चेष्टारूपक्रियाविशेष एव चेतनव्यापारप्रयोज्य इत्याशङ्क्याह — **विशेषस्त्विति।** चेष्टारूपक्रियाविशेषः भोक्तृप्रयत्नप्रयोजकः। क्रियामात्रं चेतनव्यापारप्रयोज्यमिति कारिकार्थः। एतदेव विवृण्वन् तर्कोपकार्यमनुमानं, तर्कञ्चाह — **परमाण्वादय इति।** ननु क्रियापक्षकानुमाने चेष्टात्वमुपाधिरित्याशङ्क्य, चेष्टात्वं यदि प्रयत्नवदात्माधिष्ठित-

अथ केयं चेष्टा नाम ?। यदि प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया, प्रयत्नमात्रकारणिकेति वा विवक्षितम्। तन्न। तस्यैव तत्रानुपाधित्वात्। अथ हिताहितप्राप्तिपरिहारफलत्वं तत्त्वम्। तन्न। विषभक्षणोद्बन्धनाद्यव्यापनात्। इष्टानिष्टप्राप्तिपरिहारफलत्वमिति चेत्; कर्तारं प्रत्यन्यं वा ?। उभयथाऽपि परमाण्वादिक्रियासाधारण्यादविशेषः। भ्रान्तसमीहाया अतथाभूताया अपि चेतनव्यापारापेक्षणाच्च। शरीरसमवायिक्रियात्वं तदिति चेन्न। मृतशरीरक्रियाया अपि चेतनपूर्वकत्वप्रसक्तेः। जीवत इति चेन्न। नेत्रस्पन्दादेश्चेतनाधिष्ठानाभ्युपगमप्रसङ्गात्। स्पर्शवद्द्रव्यान्तराप्रयोगे सतीति चेन्न। ज्वलनपवनादौ तथाभावाभ्युपगमापत्तेः। शरीरस्य स्पर्शवद्द्रव्यान्तराप्रयुक्तस्येति चेन्न। चेष्टयैव शरीरस्य लक्ष्यमाणत्वात्। सामान्यविशेषश्चेष्टात्वं, यत उन्नीयते प्रयत्नपूर्विकेयं क्रियेति चेन्न। क्रियामात्रेणैव तदुन्नयनात्। भोक्तृबुद्धिमत्पूर्व-

---

क्रियात्वं तदा तस्य साध्याविशिष्टत्वेन साधनव्यापकत्वान्नोपाधित्वमित्याह– **तस्यैव तत्रानुपाधित्वादिति**। **इष्टानिष्टप्राप्तीति**। एवञ्च विषभक्षणानुकूलक्रियाऽपीच्छाविषयविषभक्षणप्रापकत्वान्नाव्याप्तिरिति भावः। **परमाणुक्रियासाधारण्यादिति**। परमाणुक्रियाया अपि तत्कर्तुरीश्वरस्याऽस्मदादेश्चेच्छाविषयार्थसाधनत्वादित्यर्थः। तथाच साध्याविशिष्टत्वान्नोपाधिरिति भावः। **भ्रान्तसमीहेति**। अतथाभूतायाः, इष्टानिष्टप्राप्तिपरिहाराफलिकाया इत्यर्थः। एवञ्चात्रोपाधेः साध्याव्यापकत्वमित्युक्तम्। **मृतशरीरेति**। वायुवशान्मृतशरीरे क्रियायां तत्र साध्याव्यापकत्वमित्यर्थः। जीवत इति विशेषणेऽपि नेत्रस्पन्दे साध्याव्यापक इत्याह – **नेत्रेति**। **स्पर्शवद्द्रव्येति**। नेत्रस्पन्दस्य वायुप्रयुक्तत्वान्न दोष इति भावः। त्वन्मते ज्वलनक्रियाया अदृष्टवदात्मसंयोगजन्यायाः प्रयत्नाजन्यतया तत्र साध्याव्यापकत्वमित्याह – **ज्वलनेति**। **चेष्टयैव शरीरेति**। तथाच चेष्टानिरुक्तौ शरीरस्य, शरीरलक्षणे चेष्टायाश्चानुप्रवेशादन्योन्याश्रय इति भावः। ननु प्रयत्नजन्यतावच्छेदकतया सिद्धो जातिविशेषश्चेष्टात्वमित्याशङ्क्य, क्रियासामान्यगतं क्रियात्वमेव प्रयत्नजन्यतावच्छेदकं, न चेष्टात्वमित्याह – **सामान्यविशेष** इत्यादिना। ननु भोक्तृप्रयत्नजन्यता-

कत्वं यत इति चेत्; तर्हि तद्विश्रान्तत्वमेव तस्य। न चैतावतैव क्रियामात्रं प्रत्यचेतनमात्रस्य चेतनाधिष्ठानेन व्याप्तिरपसार्यते; विशेषस्य विशेषं प्रति प्रयोजकतया सामान्यव्याप्तिं प्रत्यविरोधकत्वात्। अन्यथा सर्वसामान्यव्याप्तेरुच्छेदादित्युक्तम्।

एतेनाऽशरीरत्वादिना सत्प्रतिपक्षत्वमपास्तम्। अत्राप्यागमसंवादः—

यदा स देवो जागर्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च॥ इत्यादि।

अत्र जागरस्वापौ सहकारिलाभालाभौ। ईश्वरप्रेरणायामज्ञत्वमप्रयतमानत्वञ्च हेतू दर्शितौ परमाण्वादिसाधारणौ। स्वर्गश्वभ्रे चेष्टाऽनिष्टोपलक्षणे। एतदेव सर्वाधिष्ठानमुत्तरत्र विभाव्यते, मयेत्यादिना। न केवलं प्रेरणायामहमधिष्ठाता, अपि तु प्रतिरोधेऽपि। यो हि यत्र प्रभवति, स तस्य प्रेरणावद्धारणेऽपि समर्थः। यथाऽर्वाचीनः शरीरप्राणप्रेरणधारणयोरिति दर्शितं तपामीत्यादिना।

धृतेः खल्वपि। क्षित्यादि ब्रह्माण्डपर्यन्तं हि जगत् साक्षात् परम्परया वा विधारकप्रयत्नाधिष्ठितं, गुरुत्वे सत्यपतनधर्मकत्वात्, वियतिविहङ्गमशरीरवत्, तत्संयुक्तद्रव्यवच्च। एतेनेन्द्राग्नियमादिलोकपाल-

---

ऽवच्छेदकजातिविशेषश्चेष्टात्वमिति चेदेवं सति प्रयत्नविशेषजन्यचेष्टया न क्रियाप्रयत्नयोर्व्याप्यव्यापकभावस्य हानिरित्याह — **न चैतावतेति**। परमाणवश्चेतनाधिष्ठिता न प्रवर्तन्ते, शरीरेतरत्वादिति सत्प्रतिपक्षोऽपि नेत्याह — **एतेनेति**। परमाणुक्रियायां चेष्टात्वाभावेन भोक्तृप्रयत्नाजन्यत्वेऽपि सामान्यतः प्रयत्नजन्यत्वस्यानपायादिति भावः। स्वानुकूलं परप्रातिकूलमागममाह — **यदा स** इत्यादिना। तृतीयं हेतुमाह — **धृतेरिति**। एतेन = धारकप्रयत्नधृतत्वव्युत्पादनेन।

प्रतिपादका अप्यागमा व्याख्याताः । सर्वावेशनिबन्धनश्च सर्व-तादात्म्यव्यवहारः, 'आत्मैवेदं सर्वमि' ति । यथैक एव मायावी अश्वो, वराहो, व्याघ्रो, वानरः, किन्नरो, भिक्षुस्तापसो, विप्र इत्यादि ।

अदृष्टादेव तदुपपत्तेरन्यथासिद्धमिदमिति चेत्; तद्भावेऽपि प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि स्थितिं प्रति कारणत्वात् । कारणैकदेशस्य च कारणान्तरं प्रत्यनुपाधित्वात् । उपाधित्वे वा सर्वे-षामकारणत्वप्रसङ्गात् । शरीरस्थितिरेवं, न त्वन्यस्थितिरिति चेन्न । प्राणेन्द्रिययोः स्थितेरव्यापनात् । प्राङ्न्यायेनापास्तत्वाच्च । अत्रा-ऽप्यागमः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' इति । प्रशासनं दण्डभूतः प्रयत्नः ।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इति स्मृतिः । अत्रोत्तमत्वमसंसारित्वं, सर्वज्ञत्वादि च । परमत्वं सर्वो-पास्यता । लोकत्रयमिति सर्वोपलक्षणम् । आवेशो ज्ञानचिकीर्षाप्रयत्न-वतः संयोगः । भरणं धारणम् । अव्ययत्वमागन्तुकविशेषगुणशून्य-त्वम् । ऐश्वर्यं सङ्कल्पाप्रतिघातः, इति । एतेन कूर्मादिविषया अप्यागमा व्याख्याताः ।

संहरणात्खल्वपि । ब्रह्माण्डादि द्व्यणुकपर्यन्तं जगत्, प्रयत्नव-द्विनाश्यं, विनाश्यत्वात्, पाट्यमानपटवत् । अत्राऽप्यागमः —

'एष सर्वाणि भूतानि समभिव्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं सम्भ्रामयति चक्रवत् ॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकीम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्' ॥

इत्यादि । एतेन रौद्रमंशं प्रतिपादयन्तोऽप्यागमा व्याख्याताः ।

---

सर्वावेशेति । आवेशः=अविनाभावः । प्राङ्न्यायेनेति । विशेषे विशेषो हेतुरिति

पदात् खल्वपि —

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥

पदशब्देनात्र पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति वृद्धव्यवहार एवोच्यते । अतोऽपीश्वरसिद्धिः । तथाहि – यदेतत् पटादिनिर्माणनैपुण्यं कुविन्दादीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रमव्यवहारश्च बालानां, स सर्वः स्वतन्त्रपुरुषविश्रान्तो, व्यवहारत्वात्, निपुणतरशिल्पिनिर्मितापूर्वघटघटनानैपुण्यवत्, चैत्रमैत्रादिपदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्चेति । आदिमान् व्यवहार एवम्, अयं त्वनादिरन्यथाऽपि भविष्यतीति चेन्न । तदसिद्धेः । आदिमत्तामेव साधयितुमयमारम्भः । न चैवं संसारस्यानादित्वभङ्गप्रसङ्गः, तथापि तस्याविरोधात् । न हि चैत्रादिव्यवहारोऽयमादिमानिति भवस्याप्यनादिता नास्ति । तदनादित्वे वा न चैत्रादिपदव्यवहारोऽप्यादिमानिति । अस्त्ववर्वाग्दर्शी कश्चिदेवात्र मूलमिति चेन्न । तेनाऽशक्यत्वात् । कल्पादावादर्शाभासस्याप्यसिद्धेः । साधितौ च सर्गप्रलयौ ।

---

न्यायेनेत्यर्थः । तुरीयहेतुं व्याख्यातुमादत्ते — **पदादिति** । अत्र ग्रन्थलाघवार्थं वृत्तवर्तिष्यमाणहेतूनां निरुपाधित्वग्राहकः कार्यकारणभावभङ्गप्रसङ्गरूपो विपक्षबाधकस्तर्क इत्याह – **कार्यत्वादिति** । पदस्य कार्यत्वादेवोपाधिराहित्यं सिद्धम् । एवं धृतिविनाशयोरपि कार्यत्वान्निरुपाधित्वम् । प्रलयसद्भावेन वेदस्यापि कार्यत्वं सिद्ध्यति । एवं प्रत्ययादेरपि कार्यत्वमेवेति कारिकार्थः । व्यक्तवाचां = मनुष्याणाम् । **स्वतन्त्रपुरुषेति** । पुरुषे स्वातन्त्र्यं सजातीयव्यवहारानुपजीव्यत्वम् । **अन्यथाऽपीति** । स्वतन्त्रपुरुषं विनाऽपीत्यर्थः । **तथापीति** । पूर्वकल्पीयव्यवहारस्यापि भवमूलकत्वेन व्यवहारस्य सादित्वेऽपि संसारस्य भवस्य चाऽनादित्वमव्याहतमिति भावः । 'तदनादित्व' इत्यत्रापि न हीत्यनुवर्तनीयम् । **अशक्यत्वादिति** । असर्वज्ञत्वादिति भावः । नन्वीश्वरस्य शरीराभावात्कथं व्यवहारप्रयोजकत्व-

ननु व्यवहारयितृवृद्धः शरीरी समधिगतो, न च ईश्वरस्तथा; तत्कथमेवं स्यात। न। शरीरान्वयव्यतिरेकानुविधायिनि कार्ये तस्यापि तद्वत्त्वात्। गृह्णाति हि ईश्वरोऽपि कार्यवशाच्छरीरमन्तरान्तरा, दर्शयति च विभूतिमिति। अत्राप्यागमः—

'पिताऽहमस्य जगतो माता धाता पितामहः।

तथा— यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।

मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्'॥ इति।

एतेन 'नमः कूलालेभ्यः कर्मारेभ्य' इत्यादि यजूंषि बोद्धव्यानि।

प्रत्ययोऽपि। प्रत्ययशब्देनात्र समाश्वासाविषयप्रामाण्यमुच्यते। तथाच प्रयोगः— आगमसंप्रदायोऽयं कारणगुणपूर्वकः, प्रमाणत्वात्, प्रत्यक्षादिवत्। न हि प्रामाण्यप्रत्ययं विना क्वचित् समाश्वासः। न चाऽसिद्धस्य प्रामाण्यस्य प्रतीतिः। न च स्वतः प्रामाण्यमित्यावेदितम्। न च नेदं प्रमाणं, महाजनपरिग्रहादित्युक्तम्। न चासर्वज्ञो धर्माऽधर्मयोः स्वातन्त्र्येण प्रभवति। न चासर्वज्ञस्य गुणवत्तेति निःशङ्कमेतत्।

श्रुतेः खल्वपि। तथाहि— सर्वज्ञप्रणीता वेदाः, वेदत्वात्। यत्पुनर्न सर्वज्ञप्रणीतं नाऽसौ वेदो, यथेतरवाक्यम्। ननु किमिदं वेदत्वं नाम?। वाक्यत्वस्यादृष्टविषयवाक्यत्वस्य च विरुद्धत्वात्। अदृष्टविषयप्रमाणवाक्यत्वस्य चासिद्धेः। मन्वादिवाक्ये गतत्वेन विरोधाच्चेति चेन्न। अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वस्य

---

मित्याशङ्क्य, शरीरं गृहीत्वैवेश्वरः व्यवहरतीति समाधत्ते— **गृह्णाति** हीत्यादिना। ईश्वरस्यादृष्टाभावेऽपि अस्मदाद्यदृष्टादेवास्मदनुग्रहार्थं स्वेच्छया शरीराणि गृह्णातीति भावः। लोकाः, प्रामाणिकव्यवहारा इत्यर्थः। **एतेनेति**। घटादिव्यवहारस्यापीश्वरमूलकत्वप्रदर्शनेनेत्यर्थः। पञ्चमं हेतुमाह— **प्रत्ययोऽपीति**। **कारणगुणपूर्वक इति**। प्रामाण्यप्रयोजकपदार्थप्रमापूर्वक इत्यर्थः। षष्ठं हेतुमाह— **श्रुतेरिति**। **विरुद्धत्वादिति**। प्रतारकवाक्ये व्यभिचारादित्यर्थः। एवं व्यति-

तत्त्वात् । न ह्यस्मदादीनां प्रत्यक्षादि मूलम् । नाऽपि भ्रमविप्रलिप्से, महाजनपरिग्रहादित्युक्तम् । नाऽपि परम्परैव मूलं; महाप्रलये विच्छेदादित्युक्तम् ।

अन्वयतो वा । वेदवाक्यानि पौरुषेयाणि, वाक्यत्वात्, अस्मदादिवाक्यवत् । अस्मर्यमाणकर्तृकत्वान्नैवमिति चेन्न । असिद्धेः ।

अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।
प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते ॥

वेदान्तकृद्वेदविदेव चाहम्' इति स्मृतेः । 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इत्यादिश्रुतिपाठकस्मृतेश्च ।

अर्थवादमात्रमिदमिति चेन्न । कर्तृस्मरणस्य सर्वत्राऽविध्यर्थत्वात् । तथाचास्मरणे कालिदासादेरस्मरणात् । एवञ्च कुमारसम्भवादेरकर्तृकत्वप्रसङ्गः । अनैकान्तिकत्वं वा हेतोः । प्रमाणान्तरागोचरार्थत्वात् सत्प्रतिपक्षत्वमिति चेन्न । प्रणेतारं प्रत्यसिद्धेः, अन्यं प्रत्यनैकान्तिकत्वात् । आकस्मिकस्मितबीजसुखानुस्मृतेः कारणविशेषस्यान्यं प्रति प्रमाणान्तरागोचरस्यापि तेनैव वक्त्रा प्रतिपाद्यमानत्वात् । वक्तैव प्रकृते न सम्भवति; हेत्वभावे फलाभावात्, चक्षुरादीनां तत्राऽसाम-

---

रेकेण वेदेभ्य ईश्वरं प्रसाध्य, अन्वयेनापि साधयितुं सप्तमं हेतुमाह—**अन्वयतो वे**त्यादिना । ननूदाहृतश्रुतिस्मृत्योरर्थवादत्वेन न तेन वेदस्य सकर्तृकत्वसिद्धिरित्याशङ्क्य, कर्तृस्मरणस्य कुत्राप्यविधेयत्वेन कालिदासग्रन्थानामप्यकर्तृकत्वापत्तिरित्याह — **एवञ्चेति** । प्रमाणान्तरागोचरत्वादित्ययं प्रतिहेतुर्यदि वेदप्रणेतृप्रमाणान्तरागोचर इत्युच्यते तदा तदीयप्रत्यक्षगोचरार्थत्वादसिद्धः । पुरुषान्तरीयप्रमाणाऽपेक्षयाऽनैकान्तिक इत्याह—**प्रणेतारं प्रती**त्यादिना । ननु वाक्यार्थज्ञानसामग्र्यभावाद्वेदस्य सर्वज्ञप्रणीतत्वं न सम्भवति । तथाहि — ईश्वरो नाऽतीन्द्रियार्थदर्शी, पुरुषत्वादस्मदादिवत् । तज्ज्ञानं नातीन्द्रियार्थगोचरं, ज्ञानत्वात् । तदिन्द्रियं नातीन्द्रियार्थग्राहि, इन्द्रियत्वात् । तन्मनः नातीन्द्रियग्राहि, मनस्त्वादित्यनुमानान्यत्र प्रमाणमित्याशङ्क्य, एते प्रयोगा आश्रयासिद्धया प्रागेव निरस्ता इत्याह—**वक्तैवे**त्यादिना । सामग्र्यभावात्कार्यज्ञानाभावेऽपि

थ्यात अस्मदादीन्द्रियवत । मनसो बहिरस्वातन्त्र्यात् । न । चेतनस्य ज्ञानस्येन्द्रियस्य, मनसो वा पक्षीकरणे आश्रयासिद्धेः प्रागेव प्रपञ्चनात् । नित्यनिराकरणे चासामर्थ्यात् । परमाण्वादयो न कस्यचित्प्रत्यक्षाः, तत्सामग्रीरहितत्वादिति चेन्न । द्रष्टारं प्रत्यसिद्धेः, अन्यं प्रति सिद्धसाधनात् । तथापि वाक्यत्वं न प्रमाणम्, अप्रयोजकत्वात् । प्रमाणान्तरगोचरार्थत्वप्रयुक्तं तत्र पौरुषेयत्वं, न तु वाक्यत्वप्रयुक्तम् । न । सुगताऽऽद्यागमानामपौरुषेयत्वप्रसङ्गात् । प्रमाणवाक्यस्य सत इति चेन्न । प्रणेतृप्रमाणान्तरगोचरार्थत्वस्य साध्यानुप्रवेशात् । स्वतन्त्रपुरुषप्रणीतत्वं हि पौरुषेयत्वम् । अर्थप्रतीत्येकविषयौ हि विवक्षाप्रयत्नौ स्वातन्त्र्यम् । मन्वादिवाक्यस्यापौरुषेयत्वप्रसङ्गाच्च, तदर्थस्य शब्देतरप्रमाणागोचरत्वात् । प्रयुज्यमानवाक्येतरगोचरार्थत्वमात्रमिति चेन्न । तस्य वेदेऽपि सत्त्वात् । एकस्याप्यर्थस्य शाखाभेदेन बहुभिर्वाक्यैः प्रतिपादनात् । अस्त्वेवं, न तु तेषां मिथो मूलमूलीभाव इति चेन्न । उक्तोत्तरत्वात् ।

---

नित्यज्ञानस्य न निवृत्तिरित्याह — नित्येति । परमाण्वादीनामस्मदादिप्रत्यक्षाविषयत्वेऽपीश्वरप्रत्यक्षविषयत्वमस्तीत्याह — द्रष्टारं प्रतीति । ननु पौरुषेयत्वसाधकवाक्यत्वहेतौ प्रमाणान्तरगोचरार्थत्वमुपाधिरित्याशङ्क्य, सुगतवाक्ये साध्याव्यापकत्वान्नायमुपाधिरित्याह — तथापीत्यादिना । ननु प्रमाणवाक्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरित्याशङ्क्य, व्याप्तेर्भेदनियतत्वात्प्रणेतृपुरुषप्रमाणान्तरगोचरार्थस्य साध्याविशिष्टत्वान्न साध्यव्यापकत्वमित्याह — प्रणेत्रिति । किञ्च प्रमाणान्तरगोचरार्थत्वमित्यस्य शब्देतरप्रमाणगोचरार्थत्वमित्यर्थविवक्षायां मन्वादिवाक्ये साध्याव्यापकत्वम् । प्रयुज्यमानवाक्येतरगोचरार्थत्वविवक्षायां पक्षे साधनव्यापकत्वमित्याह — मन्वादीत्यादिना । उक्तोत्तरत्वादिति । प्रणेतारं प्रत्यसिद्धेः, अन्यं प्रत्यनैकान्तिकत्वादित्यनेनापौरुषेयत्वसाधकहेतोर्निराकरणादिति भावः । द्व्यणुकादिपरिमाणकारणीभूतसंख्याविशेषोत्पादकाऽपेक्षाबुद्ध्याश्रयतया चेश्वरसिद्धिरि-

संख्याविशेषात् खल्वपि । द्व्यणुकत्र्यणुके तावत् परिमाणवती, द्रव्यत्वात् । तच्च परिमाणं कार्यं, कार्यगुणत्वात् । न च तस्य परमाणुपरिमाणं द्व्यणुकपरिमाणं वा कारणम्; नित्यपरिमाणत्वात्, अणुपरिमाणत्वाच्च । अन्यथा अनाश्रयकार्योत्पत्तिप्रसङ्गात् । द्व्यणुकस्य महत्त्वप्रसङ्गाच्च, त्र्यणुकवदण्वारभ्यत्वाविशेषात् । तत्र कारणबहुत्वेन महत्त्वे अणुपरिमाणस्यानारम्भकत्वस्थितेरणुत्वमेव महदारम्भे विशेष इत्यपि न युक्तम्; महतो महदनारम्भप्रसङ्गात् । अणुत्वमहत्त्वयोर्विरुद्धतया एकजातीयकार्यानारम्भकत्वप्रसङ्गात् । बहुभिरपि परमाणुभिर्द्वाभ्यामपि द्व्यणुकाभ्यामारम्भप्रसङ्गाच्च !

एवं सति को दोष इति चेत्; परमाणुकार्यस्य महत्त्वप्रसङ्गः, कारणबहुत्वस्य तद्धेतुत्वात् । अन्यथा द्वाभ्यां त्रिभिश्चतुर्भिरित्यनियमेनाप्यण्वारम्भे तद्वैयर्थ्यप्रसङ्गात् । अणुन एव तारतम्याभ्युपगमस्तु संख्यामवधीर्य न स्यात् । अस्तु महदारम्भ एव त्रिभिरिति चेन्न । महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमात् । तथापि वा तारतम्ये

---

त्यष्टमं हेतुमाह — **संख्याविशेषादिति** । अत्र प्रथमहेतौ गगनपरिमाणं, द्वितीयहेतौ मनःपरिमाणं च दृष्टान्त इति बोध्यम् । **अन्यथेति** । आकाशमनसोर्द्रव्यानारम्भकत्वेन तत्परिमाणस्य परिमाणान्तरजनकत्वे अनाश्रयकार्योत्पत्तिप्रसङ्ग इति भावः । त्र्यणुके कारणबहुत्वस्य परिमाणारम्भकत्वे अणुत्वस्याकारणत्वं सिद्धमित्याह — **तत्र कारणेति** । ननु द्व्यणुकगतविजातीयाणुत्वमेव त्र्यणुकमहत्त्वे कारणमित्याशङ्क्य, तथा सति व्यभिचारान्महत्त्वे महत्परिमाणस्याकारणत्वप्रसङ्ग इत्याह — **महतो महदिति** । किञ्च संख्यां विहायाणुपरिमाणस्यैव कारणत्वे दोषमाह — **बहुभिरपीति** । नन्वणुद्वयारब्धस्येवाणुत्रयारब्धस्याप्यणुत्वमेवाङ्गीक्रियत इत्याशङ्क्य, तथा सति त्रित्वादिसंख्यावैयर्थ्यप्रसङ्ग इत्याह — **अन्यथेति** । नन्वणुगतसंख्यावैचित्र्यादेव परिमाणतारतम्योपपत्तिरित्याशङ्क्य, सिद्धं तर्हि संख्यायाः परिमाणकारणत्वमित्याह — **अणुन एवेत्यादिना** । ननु त्र्यणुकपरिमाणस्य परिमाणाजन्यत्वे प्रचयजन्यत्वं स्यादित्याशङ्क्य, तत्र शिथिलावयवसंयोगो

संख्यैव प्रयोजिकेति। न च प्रचयोऽपेक्षणीयः, अवयवसंयोगस्याभावात्। तस्मात् परिमाणप्रचयौ महत एवारम्भकाविति स्थितिः । अतोऽनेकसंख्या परिशिष्यते । सा अपेक्षाबुद्धिजन्या, अनेकसंख्यात्वात् । न चास्मदादीनामपेक्षाबुद्धिः परमाणुषु सम्भवति। तत् यस्यासौ सर्वज्ञः। अन्यथा अपेक्षाबुद्धेरभावात् संख्याऽनुत्पत्तौ तद्गतपरिमाणानुत्पादेऽपरिमितस्य द्रव्यस्यानारम्भकत्वात् त्र्यणुकानुत्पत्तौ विश्वानुत्पत्तिप्रसङ्गः । अस्मदादीनामेवाऽऽनुमानिक्यपेक्षाबुद्धिरस्त्विति चेन्न । इतरेतराश्रयप्रसङ्गात् । जाते हि स्थूलकार्ये तेन परमाण्वाद्यनुमानं, तस्मिन् सति द्व्यणुकादिक्रमेण स्थूलोत्पत्तिः । अस्त्वदृष्टादेव परिमाणं, कृतमपेक्षाबुद्ध्येति चेन्न । अस्तु तत एव सर्वं, किं दृष्टकारणेनेत्यादेरसमाधेयत्वप्रसङ्गादिति । अथवा, कार्येत्यादिकमन्यथा व्याख्यायते ।

उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती ।
ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः ॥ ६ ॥

आम्नायस्य हि भाव्यार्थस्य कार्ये पुरुषप्रवृत्तिनिवृत्ती । भूतार्थस्य तु यद्यपि नाहत्य प्रवर्तकत्वं निवर्तकत्वं वा, तथापि तात्पर्यतस्तत्रैव प्रामाण्यम् । तथाहि – विधिशक्तिरेवावसीदन्ती स्तुत्यादिभिरुत्तभ्यते । प्रशस्ते हि सर्वः प्रवर्तते, निन्दिताच्च निवर्तते इति स्थितिः।

तत्र पदशक्तिस्तावदभिधा, तद्बलायातः पदार्थः। आकाङ्क्षादिमत्त्वे सति चाऽन्वयशक्तिः पदानां पदार्थानां वा वाक्यं, तद्बलायातो वाक्यार्थः। तात्पर्यार्थस्तु चिन्त्यते। तदेव परं साध्यं, प्रतिपाद्यं, प्रयो-

---

नास्तीत्याह — **न च प्रचय इति** । कार्यं नामोद्देश्यत्वम् । तच्च तात्पर्यं वक्तुरिच्छारूपम् । सा चेच्छा वेदार्थविषये नास्मदादीनां सम्भवतीति तदाश्रयेश्वरसिद्धिरिति प्रकारान्तरेण कार्येति कारिकां व्याचष्टे — **अथवेति** । **उद्देश एवेति** । अत्र प्रथमपादेन कार्यत्वस्य, द्वितीयपादेनाऽऽयोजनेत्यस्य, उत्तरार्धेन पदादित्यस्य च व्याख्या कृता । तदेव विवृणोति — **आम्नायस्य** **इत्यादिना**।

जनमुद्देश्यं वा यस्य तदिदं तत्परम् । तस्य भावस्तत्त्वम् । तत् यद्विषयं स तात्पर्यार्थ इति स्यात् । तत्र न प्रथमः, प्रमाणेनार्थस्य कर्मणोऽसाध्यत्वात् । फलस्य च तत्प्रतिपत्तितोऽन्यस्याभावात् । प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारेण प्रवृत्तिनिवृत्तिरूपं साध्यं परमुच्यते इति चेन्न। 'गङ्गायां घोष' इत्यत्र तीरस्याप्रवृत्तिनिवृत्तिरूपस्यासाध्यस्यापि परत्वात् । तीरविषये प्रवृत्तिनिवृत्ती साध्ये इति तीरस्यापि परत्वमिति चेन्न । स्वरूपाख्यानमात्रेणापि पर्यवसानात् ।

न द्वितीयः, पदवाक्ययोः पदार्थतत्संसर्गौ विहाय प्रतिपाद्यान्तराभावात् । पदशक्तिसंसर्गशक्ती विना स्वार्थाविनाभावेन प्रतिपाद्यं परमुच्यते इत्यपि न साम्प्रतम् । न हि यत् यच्छब्दार्थाविनाभूतं तत्र तत्तात्पर्यं शब्दस्य, अतिप्रसङ्गात् । तदा हि 'गङ्गायां जलमि'त्याद्यपि तीरपरं स्यात् । अविनाभावस्य तादवस्थ्यात् । मुख्ये बाधके सति तत्तथा स्यादिति चेन्न । तस्मिन्नसत्यपि भावात् । तद्यथा –

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ इति ।

मुख्यार्थाबाधनेऽपि वारणे तात्पर्यम् । न च परं व्यापकमेव; अव्यापकेऽपि तात्पर्यदर्शनात् । तद्यथा – 'मञ्चाः क्रोशन्ती'ति पुरुषे तात्पर्यम् । न च मञ्चपुरुषयोरविनाभावः, नापि पुरुषक्रोशनयोः । नापि तृतीयः, तद्धि प्रतिपाद्यापेक्षितं, प्रतिपादकापेक्षितं वा स्यात्? । नाद्यः, शब्दप्रामाण्यस्यातदधीनत्वात् । तथात्वे वाऽतिप्रसङ्गात् । यस्य यदपेक्षितं, तं प्रति तस्य परत्वप्रसङ्गात् ।

---

**स्वरूपाख्यानेति** । प्रवृत्त्यादौ तात्पर्याभावेऽपि तीरस्य तात्पर्यविषयत्वादिति भावः । अतदधीनत्वात्, प्रतिपाद्यानधीनत्वादित्यर्थः। **परत्वप्रसङ्गादिति** । श्रोतृभेदेन तात्पर्यभेदाद्वाक्यभेदापत्तिरिति भावः । ननु शब्दार्थेन साध्यं प्रतिपाद्यापेक्षितं यत्तत्परमित्याशङ्क्य, शब्दार्थसाध्यस्यापि कार्यज्ञाप्यभेदेन नानात्वाद्वाक्यभेदापत्तिरित्याह –

तदर्थसाध्यत्वेनापेक्षानियम इति चेन्न।कार्यज्ञाप्यभेदेन साध्यस्य बहुविधत्वे भिन्नतात्पर्यतया वाक्यभेदप्रसङ्गात्। धूमस्य हि प्रदेशश्यामलता मशकनिवृत्त्याद्यनेकं कार्यम्। आर्द्रेन्धनदहनाद्यनेकं ज्ञाप्यम्। तथाचेह प्रदेशे धूमोद्गम इत्यभिहिते तात्पर्यतः को वाक्यार्थो भवेत्?। चेतनापेक्षाया नियन्तुमशक्यत्वात्। नाऽपि प्रतिपादकापेक्षितं; वेदे तदभावात्। चतुर्थस्तु स्यात्। यदुद्देशेन यः शब्दः प्रवृत्तः स तत्परः, तथैव लोकव्युत्पत्तेः। तथाहि—प्रशंसावाक्यमुपादानमुद्दिश्य लोके प्रयुज्यते,तदुपादानपरम्। निन्दावाक्यं हानमुद्दिश्य प्रयुज्यते, तद्धानपरम्। एवमन्यत्रापि स्वयमूहनीयम्। तस्माल्लोकानुसारेण वेदेऽप्येवं स्वीकरणीयम्। अन्यथा अर्थवादानां सर्वथैवानर्थक्यप्रसङ्गात्। स चोद्देशो व्यवसायोऽधिकारोऽभिप्रायो, भाव, आशय, इत्यनर्थान्तरमिति तदाधारप्रणेतृपुरुषधौरेयसिद्धिः। तथाच प्रयोगः—वैदिकानि प्रशंसावाक्यानि उपादानाभिप्रायपूर्वकाणि, प्रशंसावाक्यत्वात्, 'परिणतिसुरसमाम्रफलमि' त्यादिलोकवाक्यवदिति। एवं निन्दावाक्यानि हानाभिप्रायपूर्वकाणि, निन्दावाक्यत्वात्, 'परिणतिविरसं पनसफलमि' त्यादिवाक्यवत्। अन्यथा निरर्थकत्वप्रसङ्गश्च विपक्षे बाधकमुक्तम्।

अपि च—नो चेदेवं, श्रुतार्थापत्तिरपि हीयेत। सिद्धो ह्यर्थः प्रमाणविषयो, न तु तेनैव कर्तव्यः। न च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रौ भुङ्क्त इति वाक्यशेषोऽस्ति, अनुपलम्भबाधितत्वात्। उत्पत्त्यभिव्यक्तिसामग्रीताल्वादिव्यापारविरहात्। अयोग्यस्याशङ्कितुमप्यशक्यत्वात्। तस्मादभिप्रायस्थ एव परिशिष्यते, गत्यन्तराऽभावात्। स चेद्वेदे नास्ति, नास्ति श्रुतार्थापत्तिरिति तद्व्युत्पादनानर्थक्यप्रसङ्गः। तस्मात् कार्यात्तात्पर्यादप्युन्नीयते, अस्ति प्रणेतेति।

---

तदर्थसाध्येत्यादिना। वेदे तदभावादिति। त्वया वेदकर्तुरनङ्गीकारादित्यर्थः। किञ्च वेदस्येश्वरेच्छामूलकत्वानङ्गीकारे त्वन्मते श्रुतार्थापत्तिः शब्दाध्याहाररूपा न स्यादित्याह—अपि चेत्यादिना। गत्यन्तराभावादिति। वेदेऽपि परस्परसमभि-

आयोजनात् खल्वपि । न हि वेदादव्याख्यातात् कश्चिदर्थमधिगच्छति । न चैकदेशदर्शिनो व्याख्यानमादरणीयम् ; 'पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इति न्यायेनाऽनाश्वासात् । त्रिचतुरपदकादपि वाक्यादेकदेशश्राविणोऽन्यथाऽर्थप्रत्ययः स्यात्, किमुतातीन्द्रियादन्तरान्तरवाक्यसम्भेददुरधिगमात् । ततः सकलवेदवेदार्थदर्शी कश्चिदेवाभ्युपेयः, अन्यथाऽन्धपरम्पराप्रसङ्गात् । स च श्रुताधीतावधृतस्मृतसाङ्गोपाङ्गवेदवेदार्थस्तद्विपरीतो वा न सर्वज्ञादन्यः सम्भवति । को ह्यप्रत्यक्षीकृतविश्वतदनुष्ठान 'एतावानेवायमाम्नाय' इति निश्चिनुयात्? । कश्चाऽर्वाग्दृक् निःशेषाः श्रुतीर्ग्रन्थतोऽर्थतो वाऽधीयीत, अध्यापयेद्वा?। अत्रापि प्रयोगः—वेदाः कदाचित् सर्ववेदार्थविद्व्याख्याताः, अनुष्ठातृमतिचलनेऽपि निश्चलार्थानुष्ठानत्वात्, यदेवं तत्सर्वं तदर्थविद्व्याख्यातं, यथा मन्वादिसंहितेति । अन्यथा त्वनाश्वासेनाव्यवस्थानादननुष्ठानमव्यवस्था वा भवेदनादेशिकत्वात् । अनुष्ठातार एवाऽऽदेष्टार इति चेन्न । तेषामनियतबोधत्वात् । वेदवद्वेदानुष्ठानमप्यनादीति चेन्न । तद्धि स्वतन्त्रं वा, वेदार्थबोधतन्त्रं वा? । आद्ये निर्मूलत्वप्रसङ्गः । द्वितीये त्वनियमापत्तिः । न ह्यसर्वज्ञाविशेषे पूर्वेषां तदवबोधः प्रमाणं, न त्विदानीन्तनानामिति नियामकमस्ति ।

पदात् खल्वपि । श्रूयते हि प्रणवेश्वरेशानादिपदम् ! तच्च सार्थकम्, अविगानेन श्रुतिस्मृतीतिहासेषु प्रयुज्यमानत्वात्, घटादिपदवदिति सामान्यतः सिद्धे, कोऽस्यार्थः? इति व्युत्पित्सोर्विमर्शे सति निर्णयः, स्वर्गादिपदवत् ।

---

व्याहृतपदानामर्थप्रतिपादने सामर्थ्योपलब्धेस्तस्य चोच्चारणाभिप्रायोभयनियतत्वेनेश्वरसिद्धिरिति भावः । वेदव्याख्यानादपीश्वरसिद्धिरिति द्वितीयहेतुमाह — **आयोजनादिति** । सकलवाक्यार्थावधारणादपीश्वरसिद्धिरिति तृतीयहेतुमाह — **स च श्रुताधीतेति** । चतुर्थहेतुमाह — **पदादिति** । अविगानेन, निरर्थकत्वप्रसिद्ध्यभावेनेत्यर्थः । **स्वर्गादिपदवदिति** । यथा स्वर्गपदस्यार्थवादवशाच्छक्तिनिर्णय-

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' ॥ इत्यर्थवादात् ।

यववराहादिवद्वाक्यशेषाद्वा । तद्यथा ईश्वरप्रणिधानमुपक्रम्य श्रूयते –

'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य' ॥ इति ।

एवम्भूतोऽर्थः प्रमाणबाधित इति चेन्न । प्रागेव प्रतिषेधात् । तथापि न तत्र प्रमाणमस्तीति चेत्; स्वर्गे अस्तीति का श्रद्धा? । न ह्युक्तविशेषणे सुखे किञ्चित्प्रमाणमस्त्यस्मदादीनाम् ।

याज्ञिकप्रवृत्त्यन्यथाऽनुपपत्त्या तथैव तदित्यवधार्यते इति चेन्न । इतरेतराश्रयप्रसङ्गात् । अवधृते हि स्वर्गरूपे तत्र प्रवृत्तिः, प्रवृत्त्यन्यथाऽनुपपत्त्या च तदवधारणमिति । पूर्ववृद्धप्रवृत्त्या तदवधारणेऽयमदोष इति चेन्न । अन्धपरम्पराप्रसङ्गात् । विशिष्टादृष्टवशात् कदाचित् कस्यचिदेवंविधमपि सुखं स्यादिति नास्ति विरोधः । तन्निषेधे प्रमाणाभावादिति चेत्; तुल्यमितरत्रापि । अत्रापि प्रयोगः – यः शब्दो यत्र वृद्धैरसति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचकः, यथा स्वर्गशब्दः सुखविशेषे प्रयुज्यमानस्तस्य वाचकः । प्रयुज्यते चायं जगत्कर्तरीति । अन्यथा निरर्थकत्वप्रसङ्गे सार्थकपदकदम्बसमभिव्याहारानुपपत्तिरिति । एतेन रुद्रोपेन्द्रमहेन्द्रादिदेवताविशेषवाचका व्याख्याताः ।

अपि च – अस्मत्पदं लोकवृद्धेऽपि प्रयुज्यते । तस्य च लोके नाचेतनेष्वन्यतमदर्थः, तत्र सर्वथैवाप्रयोगात् । नाप्यात्ममात्रमर्थः, परात्मन्यपि प्रयोगप्रसङ्गात् । अपि तु यस्तं स्वातन्त्र्येणोच्चारयति तमेवाह । तथैवान्वयव्यतिरेकाभ्यामवसायात् । ततो लोकव्युत्पत्तिमनतिक्रम्य

---

स्तथेत्यर्थः । रुद्रादिपदानामपि वाक्यशेषादर्थनिर्णय इत्याह — एतेनेति । स्वातन्त्र्येणेति । अन्यकर्तृकत्वेन तात्पर्याविषयत्वं स्वातन्त्र्यम् । तथाच 'वाच्यस्त्वया मद्वचनात्स राजे' त्यत्र कवेरिव 'गृभ्णामि ते सौभगत्वाये' त्यादा-

वेदेऽप्यनेन स्वप्रयोक्तैव वक्तव्यः। अन्यथाऽप्रयोगप्रसङ्गात्। न च यो यदोच्चारयति वैदिकमहंशब्दं स एव तदा तस्यार्थ इति युक्तम्; तथा सति 'मामुपासीते'त्यादौ स एवोपास्यः स्यात्। 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्युपाध्यायशिष्यपरम्परैवात्मन्यैश्वर्यं समधिगच्छेत्। तथाच उपासनां प्रत्युन्मत्तकेलिः स्यात्। लोकव्यवहारश्चोच्छिद्येत। तस्मान्नानुवक्ताऽस्य वाच्यः। अपि तु वक्तैवेति स्थिते प्रयुज्यते। वेदे अस्मच्छब्दः स्वप्रयोक्तृवचनः, अस्मच्छब्दत्वाल्लोकवदिति।

एवमन्येऽपि यः कः स इत्यादिशब्दा द्रष्टव्याः। तेषां बुद्ध्युपक्रमप्रश्नपरामर्शाद्युपहितमर्यादत्वात्। तस्य च वक्तृधर्मत्वात्। बुद्ध्युपक्रमो हि प्रकृतत्वं, जिज्ञासाऽऽविष्करणञ्च प्रश्नः, प्रतिसन्धानञ्च परामर्श इति। एवञ्च संशयादिवाचका अप्युन्नेयाः। न च जिज्ञासासंशयादयः सर्वज्ञे प्रतिषिद्धा इति युक्तम्; शिष्यप्रतिबोधनायाहार्यत्वेनाविरोधात्। को धर्मः? कथं लक्षणक इत्यादिभाष्यवदिति। एतेन धिगहो बत हन्तेत्यादयो निपाता व्याख्याताः।

प्रत्ययादपि। लिङादिप्रत्यया हि पुरुषधौरेयनियोगार्था भवन्तस्तं प्रतिपादयन्ति। तथाहि—

प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा॥ ७॥

---

वपि नेश्वरबोधकत्वं तच्छब्दस्येति भावः। अस्मच्छब्दत्वादिति। स्वतन्त्रास्मच्छब्दत्वादित्यर्थः। यथा बुद्धिस्थत्वादीनां कर्तृधर्मत्वमेवं गर्हाविस्मयखेदादीनामपि वक्तृधर्मत्वम्। तेनापि वेदकर्तुरीश्वरसिद्धिरित्याह—एतेनेति। पञ्चमं हेतुमाह—प्रत्ययादिति। नियोगः = अभिप्रायः। अत्र प्रवृत्तिः = कृतिः। सा चेच्छातो जायते, इच्छा तु ज्ञानजन्या। तथाच प्रवृत्तिकारणीभूतेच्छाजनकज्ञानविषयो विधिरित्यर्थः। स्वमतमाह—तज्ज्ञापक इति। तादृशविषयज्ञापक इत्यर्थः।

प्रवृत्तिः खलु विधिकार्या सती न तावत्कायपरिस्पन्दमात्रम्; आत्मा ज्ञातव्य इत्याद्यव्यापनात् । नापीच्छामात्रम्, तत एव फलसिद्धौ कर्माऽनारम्भप्रसङ्गात्। ततः प्रयत्नः परिशिष्यते । आत्मज्ञानभूतदयादावपि तस्याभावात् । तदुक्तं 'प्रवृत्तिरारम्भः' इति । सेयं प्रवृत्तिर्यतः सत्तामात्रावस्थितात्, नासौ विधिः; तत्र शास्त्रवैयर्थ्यात् । अप्रतीतादेव कुतश्चित् प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात् । न च प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात् । न च प्रवृत्तिहेतुजननार्थं तदुपयोगः, प्रवृत्तिहेतोरिच्छाया ज्ञानयोनित्वात् ज्ञानमनुत्पाद्य तदुत्पादनस्याशक्यत्वात्, तस्य च निरालम्बनस्यानुत्पत्तेरप्रवर्त्तकत्वाच्च । नियामकाभावात् । तस्माद्यस्य ज्ञानं प्रयत्नजननीमिच्छां प्रसूते, सोऽर्थविशेषस्तज्ज्ञापको वाऽर्थविशेषो विधिः, प्रेरणा, प्रवर्तना, नियुक्तिर्नियोग, उपदेश इत्यनर्थान्तरमिति स्थिते विचार्यते । स हि कर्तृधर्मो वा स्यात्, कर्मधर्मो वा, करणधर्मो वा, नियोक्तृधर्मो वेति ।

इष्टहाने रनिष्टाप्तेरप्रवृत्ते र्विरोधतः ।
असत्त्वात्प्रत्ययत्यागात्कर्तृधर्मो न सङ्करात् ॥ ८ ॥

स हि न स्पन्द एव, आत्मानमनुपश्येदित्याद्यव्याप्तेः । 'ग्रामं गच्छती' त्यादावतिव्याप्तेश्च । नाऽपि तत्कारणं प्रयत्नः, तस्य सर्वाख्यातसाधारणत्वात् ।

---

**विधिकार्येति** । विधिज्ञानकार्येत्यर्थः । **आत्मा ज्ञातव्य इति** । तत्र चेष्टाभावादित्यर्थः । **शास्त्रवैयर्थ्यादिति** । शास्त्रस्य ज्ञापकतया सत्तया हेतौ तस्यानावश्यकत्वादिति भावः । **स हीति** । कर्तृधर्मः = स्पन्दः, इच्छा, प्रयत्नो वा । कर्मधर्मः कार्यत्वादिः । करणधर्मः इष्टसाधनत्वम् । शब्दधर्मो भावना । नियोक्तृधर्मोऽभिप्रायविशेषः । **न प्रथम इति** । अव्याप्त्यतिव्याप्तिभ्यां न स्पन्दो विधिः । यत्नमात्रस्यानिष्टसाधनसाधारण्यान्न विधित्वम् । इच्छाया विधित्वे स्वेनैव स्वजननाद्विरोधः ।

ननु न सर्वत्र प्रयत्न एव प्रत्ययार्थः । करोतीत्यादौ प्रकृत्यर्थातिरेकिणस्तस्याभावात् । संख्यामात्राभिधानेन प्रत्ययस्य चरितार्थत्वात् । ततो लिङादिवाच्य एव प्रयत्न इति । न । कुर्यादित्यत्रापि तुल्यत्वात् । प्रयत्नमात्रस्य प्रकृत्यर्थत्वेऽपि तस्य पराङ्गतापन्नस्य प्रत्ययार्थत्वान्न तुल्यत्वमिति चेन्न । तथापि तुल्यत्वात् । न चैकस्य तद्वाचकत्वेऽन्यस्य तद्विपर्यय आपद्येत; एको द्वौ बहव एषिषतीत्यादौ व्यभिचारात् । तत्र द्वितीयसंख्येच्छादिकल्पने करोति, प्रयतते इत्यादावपि तथा स्यात् । प्रत्येकमन्यत्र सामर्थ्यावधृतौ सम्भेदे तथा कल्पनायास्तुल्यत्वात् । 'रथो गच्छतीत्यादौ' तदसम्भवे का गतिरिति चेत्; तन्तवः पटं कुर्वन्तीत्यत्र या । लोकोपचारोऽयमपर्यनुयोज्य इति चेत्; तुल्यम् ।

---

किञ्च लिङ्श्रवणकाले इच्छाया असत्त्वाल्लिङः इच्छाकारणत्वे ज्ञानस्य कारणत्वत्यागप्रसङ्गादिष्टसाधनताज्ञानसङ्कीर्णत्वाच्चेच्छायाः तदपेक्षयेष्टसाधनत्वमेव विध्यर्थ इति न कर्तृधर्मो विधिरिति कारिकार्थः । ननु सर्वत्र यत्नस्य प्रत्ययार्थत्वे करोतीत्यादौ धातुना प्रत्ययस्य पौनरुक्त्यापत्तिः । अतस्तत्र यत्नो धात्वर्थः, संख्या प्रत्ययार्थः । तथाच लिङ एव यत्नार्थकत्वमित्याशङ्क्य, कुर्यादित्यत्र पौनरुक्त्यापत्त्या लिङोऽपि न यत्नार्थकत्वमित्याह — **ननु सर्वत्रे**त्यादिना ।

कुर्यादित्यत्र यत्नो धात्वर्थः । तत्सम्बन्धित्वमनुकूलत्वं वा प्रत्ययार्थ इति विशेष इति चेत्प्रकृतेऽपि तुल्यमित्याह—**तथापि तुल्यत्वादिति** । किञ्च प्रकृतिप्रत्यययोरेकार्थकत्वमेकः, द्वावित्यादो दृष्टत्वेन करोतीत्यादावपि प्रकृतिप्रत्यययोरप्येकार्थत्वं न दोषायेत्याह — **न चैकस्येति** । एकस्य, प्रकृतेः । अन्यस्य, प्रत्ययस्येत्यर्थः । नन्वेकः, द्वावित्यादौ प्रकृत्यर्थैकत्वादितो भिन्नमेवैकत्वादिकं प्रत्ययार्थः । तयोरेकस्यैव पदार्थान्तरेणान्वयः स्वीक्रियत इति चेत्प्रकृतेऽपि तुल्यमित्याह — **तत्र द्वितीये**त्यादिना । ननु 'रथो गच्छती' त्यादौ नाऽख्यातस्य यत्नार्थकत्वमुपपन्नमित्याशङ्क्य, तन्तवः पटं कुर्वन्तीत्यादौ धातोरिवात्रापि लाक्षणिकोऽयं प्रयोग इति समाधत्ते — **रथ** इत्यादिना । वृद्धव्यवहाराल्लिङो यत्नार्थकत्वं सिद्धमिति

लिङः कार्यत्वे वृद्धव्यवहाराद्व्युत्पत्तौ सर्वं समञ्जसम् । आख्यातमात्रस्य तु न तथेति चेन्न । विवरणादेरपि व्युत्पत्तेः । अस्ति च तदिह । किं करोति? पचति, पाकं करोतीत्यर्थः इत्यादिदर्शनात् । तथापि फलानुकूलताऽऽपन्नधात्वर्थमात्राभिधाने तदतिरिक्तप्रयत्नाभिधानकल्पनायां कल्पनागौरवं स्यात् । अतो विवरणमपि तावन्मात्रपरमिति चेत्; भवेदप्येवं, यदि पाकेनेति विवृणुयात् । न त्वेतदस्ति । धात्वर्थस्यैव पाकमिति साध्यत्वेन निर्देशात् । ततस्तं प्रत्येव किञ्चिदनुकूलताऽऽपन्नं प्रत्ययेनाभिधानीयमिति युक्तम् । तथापि तेन प्रयत्नेनैव भवितव्यं, न त्वन्येनेति कुत इति चेत्; नियमेन तथा विवरणात् । बाधकं विना तस्यान्यथाकर्तुमशक्यत्वात् । अन्यथाऽतिप्रसङ्गात् ।

स्यादेतत् । यस्य कस्यचित् फलं प्रत्यनुकूलतापत्तिमात्रमेव करोत्यर्थो, न तु प्रयत्न एव । सोऽपि ह्यनेनैवोपाधिना प्रत्ययेन वक्तव्यो, न तु यत्नत्वमात्रेण, प्रयत्नपदेनाविशेषप्रसङ्गात् । तद्वरं तावन्मात्रमेवास्तु लाघवाय । अन्यथा त्वनुकूलत्वप्रयत्नत्वे द्वावुपाधी कल्पनीयौ । अचेतनेषु सर्वत्र गौणार्थास्तिङोऽसति बाधके कल्पनीया इति चेत्;

---

चेद्विवरणेनाख्यातस्यापि तत्सिद्धमित्याह — लिङ इत्यादिना । ननु पचतीत्यादौ पचधात्वर्थः तण्डुलतुषापनयनादिव्यापारमात्रम् । तत्र रूपपरावृत्तिरूपफलानुकूलत्वं प्रत्ययार्थः । तत्रैवं सति यत्नार्थकत्वकल्पनं गौरवग्रस्तमित्याशङ्क्य, तर्हि पचतीत्यस्य 'पाकेन करोती'त्यपि विवरणं स्यात्, 'ओदनं काष्ठेन पचती'तिवदिति समाधत्ते — भवेदप्येवमिति । तथाच फलमुखगौरवं न दोषायेति भावः । शङ्कते—स्यादेतदिति । अयं भावः—'पाकं करोती'त्यादौ करोतिर्न यत्नार्थकः, किन्त्वनुकूलव्यापारार्थकः । प्रत्ययोऽप्यनुकूलव्यापारत्वेनैव यत्नं बोधयति, न तु यत्नत्वेन । तथा सति यत्नपदेन पर्यायतापत्तेः । अनुकूलत्वयत्नत्वयोः प्रवृत्तिनिमित्ततापत्तेश्च । 'रथो गच्छती'त्यचेतनेषु सर्वत्र बाधकं विना गौणार्थताकल्पनाप्रसङ्गाच्चेति । समाधत्ते — अत्रोच्यत इति । अयं भावः — क्रियाजन्यत्वाविशेषेऽपि प्रयत्नजन्यत्वप्रतिसन्धाने घटादौ कृत इति व्यवहारदर्शनात्,

अत्रोच्यते –

कृताकृतविभागेन कर्तृरूपव्यवस्थया ।

यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥ ९ ॥

यत्नपूर्वकत्वं हि प्रतिसन्धाय घटादौ कृत इति व्यवहारात् । हेतुसत्त्वप्रतिसन्धानेऽपि यत्नपूर्वकत्वप्रतिसन्धानविधुराणामङ्कुरादौ तदव्यवहारात् करोत्यर्थो यत्न एव तावदवसीयते । अन्यथा हि यत्किञ्चिदनुकूलपूर्वकत्वाविशेषात् घटादयः कृताः, न कृतास्त्वङ्कुरादय इति कुतो व्यवहारनियमः । तेन च सर्वमाख्यातपदं विव्रियते इति सर्वत्र स एवार्थ इति निर्णयः । तथाच समुदिते प्रवृत्तं पदं तदेकदेशेऽपि प्रयुज्यते, विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत् । अन्यथाऽपि मध्यमोत्तमपुरुषगामिनः प्रत्ययाः, प्रथमे पुरुषे जानाति, इच्छति, प्रयतते, अध्यवस्यति, शेते, संशेते इत्यादयश्च गौणार्था एवाचेतनेषु । न च वृत्त्यन्तरेणापि प्रयोगसम्भवे शक्तिकल्पना युक्ता ; अन्यायश्चानेकार्थत्वमिति स्थितेः । अत एवानुभवोऽपि, यावदुक्तं भवति, पाकानुकूलवर्तमानप्रयत्नवांस्तावदुक्तं भवति, पचतीति । एवं तथाभूतातिवृत्तप्रयत्नोऽपाक्षीदिति । एवं तथाभूतभाविप्रयत्नः पक्ष्यतीति, न तु पच-

---

तदननुसन्धाने अङ्कुरादौ तददर्शनाच्च करोतिर्यत्नार्थकः । किञ्च तृजन्तकृधातुनिष्पन्नकर्तृशब्दस्य यत्नाश्रय एवार्थः, न तु व्यापाराश्रयः । तथा सति सर्वकारकाणां कर्तृत्वापत्तेः । एवञ्च कृधात्वर्थकृतिरेव यत्नः । तदुत्तरप्रत्ययेऽपि सैव कृतिर्भावनाफलसाधनीभूता भासते । तथाच फलसाधनीभूतयत्नस्य प्रत्ययार्थत्वात् केवलयत्नार्थकयत्नशब्देन न प्रत्ययस्य पर्यायतापत्तिरिति । श्रोत्रियपदवदिति । अध्येतृब्राह्मणशक्तं श्रोत्रियपदं विशुद्धिमात्रमुपेक्ष्यानध्येतृब्राह्मणेऽपि प्रयुज्यते, एवमेव 'रथो गच्छती'त्यादावपि अनुकूलयत्नार्थकः प्रत्ययः अनुकूलयत्नाभिप्रायेण प्रयुज्यत इति भावः । 'रथो गच्छती'त्यादौ गौणार्थभिया प्रत्ययस्य यत्नार्थकत्वं परित्यजता त्वयाऽपि अचेतनेषु मध्यमोत्तमपुरुषयोर्जानातीत्यादौ प्रथमपुरुषेऽपि गौणार्थत्वमवश्यमङ्गीकर्तव्यमेवेत्याह – अन्याऽपीत्यादिना । प्रत्ययस्य नानार्थत्वं कल्प्यत इत्याशङ्क्य निराकरोति – न चेति ।

तीति पाकानुकूलयत्किञ्चिद्वानिति। अन्यथाऽतिथावपि परिश्रमशयाने पचतीति प्रत्ययप्रसङ्गात्।

अपि च – कर्तृव्यापार एव कृञर्थः, चेतनश्च कर्ता, अन्यथा तद्व्यवस्थाऽनुपपत्तेः। न ह्यभिधीयमानव्यापारवत्त्वं कर्तृत्वम्, अनभिधानदशायां कुर्वतोऽप्यकर्तृत्वप्रसङ्गात्। नाऽप्याख्यातप्रत्ययाभिधानयोग्यव्यापारशालित्वं कर्तृत्वं; योग्यताया एवानिरूपणात्। फलानुगुणमात्रस्य सर्वकारकव्यापारसाधारणत्वात्। नापि विवक्षातो नियमः, अविवक्षादशायामनियमप्रसङ्गात्। स्वव्यापारे नेदमनिष्टमिति चेत्; एवं तर्हि 'स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारके' इति न्यायेन करणादिविलोपप्रसङ्गः। न स्वव्यापारापेक्षया करणादिव्यवहारः, किन्तु प्रधानक्रियापेक्षया। अस्ति हि काञ्चित् क्रियामुद्दिश्य प्रवर्तमानानां कारकाणामवान्तरव्यापारयोगो, न त्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरिति चेत्; तर्हि तदपेक्षयैव कर्तृकर्मादिव्यवहारविशेषनियमे किं कारणमिति चिन्त्यताम्। स्वातन्त्र्यादीति चेत्; ननु तदेव किमन्यत् प्रयत्नादिसमवायादिति विविच्याभिधीयतामिति। तस्मात्सर्वत्र समानव्यापार एवाख्यातार्थः।

---

**प्रत्ययप्रसङ्गादिति**। अतिथिशयनस्यापि पाकानुकूलत्वादिति भावः। एवं 'कृताकृतविभागेने'ति कारिकाभागं व्याख्यायाऽधुना कर्तृरूपव्यवस्थयेति व्याचष्टे– **अपि चेति**। अन्यथा=कृञर्थव्यापाराश्रयत्वं कर्तृत्वमित्यनङ्गीकारे। धातुना प्रत्ययेन वाऽभिधीयमानत्वस्य व्यापारे विशेषणत्वे, उपलक्षणत्वे वा दोषमाह– **अनभिधानदशायामिति**। फलानुगुणव्यापारवत्तया यत्कारकं विवक्ष्यते स कर्तेति नियमाङ्गीकारेऽपि दोषमाह – **अविवक्षादशायामिति**। स्वव्यापारापेक्षया सर्वेषामपि कारकाणां कर्तृत्वमिष्टमेवेत्याशङ्क्य, तर्हि करणादिविलोपप्रसङ्ग इत्याह—**करणादीति**। कर्तृव्यवहारप्रयोजकं स्वातन्त्र्यं ज्ञानचिकीर्षाकृत्याश्रयत्वमेव, नातोऽन्यदित्याह – **तस्मात्सर्वत्रेति**। समानाधिकरणः, ज्ञानसमानाधिकरण इत्यर्थः। नन्वनन्यलभ्यः शब्दार्थ इति न्यायेन यत्नस्याक्षेपलभ्यत्वान्नाख्यातार्थत्वमिति

तथापि फलानुगुणतैवास्तु प्रत्ययस्य प्रवृत्तिनिमित्तं, प्रयत्नस्त्वाक्षेपतो लप्स्यते इति चेन्न ।

भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ १० ॥

केन हि तदाक्षिप्येत । न तावदनुकूलत्वमात्रेण, तस्य प्रयत्नत्वेनाव्यापनात् । न हि यत्नत्वैकार्थसमवाय्येवानुकूलत्वम् । अत एव न संख्यया, तस्याः संख्येयमात्रपर्यवसायित्वात् । कर्त्रेति चेन्न । द्रव्यमात्रस्याकर्तृत्वात् । व्यापारवतश्चाभिधाने व्यापाराभिधानस्यावश्याभ्युपगमनीयत्वात् । नापि धात्वर्थेन तदाक्षेपः, विद्यते इत्यादौ तदसम्भवात् । न ह्यत्र धात्वर्थो भावनाऽपेक्षी, सत्ताया नित्यत्वात् । तत्र न भविष्यतीति चेन्न । पूर्वापरीभूतभावनाऽनुभवस्याविशेषात् । भावनोपरागेण ह्यतथाभूतोऽप्यर्थस्तथा भासते इति । न च पदान्तरलब्धया भावनयाऽनुकूलतायाः प्रत्ययार्थस्यान्वयः, तदसम्भवात् । न खलु प्रकृत्यैव साऽभिधीयते; धातूनां क्रियाफलमात्राभिधायित्वात् । अन्यथा पाक इत्यादावपि भावनाऽनुभवप्रसङ्गात् । नापि चैत्र इत्यादिना पदान्तरेण प्रकृतिप्रत्यययोरुभयोरप्यकारकार्थत्वात् ।

---

शङ्कानिराकरणव्याजेन 'पूर्वस्मिन्नैव भावने' ति कारिकाचतुर्थपादं व्याकरोति—**केन हीत्यादिना** । **संख्येयमात्रपर्यवसायित्वादिति** । संख्यायाः संख्येयवृत्तित्वेन संख्येयाक्षेपेऽपि न प्रयत्नाक्षेपः, तस्यास्तत्राभावादिति भावः । **कर्त्रेति** । आख्यातार्थेनेत्यर्थः । परमते आख्यातार्थस्यैव कर्तृत्वादिति भावः । **द्रव्यमात्रस्याकर्तृत्वादिति** । द्रव्यमात्रस्यायत्नवत्त्वात्तेन यत्नाक्षेपो न सम्भवतीति भावः । सत्ताया नित्यतया तत्र भावना न सम्भवतीत्याशङ्क्य, तत्राप्युपरागेण भावनाभानं न विरुद्धमित्याह – **भावनोपरागेणेति** । ननु पदान्तरोपस्थापितायां भावनायां प्रत्ययार्थस्यानुकूलत्वस्यान्वय इत्याशङ्क्य निराकरोति – **तदसम्भवादिति** । **चैत्र** इत्यत्र प्रकृतेः प्रथमाया वा केवलप्रातिपदिकार्थत्वमेव । कारकं च व्यापाराविष्टमेवेति व्यापाराविष्टार्थकत्वाभावादिति भावः । नन्वोदनमित्यादौ कर्मकारका-

ओदनमित्यादेः कारकपदत्वात् तस्य च क्रियोपहितत्वात् तेनाभिधानमाक्षेपो वा ! कथमन्यथौदनमित्युक्ते, किं भुङ्क्ते, पचति वेति विशेषाकाङ्क्षेति चेन्न । पचतीत्युक्ते किमोदनं, तेमनं वेति विशेषाकाङ्क्षादर्शनात् । सा चाक्षेपाभिधानयोरन्यतरमन्तरेण न स्यात् । तस्यां दशायां न चेदाक्षेपो नूनमभिधानमेवेति ।

स्यादेतत् । अभिधीयतां तर्हि कर्ताऽपि । तदनभिधाने हि सङ्ख्येयमात्रमाक्षिप्य सङ्ख्या कथं कर्तारमन्वियात्, न तु कर्म्मादिकमपि । 'शाकसूपौ पचति, शाकसूपौदनान् पचतीत्यादौ विरोधनिरस्ता सङ्ख्या चैत्र इति कर्तारमविरुद्धमनुगच्छतीति चेत्; 'चैत्र ओदनं पचती' त्यत्र का गतिः । एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथा, यववराहादिवदिति चेन्न । पच्यते इत्यादावपि तथाभावप्रसङ्गात् । चैत्राभ्यां, चैत्रैरिति विरोधनिरस्ता सूप इत्यविरुद्धं कर्म समनुक्रामतीति चेत्; चैत्रमैत्राभ्यां शाकसूपौ पच्येते इत्यत्र का गतिः ।

अन्यत्र निर्णीतेनार्थेन व्यवहार इति चेन्न । पचतीत्यादावपि तथाभावप्रसङ्गात् । तत्र पूर्वक एव निर्णयः, पच्यते इत्यत्र त्वपर इति चेन्न । विशेषाभावात् । आत्मनेपदपरस्मैपदाभ्यां विशेष इति चेन्न ।

---

ङ्गावनाया आक्षेपः, अभिधानं वा स्यादित्याशङ्क्य कर्मकारकपदाश्रवणेऽपि पचतीति क्रियापदाश्रयणादपि भावनोपस्थितेरानुभविकत्वेन, तत्र चाक्षेपस्य बाधात्प्रत्ययाभिधेयैव भावनेति समाधत्ते – **ओदनमित्यादिना** । 'चैत्रः पचती' त्यत्र कर्तरि, 'चैत्रेण पच्यत' इत्यादौ चाख्यातार्थसंख्यान्वयदर्शनात् शाब्दाऽशाब्दयोरन्वयाभावात्कर्तृकर्मणोचाख्यातार्थे इति वैयाकरणः शङ्कते – **अभिधीयतां तर्हीति** । **का गतिरिति** । अत्र विरोधाभावात्संख्या कर्मणि कुतो नान्वेतीति भावः । **यववराहवदिति** । यथा 'यवमयश्चरुर्भवती' त्यत्र वाक्यशेषवशान्निर्णीत एव यवपदार्थः 'यवैर्जुहोती' त्यत्रापि गृह्यते तद्वदित्यर्थः । **का गतिरिति** । अत्र विरोधाभावात्कर्तरि संख्यान्वयः कुतो नेति भावः । **तथाभावप्रसङ्गादिति** । कर्मणि संख्यान्वयप्रसङ्गादित्यर्थः । तत्र=चैत्रः पचतीत्यत्र । **विशेषाभावादिति** ।

पच्यते, पचते, पक्ष्यते इत्यादौ विप्लवप्रसङ्गादिति । दृश्यते च समानप्रत्ययाभिहितेनान्वयः सङ्ख्यायाः । तद्यथा – भूयते, सुप्यते, इत्यादौ । न हि तत्र कर्त्रा, कर्म्मणा वा, अन्येनैव वा, केनचिदन्वयः; किन्तु भावेनैव । अनन्वये तदभिधायिनोऽनर्थकत्वप्रसङ्गात् । आक्षिप्तेन चान्वये तत्रापि कर्त्रैवान्वयापत्तेः । को हि सुप्यते, स्वपितीत्यनयोः कर्त्राक्षेपं प्रति विशेषः ।

स्यादेतत् । 'भावकर्म्मणो' रित्याद्यनुशासनबलात्तावत् भावकर्मणी प्रत्ययवाच्ये । ततस्तदभिहिता सङ्ख्या ताभ्यामन्वीयते । यस्तु प्रत्ययो न तत्रोत्पन्नः, तदभिहिता सङ्ख्या, 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (मी. १२ - २ - २३) इति न्यायेन कर्तारमेवाश्रयते इति नियमः । न । विपर्ययप्रसङ्गात् । 'शेषात्कर्त्तरिपरस्मैपदं, कर्तरि शबि' त्यनुशासनबलाद्भावकर्तारौ प्रत्ययवाच्यौ, ततस्तदभिहिता सङ्ख्याऽपि ताभ्यामन्वीयते । यस्तु प्रत्ययो न तत्रोत्पन्नस्तदभिहिता संख्या तेनैव

---

अन्यत्र कर्तरि कर्माणि च संख्यान्वयदर्शनेन 'चैत्रस्तण्डुलं पचती' त्यत्र कर्तर्येव संख्यान्वयः, न कर्मणीति नियामकाभावादिति भावः । एकपदोपस्थापितपदार्थयोर्मिथोऽन्वयबोधस्याव्युत्पन्नतया कर्तुराख्यातार्थत्वे आख्यातार्थसंख्याया अनन्वयप्रसङ्ग इत्याशङ्क्य, भावाख्यातस्थले आख्यातार्थयोर्मिथोऽन्वयदर्शनेन साकाङ्क्षयोग्यासन्नपदार्थयोरेवान्वय इति नियमो युक्त इति समाधत्ते — दृश्यते चेत्यादिना । तत्र = भावकर्मणोः । मुख्यं वा पूर्वचोदनाल्लोकवदिति । 'आग्नावैष्णवमेकादशकपालं चरुं निर्वपेत् । सारस्वतमस्याज्यस्य यजेत' इत्यत्र किमाग्नावैष्णवधर्माः प्रथमतो भवन्ति, उत सारस्वतधर्मा इति सन्देहे पूर्वचोदनादाग्नावैष्णवधर्मा एव प्रथममनुष्ठेयाः । लोकवदिति । यथा लोके साक्ष्ये द्वयोर्विगाने प्रथमस्यैव ग्रहणं तद्वदिति सूत्रार्थः । प्रकृते कारकेषु कर्तुः प्रथममभिधानादसति बाधके तत्रैव संख्यान्वय इति । यथाऽनुशासनम् । व्याकरणमनतिक्रम्येति यावत् । 'अनन्यलभ्यः शब्दार्थ' इति न्यायेन कर्तुराक्षेपलभ्यत्वान्नाख्यातवाच्यत्वम् । एकाख्यातपदार्थतया भावनापरतन्त्रा संख्या भावनान्वयिन्यन्वेति, नान्यत्र ।

न्यायेन कर्म्म समाश्रयेदिति नियमोपपत्तेः। तस्मात् मतिकर्दममपहाय यथाऽनुशासनमेव गृह्यते इति प्राप्तम्। एवं प्राप्तेऽभिधीयते –

आक्षेपलभ्ये सङ्ख्येये नाभिधानस्य कल्पना।
सङ्ख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः॥११॥

सङ्ख्याऽपि तावदियं भावनाऽनुगामिनी; यं यं भावनान्वेऽति, तं तं सङ्ख्याऽपीति स्थितेः एकप्रत्ययवाच्यत्वानियमात्। भावना च शुद्धं प्रातिपदिकार्थमात्रमाकाङ्क्षति। न हि व्यापारवन्तं व्यापार आश्रयते आत्माश्रयत्वात्।

समवायं प्रति तदनुपयोगात्। विजातीयव्यापारवतोऽकर्तृत्वाच्च। न च द्वितीयाद्याः प्रातिपदिकविभक्तयः। ततः प्रथमानिर्दिष्टेनैव भावनाऽन्वीयते इति तस्यान्वययोग्यतानियमात् सङ्ख्याऽपि तदनुगामिनी तेनैवान्वीयते इति नातिप्रसङ्गः, नञर्थवत्। यथा हि चैत्रो

---

भावना चाकाङ्क्षावशात्क्वचित् कर्त्रा, क्वचित्कर्मणाऽन्वेतीति न कुत्राप्यनुपपत्तिरिति समाधत्ते – **आक्षेपलभ्य** इत्यादिना। **शुद्धमिति**। व्यापारानाविष्टमित्यर्थः। तथा च 'चैत्रस्तण्डुलमग्निना पचती' त्यत्र स्वरूपत उपस्थापितस्य चैत्रस्य व्यापारसाकाङ्क्षतया, आख्यातार्थभावनायाश्चाश्रयसाकाङ्क्षत्वाद्भवति तयोः परस्परमन्वयबोधः, न करणादिना। तयोर्व्यापाराविष्टत्वेन परस्पराकाङ्क्षाभावात्। 'पच्यते तण्डुलश्चैत्रेणे' त्यादौ चैत्रस्य व्यापारवत्तयोपस्थितेः न तत्र भावनाऽन्वयः, किन्तु तण्डुलेनैवेति तत्र तत्र संख्यान्वयनियमः। 'सुप्यते चैत्रेणे' त्यादौ तु कर्तुर्निराकाङ्क्षतया कर्मणश्चानुपस्थितेर्न तत्र संख्यान्वयः। किन्तु धात्वर्थेनैवेति भावः। तद्व्यापारविशिष्टे तद्व्यापारस्यान्वये दोषमाह – **आत्माश्रयेति**। युक्त्यन्तरमाह – **समवायं प्रतीति**। **तदनुपयोगादिति**। व्यापारवदनुपयोगादित्यर्थः। यथा भावना शुद्धप्रातिपदिकार्थापेक्षा, एवं तत्समवायोऽपीति भावः। नन्वात्माश्रयप्रसङ्गात्सजातीयव्यापारवता भावनाया अनन्वयेऽपि द्वितीयाद्युपस्थापितविजातीयव्यापारवताऽन्वयः किं न स्यादित्याशङ्क्य, योग्यताविरहान्न तेनान्वय इत्याह – **न च द्वितीयाद्या इति**। **नञर्थवदिति**। अत्र न चैत्र

न गौरो न स्पन्दते न कुण्डलीत्यादौ विशेषणविशेष्यसमभिव्याहारा-विशेषेऽपि नञा तदनभिधानाविशेषेऽपि नञर्थस्य विशेषणांशेनैवा-न्वयो न विशेष्यांशेन ।

ननु बाधात्तत्र तथा । न हि विशेष्येण तदन्वये विशेषणोपा-दानमर्थवद्भवेत्; तन्निषेधेनैव विशेषणनिषेधोपलब्धेः । उभयनिषेधे चावृत्तौ वाक्यभेदादनावृत्तौ निराकाङ्क्षत्वादिति चेन्न । तुल्यत्वात् । समानप्रत्ययोपात्तभावनाऽऽक्षिप्तान्वयोपपत्तौ बाधकं विना सन्निहित-त्यागे व्यवहितपरिग्रहस्य गुरुत्वात् । भावनायाश्च सामान्याक्षेपेऽपि साकाङ्क्षपरित्यागेन निराकाङ्क्षान्वयानुपपत्तेः । न ह्यन्यतराकाङ्क्षा अन्वय-हेतुः, अपि तूभयाकाङ्क्षा । प्रातिपदिकार्थो हि फलेनान्वयमलभमानः क्रियासम्बन्धमपेक्षते । भावनाऽपि व्यापारभूता सती व्यापारिणमित्यु-भयाकाङ्क्षा अन्वयहेतुः । कटं करोतीत्यादि तु कारकतयैव फलसमन्वितं न व्यापारान्तरमपेक्षते इति निराकाङ्क्षमिति ।

---

इत्यादिना क्रमेण गुणक्रियाद्रव्याणां निषेधः । तदनभिधानाविशेषेऽपि, तन्निषेधा-विशेषेऽपीत्यर्थः । **निराकाङ्क्षत्वादिति** । सकृदुक्तस्य नञ एकेनैवान्वये चरितार्थत-येति भावः । **तुल्यत्वादिति** । आख्यातार्थभावनाया अप्येकेनान्वये चरितार्थ-तया निराकाङ्क्षत्वादिति भावः । ननु व्यापाररूपा भावना सामान्यतो व्यापारिण-माक्षिपतीति तेनैवान्वेतुमर्हतीत्याशङ्क्य, तथापि साकाङ्क्षेणैवान्वेति, न तु निरा-काङ्क्षेण कर्मादिनेति समाधत्ते — **सामान्याक्षेपेऽपीति** । अन्वयहेतुभूतामुभया-काङ्क्षां दर्शयति – **प्रातिपदिकार्थोऽहीति । अत एवेति** । उभयाकाङ्क्षाया भावनान्वये हेतुत्वादेवेत्यर्थः । नन्वत्रापि भाव्याकाङ्क्षाऽस्तीत्याशङ्क्य, फलस्या-भाव्यत्वे धात्वर्थस्यैव फलत्वेन तेनान्वयो युक्तः । फलसम्बन्धिनः कर्मणो भाव्यत्वे, अत्र धातोरकर्मकत्वेन फलसम्बन्धित्वं कर्तुरेव वाच्यम् । तथा च चैत्रेणेति तृती-यया कर्तृतोपस्थितेर्न फलसम्बन्धित्वेनान्वयापेक्षेत्याह — **फलेनेत्यादिना** । नन्वाख्यातस्य कर्तृकर्मादीनामवाचकत्वे 'चैत्रस्तण्डुलं पचति' त्यादौ प्रयोगवैलक्षण्यं

अत एवास्यते सुप्यते इत्यादौ नाक्षिप्तेनान्वयः । न हि चैत्रेणेति तृतीयान्तशब्दस्य भावनायामाकाङ्क्षाऽस्ति । भाव्याकाङ्क्षाऽस्तीति चेन्न । फलेन शयनादिधात्वर्थेनान्वयात् । फलसंबन्धिनश्चात्र कर्त्रनतिरेकात् । न हि शयनादयो धात्वर्थाः कर्त्रतिरेकिसंबद्धाः । न च फलतत्संबन्धिव्यतिरेकेणान्यो भाव्यो नाम, यमपेक्षेत ।

स्यादेतत् । किमिति न प्रयुज्यते कटः करोति चैत्रमित्यादि, अभिहितानभिहितव्यवस्थाऽभावादिति चेन्न । चैत्रमिति प्रथमान्तस्यासाधुत्वात् द्वितीयान्तस्य तु कर्मवचनत्वेन तत्संबन्धाद्भाव्यानपेक्षणी भावना भावकमात्रमपेक्षेत । न च कटस्य चैत्रं प्रति भावकत्वं; विपर्ययात् । अनाप्तेन तु विवक्षायां प्रयुज्यत एव । प्रयुज्यतां तर्हि 'कटं करोति चैत्र' इत्यादि । न । नित्यसन्दिग्धत्वेन वाक्यार्थासमर्पकत्वात् । ततस्तदुपपत्तये विशेषस्य व्यञ्जनीयत्वात् । व्यज्यतां तर्हि तृतीयया चैत्रेणेति, एवं देवदत्तः क्रियते कटमिति व्यज्यतां द्वितीययेति चेन्न । अप्रयोगात् । न ह्यनाप्तेनाऽप्येवंप्रायाणि प्रयुज्यन्ते । लक्षणाविरोधेन कुत एतदेवेति चेत्; लोकस्यापर्यनुयोज्यत्वात् ।

न हि गार्गिकयेति पदं साध्विति श्लाघाऽभिधायिपदसन्निधिमनपेक्ष्य प्रयुज्यते । तस्य तदुपाधिनैव विहितत्वादिति चेत्, एतदेव कुतः ? । लोके तथैव प्रयोगदर्शनादिति चेत्; तुल्यम् । करोतीत्यादि कर्मविभक्तिसमभिव्याहारेणैव प्रयुज्यते, क्रियते इति कर्तृविभक्तिसमभि-

कुतो नेति शङ्कते—किमिति न प्रयुज्यत इति । असाधुत्वादिति । चैत्रशब्दस्य पुल्लिङ्गत्वेनेति भावः । द्वितीयान्तत्वे दोषमाह — द्वितीयान्तस्यत्विति । अयं भावः — चैत्रपदस्य द्वितीयान्तत्वे तेनैव कर्माकाङ्क्षाया निवृत्तिः स्यादिति तदपेक्षणी भावना कर्तारमेवापेक्षेत । न च कटस्य कर्तृत्वं सम्भवतीति । नित्यसन्दिग्धत्वेनेति । कर्तृकर्मभाव इति शेषः । अपर्यनुयोज्यत्वादिति । प्रामाणिकप्रयोगानुपजीव्यैव व्याकरणेन शब्दान्वाख्यानादिति भावः । प्रकृतिप्रत्ययविभाग इवाभिहितानभिहितत्वविभागोऽपि बालव्युत्पत्तिमात्रफलक एवेत्यमुमेव विशेषमा-

व्याहारेणैवेति किमत्र क्रियताम्। इममेव विशेषमुररीकृत्यानभिहिताधिकारानुशासनेन ह्येतावान् परामर्शः सर्वेषां हृदि पदमादधातीत्यभिधानानभिधानविभाग एव व्युत्पादनदशायां पेशल इति।

स्यादेतत्। भवतु सर्वाख्यातसाधारणी भावना। कालविशेषसंबन्धिनी सा लडाद्यर्थः, कालत्रयापरामृष्टा लिङर्थ इति चेन्न। यत्नपदेन समानार्थत्वप्रसङ्गात्। विषयोपरागानुपरागाभ्यां विशेष इति चेन्न। यागयत्न इत्यनेन पर्यायताऽऽपत्तेः। कर्तृसङ्ख्याऽभिधानानभिधानाभ्यां विशेष इति चेन्न। यागयत्नवानित्यनेन साम्यापत्तेः। इष्ट एवायमर्थ इति चेत्। न। इतो वत्सरशतेनाप्यप्रवृत्तेः। फलसमभिव्याहाराभावान्न प्रवर्तते इति चेन्न। स्वर्गकामो यागयत्नवानित्यतोऽप्यप्रवृत्तेः। तत् कस्य हेतोः?। न हि यत्नो यत्नस्य हेतुः, यत्नप्रतीतिर्वा यत्नस्य कारणं, अपि त्विच्छा। न च सोऽपि प्रतीता यत्नजननी येन सैव विध्यर्थ इत्यनुगम्यतां, अपि तु सत्तया। न च लिङः श्रुतिकाले सा सती। न च लिङेव तां जनयति। अर्थविशेषमप्रत्याययन्त्यास्तस्यास्तज्जनकत्वे व्युत्पत्तिग्रहणवैयर्थ्यात्। अनुपलब्धलिङश्चेच्छाऽनुत्पत्तिप्रसङ्गादिति। एतेन वृद्धव्यवहाराद्व्युत्पत्तिर्भवन्ती बालस्यात्मनि प्रवृत्तिहेतुर्योऽवगतस्तमेवाश्रयेत्, स्वयञ्च कुर्यामिति सङ्कल्पादेवायं

---

इत्य पाणिनिना व्युत्पादितोऽयं विषय इत्याह — **इममेवेति**। ननु भावनायाः सर्वाख्यातसाधारण्येऽपि वर्तमानत्वादिकालविशेषसम्बन्धिनी सा लडादिना बोध्यते। तादृशकालविशेषसम्बन्धनिरपेक्षा सा लिङर्थ इत्याशङ्क्य निराकरोति — **न, यत्नपदेनेति**। एवं कर्तृधर्मस्य यत्नस्य विधिप्रत्ययार्थत्वं निराकृत्याधुना इच्छाया अपि तन्निराकरोति — **न च साऽपीति**। प्रवृत्तिहेतुप्रतीतिविषयस्यैव विध्यर्थत्वादिति भावः। ननु लिङेवेच्छां जनयतीत्याशङ्क्य निराकरोति — **अर्थविशेषेति**। अर्थविशेषस्येच्छाविषयस्य ज्ञानमुत्पाद्यैव लिङिच्छां जनयति, नान्यथा। तथा सति व्युत्पन्नस्यैवाव्युत्पन्नस्यापि लिङ्श्रवणमात्रादिच्छोत्पत्तिप्रसङ्गादिति भावः। इच्छायत्नयोर्लिङर्थत्वनिराकरणेन सङ्कल्पस्यापि तदर्थत्वं निराकृतमित्याह — **एतेनेति**।

प्रवृत्तः, ततः स एव लिङर्थ इति निरस्तम् । कुर्यामिति प्रयत्नो वा स्यादिच्छा वा ? । नाद्यः, स्वात्मनि वृत्तिविरोधात् । न द्वितीयः, सा हि सत्त्वयैव प्रयत्नोत्पादिनी, न च लिङः श्रुतिकाले सा सतीत्युक्तम् । फलेच्छा तु निसर्गवाहितया सत्यपि न प्रयत्नं प्रति हेतुः । अन्यविषयत्वात् । तदर्थञ्च शास्त्रवैयर्थ्यात । तस्याः कारणान्तरत एव सिद्धेः । तत्प्रतीत्यर्थमपि शास्त्रानपेक्षणात् । तस्या मनोवेद्यत्वात् । प्राप्ते च शास्त्रानवकाशात् । तदभिधाने च स्वर्गकाम इति कर्तृविशेषणपौनरुक्त्यात् । तदा हि यजेतेत्यस्यैव यागकर्त्ता स्वर्गकाम इत्यर्थः स्यात् ।

यदि च फलविषयैव साधनविषयं प्रयत्नं जनयेत्; अन्यत्रापि प्रसुवीत, नियामकाभावात् । हेतुफलभाव एव नियामक इति चेन्न । अज्ञातस्य तस्य नियामकत्वे लिङं विनाऽपि स्वर्गेच्छातो यागे प्रवृत्तिप्रसङ्गात् । ज्ञातस्य तु तत्साधनत्वस्य नियामकत्वे तदिच्छैव तत्र प्रवर्त्तयतु । यो यत्कामयते स तत्साधनमपि कामयतएवेति नियमात् ! न च सा तदानीं सती । न च तज्ज्ञानमेव प्रयत्नजनकं, तच्च लिङा क्रियत इति युक्तम् । स्वर्गकामो यागचिकीर्षावानित्यतोऽपि प्रवृत्तिप्रसङ्गात् । लिङो वेच्छां प्रतीत्यनिच्छन्नपि सर्वः प्रवर्त्तेत । स्वसंबन्धितया तदवगतस्तथा, न तु सामान्यत इति चेन्न । प्रथमपुरुषेण तदभिधाने

---

**स्वात्मनीति** । यत्नस्य यत्नहेतुत्वे स्वस्मिन् स्वस्य हेतुत्वं विरुद्धमिति भावः । ननु लिङ्श्रवणकाले सुखेच्छा तावदस्ति । सा च प्रवृत्तिं प्रति हेतुश्च भवतीति सैव लिङर्थ इत्याशङ्क्य, अन्यविषयकेच्छा अन्यविषयकहेतुर्न भवतीति साधनविषयकयत्ने फलेच्छा न कारणमित्याह – **अन्यविषयत्वादिति** । **फलेच्छात्विति** । निसर्गवाहित्वं = स्वाभाविकत्वम् । किञ्च फलज्ञानादेव फलेच्छोत्पत्तेर्न तदुत्पत्त्यर्थं शास्त्रापेक्षा । नापि तज्ज्ञानार्थम्; ज्ञानसुखदुःखेच्छादीनां स्वत एव मानसिकप्रत्यक्षविषयत्वादित्याह – **शास्त्रवैयर्थ्यादिति** । ननु फलेच्छाया मनोग्राह्यत्वे का क्षतिरित्याशङ्क्य, प्रमाणान्तरप्राप्तेऽर्थे शास्त्रमनर्थकमित्याह– **प्राप्ते चेति** । किञ्च फलेच्छाया लिङर्थत्वे स्वर्गकामपदपौनरुक्त्यापत्तिरपीत्याह– **तदभिधानेचेति** ।

तस्याविध्यर्थत्वमसङ्गात्। ओदनकामस्त्वं पाकचिकीर्षावानित्यतोऽपि प्रवृत्त्यापत्तेश्च। अपि च। सङ्कल्पज्ञानात् यदि प्रयत्नो जायेत तथापि सङ्कल्पस्य कुतो जन्म किमर्थञ्च? सङ्कल्पज्ञानादेव. प्रयत्नार्थश्चेति चेत्; नन्विच्छाविशेषः सङ्कल्पः; स तावत् सुखे स्वभावतः, तत्साधने चौपाधिकः, सङ्कल्पविषयस्तु कथम्? तत्साधनत्वादेवेति चेत्; तर्हि तत्साधनत्वज्ञानात्, न तु सङ्कल्पस्वरूपज्ञानाद्भवितुमर्हतीति। अन्यथेष्टसाधनताज्ञानमप्यनर्थकमापद्येत। तस्मात्, सङ्कल्पः प्रवर्तक इत्यभ्युपेयते, किन्तु सत्तामात्रेण न तु ज्ञात इति नासौ विधिः। ज्ञानञ्च विषयोपहारेणैव व्यवहारयतीति तद्विषय एवावशिष्यते इति कर्तृधर्म्मव्युदासः।

---

कृतीच्छयोः समानविषयकत्वेन कार्यकारणभावानङ्गीकारे दोषमाह — अन्यत्रापीति। घटेच्छातः पटेऽपि प्रवृत्त्यापत्तिरिति भावः। हेतुफलभावस्याज्ञातस्य नियामकत्वे दोषमाह — लिङ्गं विनाऽपीति। असाधने भ्रमाधीनप्रवृत्त्यनुपपत्तिश्चेति द्रष्टव्यम्। ज्ञातस्यत्विति। तस्मिन् फलसाधनताज्ञानस्य प्रवृत्तिहेतुत्वापेक्षया तद्विषयकेच्छाया एव तद्धेतुत्वं युक्तमिति भावः। साधनेच्छाविषयकज्ञानस्य प्रवृत्तिजनकत्वं निराकरोति — न च तज्ज्ञानमेवेति। ननु स्वसम्बन्धिनीमिच्छामवगाहमानस्यैव ज्ञानस्य प्रवर्तकत्वमित्याशङ्क्य, तर्हि यजेतेत्यत्र प्रथमपुरुषेन स्वसम्बन्धाप्रत्ययाद्विधित्वं न स्यादित्याह — प्रथमपुरुषेनेति। सङ्कल्पज्ञानस्य प्रवृत्तिहेतुत्वं निराकरोति — अपि चेति। औपाधिक इति। सुखसाधनताज्ञानजन्य इत्यर्थः। सङ्कल्पविषयस्त्विति। सङ्कल्पस्य फलरूपत्वाभावात्, फलसाधनरूपत्वाभावाच्च कथं तज्ज्ञानं प्रवर्तकमिति भावः। अन्यथेति। भोजनादाविष्टसाधनताज्ञानस्य प्रवर्तकत्वं न स्यादिति भावः। सङ्कल्पस्याप्रवर्तकत्वेऽनुभवविरोधमाशङ्क्य परिहरति—तस्मादिति। इष्टसाधनताज्ञानमपि न विध्यर्थ इत्याह—ज्ञानं चेति। प्रवृत्तिहेतुज्ञानविषयस्यैव विधित्वादिष्टसाधनत्वमेव विधिप्रत्ययार्थः स्यादिति भावः। एवं कर्तृधर्मत्वं निराकृत्याधुना

अस्तु तर्हि कर्मधर्मः । नेत्युच्यते,

अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ।
तदलाभान्न कार्यश्च न क्रियाऽप्यप्रवृत्तितः ॥ १२ ॥

कर्म हि फलं वा स्यात्, तत्कारणमपूर्वं वा, तत्कारणं क्रिया वा? । न प्रथमः फलेच्छायाः, प्रवृत्तिं प्रत्यहेतुत्वात्, अतिप्रसङ्गादित्युक्तत्वात् । न द्वितीयोऽव्युत्पत्तेः । लिङो हि प्रवृत्तिनिमित्तमपूर्वत्वं वा स्यात्, कार्यत्वं वा स्यात्, उभयं वा? । न प्रथमः । शब्दप्रवृत्तिनिमित्तस्यापूर्वत्वस्य प्रमाणान्तरादवगतावपूर्वत्वव्याघातात् । अनवगतावव्युत्पत्तेः । संबन्धिनोऽनवगमे संबन्धस्य प्रत्येतुमशक्यत्वात् । तत एवावगतावितरेतराश्रयदोषात् । न च गन्धवत्त्वेनोपनीतायां पृथिव्यां पृथिवीशब्दवत् अपूर्वे प्रवर्त्तते लिङिति युक्तम् । तत्रोभयोरपि प्रतीयमानत्वेन सन्देहे कल्पनागौरवपुरस्कारेण पृथिवीत्व एव सङ्गतिविश्रान्तेरुपपत्तेः । न त्वत्रापूर्वत्वप्रतीतिः ।

---

कर्मधर्मत्वं निराकरोति – अतिप्रसङ्गादित्यादिना । अतिप्रसङ्गात्फलं न कर्मेति वक्तुं न शक्यते । अपूर्वत्वहानेरपूर्वमपि न कर्म भवितुमर्हति । मानान्तरासिद्धत्वात्कार्यमपि न कर्म । अप्रवृत्तिप्रसङ्गात्क्रियाऽपि न कर्मशब्दार्थ इति कारिकार्थः । अहेतुत्वादिति । स्वर्गेच्छायां सत्यामपि तत्साधनज्ञानं विना प्रवृत्त्यदर्शनादिति भावः । व्याघातादिति । अपूर्वस्य शब्दानुभवैकवेद्यत्वाङ्गीकारादिति भावः । सम्बन्धिन इति । शब्दार्थयोरनवगतौ तत्सम्बन्धस्य ज्ञातुमशक्यत्वादित्यर्थः । तत एवेति । लिङ्पदादेवेत्यर्थः । इतरेतरेति । लिङ्शक्तिग्रहादपूर्वोपस्थितिः । अपूर्वोपस्थितौ तत्र लिङ्शक्तिग्रह इति भावः । उभयोरपीति । पृथिवीत्वगन्धवत्त्वयोः प्रत्यक्षसिद्धत्वेन तत्र प्रवृत्तिनिमित्तत्वसन्देहे गन्धवत्त्वस्योपाधित्वेन गौरवात्पृथिवीत्वस्य जातित्वेन तत्रैव तत्कल्पनमिति भावः । ननु व्युत्पित्सुर्बालः वृद्धव्यवहारात् 'घटमानये'त्यादौ स्वप्रवृत्तिहेतुं कार्यत्वं लिङर्थमवधारयति । तच्च कार्यशक्तं लिङ्पदं 'स्वर्गकामो यजेत' त्यादौ, प्रमाणान्तरगोचरस्य यागादेः स्वर्गसाधनत्वाभावात्स्वर्गसाधनतायोग्यं तन्मध्यवर्तिकार्यत्वोपलक्षितमपूर्व-

स्यादेतत्। कार्यत्वमुपलक्षणीकृत्य तावदेषा लिङ् प्रवृत्ता। तदुपलक्षितश्च यागो वा यत्नो वाऽन्यो वा शब्देतरप्रमाणगोचरो नाधिकारिविशेषणस्वर्गसाधनसमर्थः। न चाकाम्यफले कामी नियोक्तुं शक्यते। ततोऽन्यदेवालौकिकं किञ्चिदनेनोपलक्ष्यते, यो लिङादिप्रवृत्तिगोचर इति किमनुपपन्नमिति चेत्; उपलक्षणं हि स्मरणमनुमानं वा। उभयमप्यनवगतसंबन्धेनाशक्यम्। न हि संस्कारवन्मनोवददृष्टवद्वा कार्यत्वमपूर्वत्वमुपलक्षयति, ज्ञानापेक्षणात्। ततो हस्तीव हस्तिपकं, धूम इव धूमध्वजं, तत्संबन्धज्ञानादुपलक्षयेत्, न त्वन्यथा।

तथाच न्यायसम्पादनाऽप्यरण्ये रुदितम्। न हि युक्तिसहस्रैरप्यविदिते सङ्गतिग्रहोऽविदितसङ्गतिर्वा शब्दः प्रवर्तते इति। एतेन भेदाग्रहात् क्रियाकार्ये व्युत्पत्तिरिति निरस्तम्। न ह्यज्ञाते भेदाग्रहो व्यवहाराङ्गम्, अतिप्रसङ्गात्। किञ्चापूर्वत्वे प्रवृत्तिनिमित्तत्वे कल्प्यमाने

---

त्वमवगमयतीत्याशङ्क्य, यथा गङ्गादिपदं स्वसम्बन्धितया प्रसिद्धं तीरं स्मारयति, यथा वा धूमो वह्निमनुमापयति, न तथा कार्यत्वं स्वसम्बन्धितया स्वव्यापकतया वाऽनवगतमपूर्वत्वं स्मारयितुमनुमापयितुं वा प्रभवतीति समाधत्ते — **स्यादेतदि**त्यादिना। **ज्ञानापेक्षणादि**ति। सम्बन्धितया व्याप्यतया वाऽनवगतस्य संस्कारादिस्मारकत्वं नास्तीति भावः। सर्वथाऽप्रतीतेऽपूर्वत्वे शक्तिग्रहासम्भवात् 'न चाकाम्यफले'त्यादिना न्यायनिरूपणमफलमेवेत्याह — **तथाचे**त्यादिना। ननु प्रतीतं कार्यत्वमेव लिङ्प्रवृत्तिनिमित्तम्। तस्य चापूर्वत्वस्य च भेदाग्रहाद्यजेतेत्यादावपूर्वत्वं लिङ्प्रवृत्तिनिमित्तमिति शङ्काऽपि निरस्तेत्याह — **एतेने**ति। 'इदं रजतमित्यादौ ज्ञातेनैवेदमा रजतभेदाग्रहस्य प्रवृत्त्यङ्गत्वादिति भावः। यजेतेत्यादावपूर्वत्वस्य लिङ्प्रवृत्तिनिमित्तत्वे पचेतेत्यादौ तदभावेन लिङो वैयर्थ्यं स्यात्। अत्र कार्यत्वस्य तथात्वे यजेतेत्यत्रापि तथैवास्त्वित्याह — **किञ्चे**ति। ननु मानान्तरप्रसिद्धं कार्यत्वमेव लिङः प्रवृत्तिनिमित्तमस्तु, किञ्च शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वमेव, न तु समानविषयकत्वमपि। तथाच यजेतेत्यत्र लिङा कार्यत्वेन रूपेण लौकिकघटादिव्यावृत्त्या स्वर्गसाधनमलौकिकमपूर्वमेव

लौकिकी लिङनर्थिका प्रसज्येत। तत्रोपलक्षणीयाभावात्। तत्र कार्यत्वमेव प्रवृत्तिनिमित्तमिति यदि, प्रकृतेऽपि तथैवास्तु क्लृप्तत्वात् सम्भवाच्चेति। अस्तु तर्हि तदेव प्रवृत्तिनिमित्तं, तर्कसम्पादनयात्वपूर्वव्यक्तिलाभ इति चेन्न। नित्यनिषेधापूर्वयोरलाभप्रसङ्गात्। न चास्मिन् पक्षे एकत्र निर्णीतेन शास्त्रार्थेनान्यत्र तथैव व्यवहार इति सम्भवति। कार्यत्वस्यैव प्रवृत्तिनिमित्तत्वेन निर्णीतत्वात्, न त्वपूर्वत्वस्य। न्यायसम्पादनायाश्च तत्रासम्भवात्। फलानुगुण्येन हि व्यक्तिविशेषो लभ्यते। न च तत् तत्र श्रूयते। न चाश्रुतमपि कल्पयितुं शक्यते। बीजाभावात्।

तद्धि विध्यन्यथाऽनुपपत्त्या कल्प्येत, कार्यत्वप्रत्ययान्यथाऽनुपपत्त्या वा, लोकवत्। न प्रथमः। भवतां दर्शने तस्योपेयरूपत्वात्। यतः श्रुतस्वर्गफलत्वेऽपि साध्यविवृद्धिरुच्यते। न द्वितीयः

---

बोध्यते। 'कार्यशक्ता लिङि'ति शक्तिग्रहः। कार्यत्वेन घटादिरूपस्य यत्किञ्चित्कार्यस्योपस्थितिः। यागादिविषयकं कार्यमिति कार्यत्वेनापूर्वस्य बोधश्चेति शङ्कते — अस्तु तर्हीति। नित्यनिषेधेति। 'अहरहः सन्ध्यामुपासीते'ति नित्यानां, 'न कलञ्जमि'त्यादिनिषेधानाञ्चापूर्वाभावेन विधिप्रत्ययानुपपत्तिरिति भावः। न चास्मिन् पक्ष इति। अयं भावः — यजेतेत्यादौ स्वर्गरूपफलसम्भवेन तत्साधनतायोग्यस्यापूर्वस्य क्रियादिव्यावृत्त्या कार्यत्वेन विधिप्रत्ययेन बोधसम्भवेऽपि नित्यनिषेधस्थले तादृशफलाभावेन कार्यत्वेनापूर्वबोधो न सम्भवति। किन्तु तत्र क्रियाया एव बोधो वक्तव्यः। तथाच तत्र लिङः कार्यत्वेनापूर्वबोधकत्वं न सम्भवतीति विश्वजिन्न्यायेन नित्येष्वपि फलं कल्प्यत इत्याशङ्क्य निषेधति — तद्धीति। तत् = फलम्। लोकवदिति। यथा लोके पाकादाविष्टसाधनत्वेन लिङ्गेन कार्यत्वानुमाने फलप्रतीत्यनन्तरमेव कार्यत्वप्रतीतिस्तथा वेदेऽपीति भावः। उपेयरूपत्वादिति। अनन्योद्देशकृतिव्याप्यत्वादित्यर्थः। तथाच फलजनकत्वाभावेऽपि फलस्येवापूर्वस्यापि काम्यतया न फलकल्पकत्वमिति भावः। यत इति। यत्रापि स्वर्गः फलं श्रूयते तत्राप्यपूर्वस्यैवोद्देश्यतया प्राधान्यात्

शब्दबलेन तत्प्रत्यये तदनपेक्षणात्। लोके हि तत्प्रत्यय इष्टाभ्युपायत्वा-ऽधीनो न तु वेदे इत्यभ्युपगमात्। अन्यथेष्टाभ्युपायतैव प्रथमं वेदा-दवगन्तव्या। प्रमाणान्तराभावात्। ततः कार्यतेत्यानुमानिको विधिः स्यात्, न शाब्दः। आनुमानिकं फलमस्तु, यत्कर्तव्यं तदिष्टाभ्युपाय-इति व्याप्तेरित्यपि न युक्तम्। सुखेन व्यभिचारात्। अन्यत्वे सतीति चेन्न। दुःखाभावेन व्यभिचारात्। फलं विहायेति चेत्; तदेव किमुक्तं स्यात्। इष्टं स्वभावत इति चेत्; तर्हि ततोऽन्यदनिष्टं स्यात्, तच्च कर्तव्यमिति व्याघातः। तत्साधनमिति चेत्; तत्साधनत्वे सतीति साध्याविशिष्टं विशेषणम्। स्वभावतो नेदमिष्टं कर्तव्यञ्च, ततो नूनमिष्ट-साधनमिति साधनार्थ इति चेन्न। स्वभावतो नेदमिष्टमित्यसिद्धेः।

---

फलत्वं, न स्वर्गादिपर्यन्तं व्याप्नोतीति भवद्भिरभिधानादिति भावः। **शब्दबले-नेति**। यत्र कार्यताप्रतीतिर्लैङ्गिकी तत्रेष्टसाधनत्वं लिङ्गत्वेनापेक्षितम्। यत्र लिङादिशब्दबलेन तत्प्रत्ययस्तत्रेष्टसाधनत्वं नापेक्षितम्। यदि च तत्रापीष्टसाध-नत्वमेवापेक्षितं तदा लोकवल्लिङ्गादेव कार्यत्वप्रतीतिरित्यादौ वेदादिष्टसाधनत्व-प्रतीतिः। अनन्तरं कार्यत्वस्येति न विधेः कार्यताबोधकत्वमिति भावः। नन्वनु-मानेन नित्येष्वपि फलं सिद्ध्यति। तदन्यथाऽनुपपत्त्या तत्रापूर्वसिद्धौ न लिङा-नर्थक्यमिति शङ्कते – **आनुमानिकमिति**। अयं भावः – नित्यमिष्टसाधनं, कर्तव्यत्वादित्यनुमानेनेष्टसिद्धौ तच्चेष्टमपूर्वरूपं पक्षीकृत्य, अपूर्वमिष्टसाधनमिच्छा-विषयत्वादित्यनुमानेन फलसिद्धिरिति। द्वितीयानुमाने सुखेन दुःखाभावेन च व्यभिचारमाह – **दुःखाभावेनेति**। फलान्यत्वे सतीत्युक्तौ फलमेवेष्टमिति कथं सिद्धमित्याशङ्क्य, स्वभावादिति चेत्तर्हि फलान्यदनिष्टमिति व्याघातमाह – **तच्च कर्तव्यमितीति**। इष्टसाधनत्वे सतीच्छाविषयत्वं हेतुरिति न व्यभि-चार इति चेत्साध्याविशिष्टो हेतुरित्याह – **साध्याविशिष्टं विशेषण-मिति**। ननु सोपाधिकेच्छाविषयत्वमेव हेतुरित्याशङ्क्य, भवन्मतेऽपूर्वस्यापि निरुपाधिकेच्छाविषयत्वेन पक्षेऽसिद्धो हेतुरित्याह – **स्वभावतो नेदमिति**।

अनन्योद्देशप्रवृत्तकृतिव्याप्यत्वात् । अन्यथा तदसिद्धेः । ततो व्याघातादन्यतरापाय इति ।

अस्तु नित्यनिषेधापूर्वयोरलाभः, किं नश्छिन्नमिति चेत्; किं नश्छिन्नं, यदा कामाधिकारेऽपि तदलाभः। न हि लिङा कार्यं स्वर्गसाधनमुक्तम् । नापि स्वर्गकामपदसमभिव्याहारान्यथाऽनुपपत्त्या तल्लब्धं, ब्राह्मणत्वादिवदधिकार्यवच्छेदमात्रेणैवोपपत्तेः । न चेदमनुमानं; यस्य यदिच्छातो यत्कर्तव्यं, तत्तस्येष्टसाधनमिति । अन्येच्छया स्वाभाविककर्तव्यत्वासिद्धेः । तदिच्छयैव तत्कर्तव्यतायाः सुखेनानैकान्तिकत्वात्। औपाधिककर्तव्यतायाश्चेष्टसाधनत्वमप्रतीत्य प्रत्येतुमशक्यत्वात्।

किमनया विशेषचिन्तया । प्रतीयते तावच्छब्दादन्यदिच्छतोऽन्यत्कार्यमित्येतावतैवानुमानमिति चेत् । नन्वन्वितमभिधानीयं, योग्यश्चान्वीयते । अन्यदिच्छतश्चान्यत् कर्तव्यमन्वयायोग्यं, तत्कथमभिधीयताम् । तत एव तत्साधनत्वसिद्धिरिति चेत् । एवं तर्हीष्टसाधनतैका-

---

असिद्धिमेवाह—अन्यथेति । अयं भावः—अपूर्वस्येष्टसाधनत्वे अनन्योद्देशप्रवृत्तकृतिव्याप्यत्वरूपस्य स्वभावत इष्टत्वस्य भङ्गः । तथात्वे वा नेष्टसाधनत्वसिद्धिरिति । किञ्च फलसत्त्वे तदर्थमपूर्वाङ्गीकारः । अपूर्वसिद्धौ तेन नित्येषु फलसिद्धिरिति परस्पराश्रयत्वमप्यपरिहार्यं स्यादिति । ननु नित्यनिषेधयोरपूर्वं मास्त्वित्याशङ्क्य, 'स्वर्गकामो यजेत' इत्यत्रापि तन्न स्यादित्याह—तदलाभ इति । अयं भावः—किं लिङ् स्वातन्त्र्येणापूर्वं बोधयति, उत स्वर्गकामादिपदसहकारेण? । स्वातन्त्र्येण तथात्वे लौकिकलिङो वैयर्थ्यापत्तिः । कामादिपदस्य ब्राह्मणत्वादिवदधिकारिविशेषणत्वात् तत्सहकारेणापि न तस्य तद्बोधकत्वमिति । अन्येच्छाधीनेच्छाविषयत्वहेतुना इष्टसाधने पूर्वोक्तस्वाभाविकेष्टत्वस्य भङ्गः । निरुपाधिकेच्छाविषयत्वं सुखे व्यभिचारीति ।

ननु 'यजेत स्वर्गकाम' इत्यादौ स्वर्गेच्छोर्यागकर्तव्यता प्रतीयत इति सोपाधिकत्वनिरुपाधिकत्वचिन्तामपहाय पूर्वोक्तेनैवानुमानेनापूर्वसिद्धिरित्याशङ्क्य लिङः इष्टसाधनत्वसमानाधिकरणककर्तव्यतार्थकत्वेनैवेष्टसाधनत्वसिद्धेर्नानुमानेनापूर्वसिद्धिरित्याह—एवं तर्हीति । किञ्च नानुमानेनेष्टसाधनत्वसिद्धिः । फलकामनाया ब्राह्म-

र्थसमवायिकर्तव्यत्वाभिधानादनुमानानवकाशः। न चान्विताभिधानेऽपि तत्साधनत्वसिद्धिः। अधिकार्यवच्छेदमात्रेणाप्यन्वययोग्यतोपपत्तेः।

न च कार्यत्वमपूर्वे सम्भवति। तद्धि कृतिव्याप्यता चेत्, व्रीह्यादिष्वेव। सिद्धत्वात्। कृतिफलत्वं चेत्; यागस्यैव। ततस्तस्यैवाहत्योत्पत्तेः। कृत्युद्देश्यता चेत्; स्वर्गस्यैव। निसर्गसुन्दरत्वात्। न त्वपूर्वस्य। तद्विपरीतत्वात्। स्तनपानादिवदौपाधीकीति चेत्। साऽपि यागस्यैव। स्वर्गस्य साध्यत्वस्थितौ यागस्यैव साधनत्वेनान्वयात्।

कालव्यवधानान्नैतन्निर्वहतीति चेत्; यथा निर्वहति, श्रुतानुरोधेन तथा कल्प्यताम्। व्यापारद्वारा कथञ्चित् स्यात्। न तु भिन्नकालयोर्व्यापारव्यापारिभावः। कारणत्वञ्च व्यापारेण युज्यते। अव्यवधानेन पूर्वकालनियमश्च तत्त्वम्। अन्यथाऽतिप्रसङ्गादिति चेन्न। पूर्वभावनियममात्रस्य कारणत्वात्। कार्यानुगुणावान्तरकार्यस्यैव व्यापारत्वात्। कृषिचिकित्सादौ बहुलं तथा व्यवहारात्। लाक्षणिकोऽसाविति चेत्। न। मुख्यार्थत्वे विरोधाभावात्।

अस्तु तर्हि पुत्रेण हते ब्रह्मणि चिरध्वस्तस्य पितुस्तमवान्तरव्यापारीकृत्य कर्तृत्वम्। तथाच लोकयात्राविप्लव इति चेत्। न। सत्यपि सुते कदाचित्तदकरणात्। तस्मिन्नसत्यपि कदाचित् करणादनिर्वाहकतया तस्य व्यापारत्वायोगात्। यं जनयित्वैव हि यं प्रति यस्य पूर्वभावानिर्वाहः, स एव तं प्रति तस्य व्यापारो नापरः। यथाऽनुभवस्य स्मरणं प्रति संस्कारः। तस्य ह्यन्वयव्यतिरेकानुविधाने सिद्धे तदन्यथाऽनुपपत्त्या संस्कारः कल्प्यते, न त्वन्यथा। तथेहापि। न

---

णत्वस्यैवाधिकारिविशेषणतयाऽप्यन्वयोपपत्तिरित्याह — न चाऽन्विताभिधानेऽपीति। कृतीति। यथाऽऽधुनिकभूकर्षणस्य पाकजपरम्पराव्यापारेण भाविसस्यहेतुत्वं, यथा कषायपानस्य धातुसाम्यद्वारा भाविज्वरशान्तिहेतुत्वमिति भावः।

चेदेवं, तथापि अक्षभिदुरशरावेमोकसमसमयहतस्य हन्तृत्वं न स्यात्। स्याच्च स्वनिवेशनशमानस्य तत्पितुरिति। एतेनोभयं वेति निरस्तम्।

अस्तु तर्हि क्रियाधर्म्म एव कार्यत्वं विधिः। सर्वो हि कर्तव्यमेतदिति प्रत्येति। ततः कुर्यामिति सङ्कल्प्य प्रवर्तते इति चेन्न। कर्तव्यं मयेति कृत्यध्यवसायार्थो वा स्यात्, कर्तव्यं मयेत्युचितार्थो वा स्यात्? तत्र प्रथमः सङ्कल्पान्न भिद्यते। व्यवहितकार्ये सङ्कल्पो हि कर्तव्यो मयेति, सन्निहितकार्येसङ्कल्पस्तु कुर्यामिति। स च न लिङर्थः। सत्तामात्रेण प्रवर्तनादित्युक्तम्। तदेतत् कर्तव्यतायां जातायां प्रवर्तते इति वस्तुस्थितौ भ्रान्तैर्ज्ञातायामिति गृहीतम्। औचित्यन्तु क्रियाधर्म्मः प्रागभाववत्त्वं, तस्मिन् सति शक्यत्वं वा, तस्मिन् सति कर्तारं प्रत्युपकारकत्वं वा? प्रथमे कुतश्चिदपि न निवर्त्तेत। द्वितीये दुःखेऽपि तथाविधे प्रवर्त्तेत। तृतीये तु वक्ष्यते। अस्तु तर्हि कारणधर्म्मः। न। करणं हि शब्दः, तद्धर्म्मोऽभिधा वा स्यात्, तदर्थो भावनादिर्वा, तद्धर्म्म इष्टसाधनता वा? न प्रथमः।

**असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी।**
**बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः॥ १३॥**

---

कार्यसमानकालिकस्यैव कारणत्वमित्यङ्गीकारे को दोष इत्यत आह—**अक्ष-भिदुरेति**। उभयं, कार्यत्वमपूर्वत्वञ्चेत्यर्थः। क्रियाधर्मः कार्यत्वं विधिप्रत्ययार्थ इत्याशङ्कय निराकरोति—**अस्तु तर्हीति**। **शक्यत्वं वेति**। कृतिसाध्यत्वमित्यर्थः। अधुना करणधर्मत्वं निराचिकीर्षुर्विकल्पयति—**करणं हीति**। शब्दस्य करणत्वे अभिधायास्तद्धर्मत्वम्। अर्थस्य भावरूपस्य करणत्वे इष्टसाधनत्वं तद्धर्म इति। निराकरोति—**न प्रथम इति**। पराभिमताभिधाया असत्त्वात्तत्सत्त्वेऽपि लिङ्-पदातिरिक्तपदेन तत्प्रतीतावप्रवृत्तेश्च। पक्षान्तरेष्विवाभिधापक्षेऽपि बाधकसत्त्वान्न

सङ्गतिप्रतिसन्धानाधिकायां तस्यां प्रमाणाभावात् । अन्यसमवेतस्यापूर्ववदन्यव्यापारत्वेनाप्युपपत्तेः । विषयतयाऽपि च स्वव्यापारं प्रति लिङ्गवद्धेतुभावाविरोधात् । अधिकत्वेऽपि ततोऽप्रवृत्तेः । बालानां तदभावेऽपि तद्भावात् । शब्दान्तरेण तत्प्राविणाप्यप्रवृत्तेः ।

न च विलक्षणैव सा लिङो विषयः । तद्वैलक्षण्यं प्रतिपाद्यं प्रति चेत्; अर्थविशेषोऽपि स्यात् । प्रवृत्तिमात्रं प्रति चेत्; अभिधासमवेतं तदिति कुतः? । तत्सन्निधानादिति चेन्न । अनियमात् । अन्यस्य सर्वस्य निषेधादिति चेन्न । प्रवृत्तिहेतुत्वनिषेधस्य तुल्यत्वात् । तत्सन्निधिनिषेधस्य चाशक्यत्वात् । शब्दैकवेद्यत्वे चाव्युत्पत्तेः ।

प्रवृत्त्यन्यथाऽनुपपत्तिसिद्धे व्युत्पत्तिरित्यपि वार्त्तम् । न हि प्रवृत्ति-

---

पारिशेष्यादपि नाऽभिधा लिङर्थ इति कारिकार्थः । **सङ्गतिप्रतिसन्धानेति** । अनुपूर्वीविशेषविशिष्टा पदमूला सङ्गतिः । तस्याः प्रतिसन्धानं स्मृतिरित्यर्थः । नन्वात्मधर्मस्य स्मरणस्य शब्देनाऽजन्यस्य कथं शब्दव्यापारत्वमित्याशङ्क्य, भवन्मते आत्मसमवेतस्यापूर्वस्य यागव्यापारत्ववत्, लिङ्गपरामर्शे लिङ्गस्येव विषयतया शब्दस्य स्मृतिजनकत्वाच्च स्मृतेः शब्दव्यापारत्वं सिद्ध्यतीत्याह—**अन्यसमवेतस्यापीति** । तदभावे = अभिधाऽभावे । तद्भावात्, प्रवृत्तिभावादित्यर्थः । अन्वयव्यभिचारमाह — **शब्दान्तरेणेति** । अभिधाशब्देनेत्यर्थः । ननु लिङादिश्रवणादेव प्रवृत्तिदर्शनाल्लिङा विलक्षणाभिधाप्रतीतिर्जायत इत्याशङ्क्य, प्रतीतिवैलक्षण्यमर्थवैलक्षण्यं विना दुरुपपादम् । सन्निधानादभिधायास्तद्वैलक्षण्यमित्यपि न शक्यते वक्तुम् । बोद्धसान्निध्यस्य धात्वर्थादिसाधारण्यादित्याह — **न च विलक्षणैवेत्यादिना** । अन्यस्य प्रवृत्तिहेतुत्वनिषेधाद्भावनायाः प्रवर्तकत्वसिद्धिर्न भवतीत्याह — **तुल्यत्वादिति** । विधिसान्निध्यनिषेधस्तु यथा भावनायामशक्यः, एवं धात्वर्थादावपीत्याह — **तत्सन्निधीति** । ननु लिङादिभिरेव विलक्षणाभिधाज्ञानं, ततश्च प्रवृत्तिरित्याशङ्क्य; मानान्तरागोचरायां तस्यां लिङः शक्तिरेव नास्तीत्याह — **शब्दैकेति** । प्रवृत्त्यन्यथाऽनुपपत्त्या तद्धेतुसिद्धावपि तस्य न प्रवर्तकत्वमित्याह — **न हि प्रवृत्तीति** ।

हेतुः कश्चिदस्तीति प्रवर्तते । इष्टसाधनता तु स्यात् । सर्वो हि मया क्रियमाणमेतन्मतं समीहितं साधयिष्यतीति प्रतिसन्धत्ते, तत इच्छति कुर्यामिति, ततः करोतीति सर्वानुभवसिद्धम् ।

तदयं व्युत्पित्सुर्यज्ज्ञानात् प्रयत्नजननीमिच्छामवाप्तवान्, तज्ज्ञानमेव लिङ्श्राविणः प्रवृत्तिकारणमनुमिनोति । ततश्च कर्तव्यतैकार्थसमवायिनी इष्टसाधनता लिङर्थ इत्यवधारयति। न च वाच्यमेवञ्चेत्; वरं कर्तव्यतैवास्तु, अवश्याभ्युपगमनीयत्वात्; कृतमिष्टसाधनतयेति। यथा हि नेष्टसाधनतामात्रं प्रतीत्य प्रवर्तते, असाध्येषु व्यभिचारात्। तथा प्रयत्नविषयसमवायिनीमिष्टसाधनतामधिगम्याधिकारी प्रवर्तते-इत्यनुभवः । तत्र विषयो धातुना भावनाऽऽख्यातमात्रेण, शेषन्तु तद्विशेषेण लिङा इत्येवमिष्टाभ्युपायतायामधिगतायामन्वयबलात् तद्विषयस्येष्टसाधनत्वावगतिरिति कर्तव्यतैकार्थसमवायिनीष्टाभ्युपायता लिङः प्रवृत्तिनिमित्तमित्युक्तम् ।

करणस्येष्टसाधनताऽभिधाने ज्योतिष्टोमेनेति तृतीयया न भवितव्यमिति तु देश्यमवैयाकरणस्यावधीरणीयमेव । तत्सङ्ख्याऽभिधानं हि तदभिधानमाख्यातेन । न च तत् प्रकृते । न च यागेष्टसाधनताऽभिधानं लिङा, किन्त्वन्वयबलात्तल्लाभ इत्युक्तम् ।

---

द्वितीयपक्षमाह — **इष्टसाधनेति** । करणधर्मो विधिः स्यादित्यर्थः । तदेवोपपादयति — **सर्वो हीत्यादिना** । नन्विष्टसाधनत्वस्य लिङर्थत्वे 'ज्योतिष्टोमेन यजेते' त्यत्र तृतीया न स्यात्, करणत्वस्य लिङाऽभिधानादित्याशङ्क्य, करणगतसंख्याया अनभिधानात्तृतीया भवत्येवेत्याह — **तत्संख्याभिधानं हीति** । किञ्च यागनिष्ठमिष्टसाधनत्वं न लिङर्थः किन्त्विष्टसाधनत्वमात्रमित्यपि न तृतीयानुपपत्तिरित्याह— **न च यागेति** । नन्विष्टसाधनताज्ञानादपि न प्रवृत्तिः । 'यागः स्वर्गसाधनमि' ति विधिप्रत्ययरहितात् सिद्धार्थबोधकात् प्रवृत्त्यदर्शनात् । तथाचेष्टसाधनत्वमपि न विध्यर्थ इत्याशङ्क्य, उत्कटफलेच्छासत्त्वे समर्थस्य पुंसस्तादृशसिद्धार्थबोधकादपि

यत्तु सिद्धोपदेशादपि प्रतीयते इष्टसाधनता, न चातः सङ्कल्पात्मा प्रवृत्तिरस्तीति देश्यम् । तत्र समुत्कटफलाभिलाषस्य समर्थस्य तत्साधनताऽवगमेऽपि न प्रवृत्तिरिति कः प्रतीयात् । सर्वपक्षसमानश्चैतत् समानपरीहारश्चेति किं तेन । अत्राभिधीयते । अस्तु प्रयत्नविषयसमवायिनीष्टसाधनता प्रवृत्तिहेतुः, तथापि नासौ लिङर्थः, सन्देहात् । सा हि किं साक्षादेव लिङाऽवगम्यते, स्तनपानादावनुमानादिव बालेन; किं वा तत्प्रतिपादितात् कुतश्चिदर्थादनुमीयते, चेष्टाविशेषानुमितादिवाभिप्रायविशेषात् समयाभिज्ञेनेति सन्दिह्यते । एवञ्च सति सा नाभिधीयते इत्येव निर्णयः ।

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १४ ॥

तथाहि । अग्निकामो दारुणी मथ्नीयादिति श्रुत्वा कुत इत्युक्ते वक्तारो वदन्ति, यतस्तन्मन्थनादग्निरस्य सिध्यतीति । 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादाविष्टाभ्युपायतायामेवावगतायामनुमिमते तान्त्रिकाः, यदश्वमेधेन यजेत मृत्युब्रह्महत्यातरणकाम इत्यादिविधिम् । निन्दया च निषेधम् । तद्यथा –

---

प्रवृत्तिर्भवत्येवेति सामाधत्ते — यत्तु सिद्धोपदेशादित्यादिना । एवमिष्टसाधनताया लिङर्थत्वपक्षमुपन्यस्य निराकरोति– अस्त्वित्यादिना । स्तनपानादाविति । यथा स्तनपानादेरिष्टसाधनत्वं साक्षादेव पानादवगम्यत इत्यर्थः । तत्प्रतिपादितादिति । लिङ्प्रतिपादितादित्यर्थः । इष्टसाधनता न लिङा अभिधीयते । किन्त्वाप्ताभिप्रायविषयत्वेनानुमीयत इत्युपपादयति – हेतुत्वादित्यादिना । क्वचिद्धेतुत्वप्रतिपादकशब्देन विवरणात्, क्वचिद्विधेरनुमानान्मध्यमोत्तमपुरुषलिङः इष्टसाधनत्वार्थकत्वाभावादाज्ञाध्येषणादौ लिङः इच्छाविशेषार्थकत्वस्य क्लृप्तत्वात्, 'न हन्यादि' त्यादि निषेधानुपपत्तेश्च नेष्टसाधनत्वं विध्यर्थ इति कारिकार्थं क्रमेण व्याकरोति — तथा हीत्यादिना । लिङा इष्टसाधनत्वाभिधाने यतः इति हेतूपन्यासो निरर्थक इति भावः । अनुमिमते तान्त्रिका इति । लिङ

अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' —

इत्यतो नात्मानं हन्यादिति। कुर्याः कुर्यामित्यत्र विधिविरहितैव लिङ् नेष्टाभ्युपायतामाह, किन्तु वक्तृसङ्कल्पम्। न हीष्टाभ्युपायो ममायमिति कुर्यामिति पदार्थः, किन्तु तत्प्रतिपत्तेरनन्तरं योऽस्य सङ्कल्पः — कुर्यामिति, स एव। सर्वत्र चान्यत्र वक्तुरेवेच्छाऽभिधीयते लिङेत्यवधृतम्। तथाह्याज्ञाऽध्येषणाऽनुज्ञासंप्रश्नप्रार्थनाऽऽशंसालिङि नान्यच्चकास्ति। यां वक्तुरिच्छामननुविदधानस्तत्क्षोभाद्बिभेति, सा अध्येषणा। वारणाभावव्यञ्जिका अनुज्ञा। अभिधानप्रयोजना संप्रश्नः। लाभेच्छा प्रार्थना। शुभाशंसनमाशीरिति।

न च विधिविकल्पेषु निषेध उपपद्यते। तथाहि। यदाऽभिधा विधिः, तदा न हन्यात् हननभावना नाभिधीयते इति वाक्यार्थो व्याघातान्निरस्तः। यदा कालत्रयापरामृष्टा भावना, तदा नेति संबन्धाऽत्यन्ताभावो मिथ्या। यदा कार्यं, तदा न हन्यात् न हननं कार्यमित्यनुभवविरुद्धम्। क्रियत एव यतः। न हननेन कार्यं हननकारणकं कार्यं नास्तीत्यर्थ इत्यपि नास्ति। दुःखनिवृत्तिसुखाप्त्योरन्यतरस्य तत्र सद्भावात्। हननकारणकमदृष्टं नास्तीत्यर्थ इति तु निरातङ्कं दृष्टार्थिनं प्रवर्तयेदेवेति साधु शास्त्रार्थः। अहननेनापूर्वं भावयेदिति त्वशक्यम्। कारणस्यानादित्वेन कार्यस्यापि तथाभावप्रसङ्गात्। भावनायाश्च

---

इष्टसाधनत्वाभिधाने तदनुमानं व्यर्थमिति भावः। निषेधानुपपत्तेत इति कारिकाभागं व्याकरोति — न च विधीति। व्याघातादिति। हन्यादिति पदं भावनाविधिवादिनां हननभावनाऽभिधायकमेवेति तन्निषेधे व्याघात इति भावः। कालत्रयापरामृष्टा भावना विधिरिति पक्षेऽपि भावनायाः कदाचित्सत्त्वादत्यन्ताभावो न सम्भवतीत्यर्थः। कार्यं विधिरिति पक्षेऽपि हनने कृतिसाध्यत्वरूपस्य कृत्युद्देश्यत्वरूपस्य वा कार्यत्वस्य सत्त्वात्तन्निषेधो बाधित इति भावः। कारणस्य,

तदविषयत्वात् । अहननसङ्कल्पनात यावज्जीवमवाञ्छितसङ्कल्पः स्यात्। सकृत् कृत्वैव वा निवृत्तिः। पश्चाद्धन्यादेवाविरोधात्। सम्पादितोऽनेन नियोगार्थः। यावद् यावद्धननसङ्कल्पवान तावत्तावद्विपरीतसङ्कल्पेनापूर्वं भावयेदिति वाक्यार्थः, तथाभूतस्याधिकारित्वादित्यपि वार्त्तम्। तदश्रुतेः। प्रसक्तं हि प्रतिषिध्यते नाप्रसक्तमिति चेत्; न वै किञ्चिदिह प्रतिषिध्यते। तदभावः प्रतिपाद्यते इति निषेधार्थः। (अ) हननकरणकमपूर्वं वाक्यार्थः।

किञ्च न हन्यादिति अहननेनापूर्वस्य कर्तव्यताप्रत्ययो जातो वेदात्। जातश्च हननक्रियायां रागात्। निष्फलाच्च कार्यादपेक्षितफलं गरीय इति न्यायेन हन्यादेवेत्यहो वेदव्याख्याकौशलमास्तिक्याभिमानिनो मीमांसकदुर्दुरूढस्य। इष्टसाधनतापक्षेऽपि न हन्यात् न हननभावना इष्टाभ्युपाय इति वाक्यार्थः। तथाचानिष्टसाधनत्वं कुतो लभ्यते। न-हीष्टसाधने यन्न भवति तदवश्यमनिष्टसाधनं दृष्टमुपेक्षणीयस्यापि भावात्। यत् रागादिप्रसक्तं प्रतिषिध्यते तदवश्यमनिष्टसाधनं दृष्टम्। यथा सविषमन्नं न भुञ्जीथा इति। तेन वेदेऽप्यनुमास्यते इत्यपि न साधीयः। प्रतिषेधार्थस्यैव चिन्त्यमानत्वात्।

न हि कर्तव्यत्वस्येष्टसाधनत्वस्य भावनाया वा अभावः प्रतिपादयितुं शक्यते। लौकिकानां लौकिकप्रमाणसिद्धत्वात्। तथापि

---

हननप्रागभावस्येत्यर्थः। तदविषयत्वादिति। प्रागभावस्य भावनाऽविषयत्वादित्यर्थः। प्रागभावस्वरूपस्य भावनासाध्यत्वाभावादिति भावः। सङ्कल्पविधिपक्षे दोषमाह — अहननसङ्कल्पेति। तथाभूतस्येति। प्रवृत्तस्यैव निषेधापूर्वे अधिकारित्वादित्यर्थः। तदश्रुतेरिति। हननसङ्कल्पवतो विपरीतसङ्कल्पकत्वाश्रवणादित्यर्थः। ननु निषेधसामर्थ्यादेव तल्लाभ इत्याशङ्क्य, भवन्मते अहननसङ्कल्पकरणकापूर्वस्य विधिरेवायमित्याह — प्रसक्तं हीत्यादिना। इष्टसाधनत्वस्य विधित्वेऽप्यनुपपत्तिमाह — इष्टसाधनतापक्षेऽपीति। प्रतिपादयितुं शक्यत इति। कलञ्जभक्षणभावनायामिष्टसाधनत्वस्य सत्त्वादिति भावः। इष्टसाधनत्वेऽपि निषेध-

प्रतिपाद्यते तावदिति चेन्न । पाषण्डागमनिषेधेनानैकान्तात् । नासौ प्रमाणमिति चेन्न । अर्थविपर्ययप्रतिपादनाविशेषेऽस्यापि तथाभावात् । तात्पर्यतः प्रामाण्यमिति चेन्न । विधिनिषेधयोरनन्यपरत्वात् । 'न विधौ परः शब्दार्थ' इति वचनात् । तथापि निषेधे तथा भविष्यतीति चेन्न । अविनाभावतदुद्देशप्रवृत्त्योरभावात् । नाप्यसुराविघ्नादिवदस्य नञो विरोधिवचनत्वम् । क्रियासङ्गतत्वात् । असमस्तत्वाच्च । तस्माद्,

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १५ ॥

तत्र स्वयङ्कर्तृकक्रियेच्छाऽभिधानं कुर्यामिति, सम्बोध्यकर्तृकक्रियेच्छाऽभिधानं कुर्या इति, शेषकर्तृकाक्रियेच्छाऽभिधानं कुर्वीतेति । तथाचाऽ 'ग्निकामो दारुणी मथ्नीयादि' त्यस्य लौकिकवाक्यस्यायमर्थः सम्पद्यते— 'अग्निकामस्य दारुमथने प्रवृत्तिर्ममेष्टे' ति । ततः श्रोताऽनुमिनोति, नूनं दारुमथनयत्नोऽग्नेरुपाय इति । यद्विषयो हि प्रयत्नो यस्याप्तेनेष्यते, स तस्यापेक्षितहेतुः । तथा तेनावगतश्च, यथा ममैव पुत्रादेर्भोजनविषय इति व्याप्तेः । 'विषं न भक्षयेदि' त्यस्य तु—'विषभक्षणगोचरा प्रवृत्तिर्मम नेष्टे' त्यर्थः । ततोऽपि श्रोताऽनुमिनोति, नूनं विषभक्षणभावना अनिष्टसाधनम् । यद्विषयो हि प्रयत्नः कर्तुरभिमतसाधकोऽप्याप्तेन नेष्यते, स ततोऽधिकतरानर्थहेतुः । तथा तेनावगतश्च, यथा ममैव पुत्रादेः क्रीडाकर्दमविषभक्षणादिविषय इति व्याप्तेः ।

---

र्शनादिनिष्टसाधनमपि भवतीत्य शङ्क्य, यागीयपशुहिंसायाः पाषण्डेन प्रतिषेधेऽप्यनिष्टसाधनत्वं नास्तीत्याह — अर्थविपर्ययेति । प्रमाणबाधितार्थविषयत्वेन पाषण्डागमस्येवास्याप्यप्रामाण्यप्रसङ्गादिति भावः । ननु 'गङ्गायां घोष' इत्यत्रेव तात्पर्यतो 'न हन्यादि' त्यस्यापि निषेध्यानिष्टसाधनत्वे तात्पर्यमित्याशङ्क्य निराकरोति — न विधिनिषेधयोरिति । अविनाभावेति । यत्र लक्षणीयाऽर्थेनाविनाभावस्तदुद्देशेन प्रयोगश्च तत्रैव लक्षणा । प्रकृते 'न हन्यादि' ति वाक्यमन्योद्देशेन न प्रयुक्तम्, न वाऽनिष्टसाधनत्वेनाविनाभाव इति भावः । स्वमतमाह — विधिरिति । प्रवृत्त्यादिविषयकाऽऽप्ताभिप्रायो विधिर्लिङर्थः । तेनानुमे-

लौकिके एव वाक्येऽयं प्रकारः कदाचिद्[illegible]त न तु वैदिकेषु, तेषु पुरुषस्य निरस्तत्वादिति चेन्न । निरासहेतोरभावात् । तदास्तित्वेऽपि प्रमाणं नास्तीति चेत्; मा भूदन्यत्, विधिरेव तावद् गर्भ इव पुंयोगे प्रमाणं श्रुतिकुमार्याः किमत्र क्रियताम् । लिङो वा लौकिकार्थातिक्रमे य एव लौकिकास्त एव वैदिकास्त एव चैषामर्था इति विप्लवेत । तथाच जबगडदशादिवदनर्थकत्वप्रसङ्ग इति भव सुस्थः ।

स्यादेतत् । तथापि वक्तॄणामुपाध्यायानामेवाभिप्रायो वेदे विधिरस्तु कृतं स्वतन्त्रेण वक्त्रा परमेश्वरेणेति चेन्न । तेषामनुवक्तृतयाऽभ्यासाभिप्रायमात्रेण प्रवृत्तेः शुकादिवत्तथाविधाभिप्रायाभावात् । भावे वा न राजशासनानुवादिनोऽभिप्राय आज्ञा, किं नाम राज्ञ एवेति लौकिकोऽनुभवः । श्रुतेः खल्वपि—

कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १६ ॥

न सन्त्येव हि वेदभागा यत्र परमेश्वरो न गीयते । तथाहि । स्रष्टृत्वेन पुरुषसूक्तेषु, विभूत्या रुद्रेषु, शब्दब्रह्मत्वेन मण्डलब्राह्मणेषु, प्रपञ्चं पुरस्कृत्य निष्प्रपञ्चतयोपनिषत्सु, यज्ञपुरुषत्वेन मन्त्रविधिषु, देहाविर्भावैरुपाख्यानेषु, उपास्यत्वेन च सर्वत्रेति ।

सिद्धार्थतया न ते प्रमाणमिति चेन्न । तद्धेतोः कारणदोषशङ्कानिरासस्य भाव्यभूतार्थसाधारणत्वात् । अन्यत्रामीषां तात्पर्यमिति चेत्; स्वार्थप्रतिपादनद्वारा, शब्दमात्रतया वा ? प्रथमे स्वार्थेऽपि

---

येष्टसाधनतैव प्रवर्तिकेति कारिकार्थः । शुकादिवदिति । उपाध्यायानामतीन्द्रियार्थगोचरज्ञानाभावात् तत्रेच्छा न सम्भवतीति शुकादीनामिव तावत्पदज्ञानमात्राद्विवक्षातश्चोच्चारणमिति भावः । षष्ठं हेतुमाह—श्रुतेरिति । मुख्यार्थबाधाभावाच्छ्रुतेस्तत्रैव तात्पर्यम्, 'स्वर्गकामो यजेते' त्यादिविधीनामिवेत्याह—स्वार्थद्वारेति । शब्दमात्रतयेति । स्वार्थमप्रतिपाद्येत्यर्थः । स्वार्थमप्रतिपाद्यैवान्यपरत्वे

प्रामाण्यमेषितव्यम् । तस्यार्थस्यानन्यप्रमाणकत्वात् । अत एव तस्य स्मारकत्वमित्यपि मिथ्या । तत्प्रतिपादकत्वेऽपि न तत्र तात्पर्यमिति चेत्; स्वार्थापरित्यागे ज्योतिःशास्त्रवदन्यत्रापि तात्पर्ये को दोषः । अन्यथा स्वर्गनरकव्रात्यश्रोत्रियादिस्वरूपप्रतिपादकानामप्रामाण्ये बहु विप्लवेत । तत्राबाधनात्तथेति चेत्; तुल्यम् ।

न तादृगर्थः क्वचित् दृष्ट इति चेत्; स्वर्गादयोऽपि तथा । तन्मिथ्यात्वे तदर्थिनामप्रवृत्तौ विधानानर्थक्यप्रसङ्ग इति चेत्; इहापि तदुपासनाविधानानर्थक्यप्रसङ्गः । तन्मिथ्यात्वे हि सालोक्यसायुज्यादिफलमिथ्यात्वे कः प्रेक्षावांस्तमुपासीतेति तुल्यमिति ।

वाक्यादपि । संसर्गभेदप्रतिपादकत्वं ह्यत्र वाक्यत्वमभिप्रेतम् । तथाच यत्पदकदम्बकं यत्संसर्गभेदप्रतिपादकं, तत् तदनपेक्षसंसर्गज्ञानपूर्वकं, यथा लौकिकं, तथाच वैदिकमिति प्रयोगः । विपक्षे च बाधकमुक्तम् ! सङ्ख्याविशेषादपि —

स्यामभूवं भविष्यामीत्यादिसङ्ख्या च वक्तृगा ।
समाख्याऽपि न शाखानामाद्यप्रवचनादृते ॥ १७ ॥

कार्यतया हि प्राक् सङ्ख्योक्ता, सम्प्रति तु प्रतिपाद्यतयोच्यते । तथाह्युत्तमपुरुषाभिहिता सङ्ख्या वक्तारमन्वेतीति सुप्रसिद्धम् । अस्ति च तत्प्रयोगः प्रायशो वेदे । ततस्तदभिहितया तयाऽपि स एवानुगन्तव्यः । अन्यथाऽनन्वयप्रसङ्गात् ।

अथवा समाख्याविशेषः सङ्ख्याविशेष उच्यते । काठकं कालापकमित्यादयो हि समाख्याविशेषाः शाखाविशेषाणामनुस्मर्यन्ते । ते च

---

दोषमाह — अन्यथा स्वर्गनरकेति । सप्तमं हेतुमाह — वाक्यादिति । भेदो, विशेषः । वेदवाक्यं स्वसमानविषयकज्ञानजन्यं, वाक्यत्वाल्लौकिकवाक्यवदित्यनुमाने तात्पर्यम् । विपक्षे चेति । पुरुषगुणाभावे तज्जन्यप्रमात्वं न स्यादित्यर्थः । अष्टमं हेतुमाह — समाख्याविशेषादपीति । तयाऽपीति । संख्ययाऽपीत्यर्थः । प्रकारान्तरेण व्याकरोति — अथवेति । विशेष इति । ब्राह्मणत्व-

न प्रवचनमात्रनिबन्धनाः, प्रवक्तॄणामनन्तत्वात् । नापि प्रकृष्टवचननिमित्ताः । उपाध्यायेभ्योऽपि प्रकर्षे प्रत्युतान्यथाकरणदोषात् । तत्पाठानुकरणे च प्रकर्षाभावात् । कतिचनादौ संसारे प्रकृष्टाः प्रवक्तार इति को नियामक इति । नाप्याद्यस्य वक्तुः समाख्येति युक्तम् । भवद्भिस्तदनभ्युपगमात् । अभ्युपगमे वा स एवाऽस्माकं वेदकार इति वृथा विप्रतिपत्तिः ।

स्यादेतत् । ब्राह्मणत्वे सत्यवान्तरजातिभेदा एव कठत्वादयः । तदध्येया तदनुष्ठेयार्था च शाखा तासमाख्यया व्यपदिश्यते इति किमनुपपन्नम् । न । क्षत्रियादेरपि तत्रैवाधिकारात् । न च यो ब्राह्मणस्य विशेषः, स क्षत्रियादौ सम्भवति । न च क्षत्रियादेरन्यो वेद इत्यस्ति । न च कठाः काठकमेवाधीयते तदर्थमेवानुतिष्ठन्तीति नियमः । शाखासञ्चारस्यापि प्रायशो दर्शनात् । प्रागेवायं नियम आसीदिदानीमयं विप्लवते इति चेत्; विप्लव एव तर्हि सर्वदा, कठाद्यवान्तरजातिविप्लवादित्यगतिरेवेयम् । तस्मादाद्यप्रवक्तृवचननिमित्त एवायं समाख्याविशेषसम्बन्ध इत्येव साध्विति ।

स एवं भगवान् श्रुतोऽनुमितश्च, कैश्चित् साक्षादपि दृश्यते प्रमेयत्वादेर्घटवत् । ननु तत्सामग्रीरहितः कथं द्रष्टव्यः । सा हि बहिरिन्द्रियगर्भा मनोगर्भा वा तत्र न सम्भवति । चक्षुरादेर्नियतविषयत्वात्,

---

व्याप्यजातिविशेष इत्यर्थः । उपसंहरति—**तस्मादिति** । सर्गादावीश्वरेण कठादिशरीरमधिष्ठाय या शाखा कृता सा तत्समाख्येति भावः । श्रौतकठादिपदानि किञ्चित्प्रवक्तृकवाक्यवाचकानि, वाक्यवाचकपदत्वात्, मनुसंहितापदवदित्यनुमानमत्रानुसन्धेयं मानम् । एतावता प्रबन्धेन मननरूपामुपासनां प्रतिज्ञातां निर्वाह्याऽनुमितिरूपविशेषदर्शनस्य प्रत्यक्षभ्रमानुच्छेदकत्वेन न तस्या मोक्षहेतुत्वम्, अपि तु तत्प्रत्यक्षमेवेति वक्तुमुपक्रमते — **स एवमित्यादिना** । इन्द्रियादीनां नियतबाह्यार्थमात्रप्रवृत्तत्वान्मनसो बहिरस्वतन्त्रतया च तत्प्रयक्षे सामग्री नास्तीत्याशङ्क्य यथा स्वप्रज्ञाने सहकारिविशेषसमवहितस्य मनसः स्वातन्त्र्यमेवं योगजधर्मसहकृत

मनसो बहिरस्वातन्त्र्यात् । तदुक्तं, "हेत्वभावे फलाभावादि"त्यादि । न । कार्यैकव्यङ्ग्यायाः सामग्र्या निषेद्धुमशक्यत्वात् । अपि च । दृश्यते तावद्बहिरिन्द्रियोपरमेऽपि असन्निहितदेशकालार्थ साक्षात्कारः स्वप्ने । न च स्मृतिरेवासौ पटीयसी । स्मरामि स्मृतं वेति स्वप्नानुसन्धानाभावात्, पश्यामि दृष्टमित्यनुव्यवसायात् । न चारोपितं तत्रानुभवत्वम् । अबाधनात् । अननुभूतस्यापि स्वशिरश्छेदनादेरवभासनाच्च । स्मृतिविपर्यासोऽसाविति चेत्; यदि स्मृतिविषये विपर्यास इत्यर्थः, तदाऽनुमन्यामहे । अथ स्मृतावेवानुभवत्वविपर्यासः इति, तदा प्रागेव निरस्तः । न च सम्भवत्यपि । न ह्यन्येनाकारेणाध्यवसितोऽन्येन ज्ञानावच्छेदकतयाऽध्यवसीयते तथाच "स घट" इत्युत्पन्नायां स्मृतौ भ्राम्यतः 'तं घटमनुभवामी'ति स्यात्, न त्वयं घटमिति । न ह्ययं घट इति स्मृतेराकारः । तस्मादनुभव एवासौ स्वीकर्तव्यः ।

अस्ति च स्वप्नानुभवस्यापि कस्यचित् सत्यत्वं, संवादात् । तच्च काकतालीयमपि न निर्निमित्तम् । सर्वस्वप्नज्ञानानामपि तथात्वप्रसङ्गात् । हेतुश्चात्र धर्म एव । स च कर्मजवत् योगजोऽपि योगविधेरवसेयः । कर्मयोगविध्योस्तुल्ययोगक्षेमत्वात् ।

तस्मात् योगिनामनुभवो धर्मजत्वात् प्रमा, साक्षात्कारित्वात् प्रत्यक्षफलं, धर्माननुगृहीतभावनामात्रप्रभवस्तु न प्रमेति विभाग इति । अतस्तत्सामग्रीविरहोऽसिद्धः ।

तथापि विपक्षे किं बाधकमिति चेत्; 'द्वे ब्रह्मणी वेदितव्ये' इत्यादियोगविधिवैयर्थ्यप्रसङ्गः, अशक्यानुष्ठानोपायोपदेशकत्वात् । न चासाक्षात्कारिज्ञानविधानमेतत् । अर्थज्ञानावधिनाऽध्ययनविधिनैव तस्य

---

मन एव तत्र समर्थमिति दर्शयति — दृश्यते तावदित्यादिना । पटीयस्त्वमसन्दिग्धविषयत्वम् । अनुमन्यामह इति । ज्ञानविषये विपर्यासस्त्विष्ट एव । स्वप्नस्य प्रायेण भ्रमरूपत्वादिति भावः । न च सम्भवतीति । स्मृतावनुभवत्वविपर्यास इति भावः । अर्थज्ञानावधिनेति । अध्ययनविधेरर्थज्ञानपर्यन्तत्वात्तेनैव परोक्ष-

गतार्थत्वादिति । एतेन परमाण्वादयो व्याख्याता इति ।

तदेनमेवम्भूतमधिकृत्य श्रूयते - 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति, 'एकमेवाद्वितीय'मिति, 'पश्यत्यचक्षुः स शृणोत्यकर्ण' इति, 'द्वे ब्रह्मणी वेदितव्ये परश्चापरमेव चे' ति, 'यज्ञेन यज्ञमयजन्त देवा' इति, 'यज्ञा वै देवा इति, 'यज्ञो वै विष्णु' रित्यादि । स्मर्यते च,-

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज,-इति ।
मदर्थं कर्म कौन्तेय, मुक्तसङ्गः समाचर,-इति ।
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः,-इति ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते,-इत्यादि ।

अनुशिष्यते च साङ्ख्यप्रवचने ईश्वरप्रणिधानम् । तमिमं ज्योतिष्टोमादिभिरिष्टैः, प्रासादादिना पूर्तेन, शीतातपसहनादिना तपसा, अहिंसादिभिर्यमैः, शौचसन्तोषादिभिर्नियमैः, आसनप्राणायामादिना योगेन, महर्षयोऽपि विविदिषन्ति । तस्मिन ज्ञाते सर्वमिदं ज्ञातं भवतीत्येवं विज्ञाय श्रुत्वैकतानस्तत्परो भवेत् । यत्रैवं गीयते, --

मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति;-इति ।

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक, त्वयैव कृपया ते भावनीया नराः ॥१८॥

---

ज्ञानसिद्धेरिति भावः । परमाण्वादयोऽपि योगिप्रत्यक्षगम्या इत्याह-**एतेनेति** । न द्रष्टुरित्यनेन, पश्यत्यचक्षुरित्यनेन च नित्यज्ञानवत्त्वं, अद्वितीयमित्यनेन स्वसजातीयद्वितीयरहितत्वं च दर्शितम् । परं=परमेश्वरः अपरं = हिरण्यगर्भः । ये त्वेवं व्युत्पादितेऽपि त्वयि नाश्वासं कुर्वन्ति, ते त्वयैव क्रमेणानुग्राह्या इत्याह — **इत्येवमिति** । प्रस्तुतविप्रतीपविधयः, ईश्वरे विप्रतिपन्नप्रकारा इत्यर्थः । अस्माकं

अस्माकन्तु निसर्गसुन्दर, चिराच्चेतो निमग्नं त्वयी—
त्यद्धाऽऽनन्दनिधे, तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ, त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१९॥

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्रीर्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा ततः किममरेशगुरोर्गुरुस्तु प्रीतोऽस्त्वनेन पदपीठसमर्पितेन ॥२०॥

॥ ० ॥ इति न्यायाचार्यपदाङ्कितमहामहोपाध्यायश्रीमदुदयन-
विरचितं न्यायकुसुमाञ्जलिप्रकरणं समाप्तम् ॥ ० ॥
ॐ तत्सत् । ब्रह्मार्पणं भवतु । शुभमस्तु । श्रीरस्तु ॥
॥ इति श्रीन्यायकुसुमाञ्जलौ पञ्चमस्तबकः ॥ ४ ॥

---

त्वयि निरन्तरा श्रद्धेत्याह—**अस्माकं त्विति** । एषः = न्यायकुसुमाञ्जलिः, दक्षिण वामकौ = अनुकूलप्रतिकूलौ । वासयेन्न वा वासयेन्न ततः किञ्चित्फलम् । पदपीठ निवेशितेनानेन अमरेशगुरोरपि गुरुः, पितामहस्यापि पिता परमेश्वरः प्रीतो भूयादित्याशीराशास्यति—**इत्येष नीतीति** ।

यद्यत्र दोषाः पदमादधीरन् तदा ममैवास्तु प्रमादभूमा ।
गुणो यदि स्याद्गुरुपादपद्मपरागलेशस्य विशेष एव ।
ईशस्य चरणद्वन्द्वे मूलग्रन्थो निवेशितः ।
गुरूणां चरणद्वन्द्वे टीकाऽप्येषा निवेद्यते ॥

इति श्रीमद्रामामूर्तिबुधेन्द्रचरणकमलसेवासमासादितन्यायविद्यावैशद्येन
श्रीमद्वरदाचार्यवर्यव्यवस्थापितनारसिंहसंस्कृतकलाशाला-
न्यायालङ्कारपण्डितेन सोमशेखरशास्त्रिणा निर्मि-
तायां कुसुमाञ्जलिटिप्पण्यां '**आमोदसमाख्यायां**'
पञ्चमः स्तबकः ।

॥ शुभमस्तु ॥

